

# श्रीमद्भगवद्गीतोपनिषद्वैदिकभाष्यम्

श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णात-
पण्डितस्वामिहरिप्रसादवैदिकमुनिविरचितम् ।



तच्च विरचयित्रा स्वयं,

बाम्बे मेशीननाम्नि मुद्रणालये, लवपुरे,

पं० श्रीकृष्ण-दीक्षित-मुद्रकद्वारा मुद्रापयित्वा प्राकाश्यं नीतम् ।



संवत् १९९३ विक्रमी, सन् १९३६ ईस्वी ।



प्रथमवार १००० ] [ मूल्य १॥)

स्वामि हरि सिंह:। मांस भक्षा: सुरा

पाना मूर्खा श्चाक्षर वर्जिता:। पशुभि:

पुरुषाकारै र्भाराक्रान्ता च मेदिनी॥

जम्बुनप्राची पिंगा रसपाति रिव आश्रय कनकं

गतच्छाय श्चन्द्रो बुध्यजन इव ग्राम्य सदसि॥

तथा दीना स्तारा नृपतय इवानुद्यम

परा न राजन्ते दीपा द्रविण रहितानामिव

गृहा:॥ १ सुवर्णकार २ ब्राह्मण, ३ क्षत्रिय,

४ वैश्यों की कन्या। कलु जाइओ रे - इति ५ -

वसना राया - ६ पात शाही के शब्द से पीछे है।

जीवब्रह्मणोरभेदानिश्चयत्वं ज्ञानत्वम्

इति वेदान्त मते ज्ञानस्य स्वरूपम्। जीवब्रह्मै

कत्वं प्रतिवेदान्त प्रमेयत्वम्। करुणे दोष

त्रयं मल विक्षेपाऽऽवरण रूपम्, मलं = पापम्, दोष: = चंचलता

आवरणम् - अज्ञानम्। शस्त्रपाणि: = हस्ते श

स्त्रं रहित्वा हन्ता, मारने को उद्यत,

स एव पापिष्ठुतमो य: कुर्यात् कुल

नाशनम्।



# श्रीमद्भगवद्गीतोपनिषद्वैदिकभाष्यम्

श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णात-
पण्डितस्वामिहरिप्रसादवैदिकमुनिविरचितम् ।



तच्च विरचयित्रा स्वयं,

बाम्बे मेशीननाम्नि मुद्रणालये, लवपुरे,
पं० श्रीकृष्ण-दीक्षित-मुद्रकद्वारा मुद्रापयित्वा प्राकाश्यं नीतम् ।



संवत् १९९३ विक्रमी, सन् १९३६ ईस्वी ।।



प्रथमवार १००० ] [ मूल्य १॥)

ॐ

# "उपोद्घातः" ।

भारतं यस्य देशस्य, नाम प्राहुर्मनीषिणः ।
सिन्धुनाम्ना तेमवाहुर्ऋषयो मन्त्रदर्शिनः ॥ १ ॥
सिन्धुहिन्दू समानार्थौ मन्यन्ते वेदपण्डिताः ।
राजानः सिन्धुदेशस्य सिन्धवो हिन्दवो मताः ॥ २ ॥
हिन्दूनां भारतेन्दूनां सर्वेषां धर्मपुस्तकम् ।
ऋग्वेदः सर्ववेदेषु पठनीयो दिवानिशम् ॥ ३ ॥
तदशक्तौ महाभागाः ! गीता वेदार्थदर्शिका ।
पठितव्या दिवानक्तं वैदिकभाष्यसंयुता ॥ ४ ॥
ऋग्वेदो गीतया सार्धं, श्रद्धया येन पठ्यते ।
प्रत्यहं भोगमोक्षाभ्यां, स निश्चयेन युज्यते ॥ ५ ॥

सम्प्रति यस्य देशस्य नाम भारतमिति जेगीयते, मन्त्रकाले तस्यैव देशस्य नाम सिन्धुरिति पप्रथे । यत्कारणं मन्त्रद्रष्टार ऋषयः स्वदृष्टमन्त्रेषु सर्वत्र देशस्यास्य नाम सिन्धुरित्येतदेवामनन्ति, न भारतं नाप्यार्यावर्तम् । प्रथितं ह्याम्नायते नाप्रथितमिति नियमः । नहि यन्न प्रथते, तदाम्नायते, यत् प्रथते, तन्नाम्नायते चेति युज्यते । मन्त्रदर्शिन ऋषयः स्वदृष्टमन्त्रेषु सर्वत्र देशस्यास्य नाम सिन्धुरित्यामनन्ति, तत्रैतदुदाहृतं भवति—

**"अमन्दान् स्तोमान् प्र भरे मनीषा, सिन्धावधिक्षियतो भाव्यस्य । यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः"** (ऋ० १।१२६।१)

इति । सिन्धौ = सिन्धुनाम्नि भारते देशे, अधिक्षियतः = "अधिरीश्वरे" (अष्टा० १।४।९७) इति पाणिनिः, अधीश्वरो भूत्वा क्षियतो निवसतः, सिन्धुनाम्नो भारतस्य सम्राजः, इति यावत्, भाव्यस्य=भावयव्यस्य स्वनयस्य, स्वनयो भावयव्यपुत्रः, सवान्=सोमयागान् । **"इन्द्रो महां सिन्धुमाशयानं, मायाविनं वृत्रमस्फुरन्निः । अरेजेतां रोदसी भियाने कनिक्रदतो वृष्णो अस्य**

वज्रात्" (ऋ० २ । ११ । ९) "**द्वाविमौ वातौ वात आ, सिन्धोरा परावतः । दक्षं ते अन्य आ वातु पराऽन्यो वातु यद् रपः**" (ऋ० १० । १३७ । २) इति च । सिन्धुरत्र समुद्रः, इति त्वपव्याख्यानम् । वेदनिघण्टौ सिन्धुरित्यस्य समुद्रनामसु पाठाभावात् "**समुद्रेण सिन्धवः**" (ऋ० ३ । ३६ । ७) "**समुद्रे न सिन्धवः**" (ऋ० ६ । १९ । ५) "**समुद्रं न सिन्धवः**" (ऋ० ६ । ३६ । ३) "**समुद्रायेव सिन्धवः**" (ऋ० ८ । ६ । २४) "**समुद्रमिव सिन्धवः**" (ऋ० ८ । ६ । ३५) इत्यादिषु वेदमन्त्रेषु च समुद्रतो भेदेन सिन्धोराम्नानदर्शनात् मन्त्रद्दशामृषीणां सिन्धुशब्दः समुद्रवचनो नाभिमतः, इति गम्यते । तथा च नदीनाम, देशनाम, देशस्वामिनाम, त्रयमेतत् परिहाय न चतुर्थवचनः सिन्धुशब्दः कचिदृग्वेदमन्त्रेषु प्रयुज्यते, इति वैदिकसमयोऽप्युपपद्यतेतराम् । तस्मादुदाहृतमन्त्रेषु सिन्धुशब्दो न समुद्रवचनः, किन्तु देशवचन इति युक्तमुदाहृतं भवति । तदित्थं मन्त्रद्रष्टॄणामृषीणां सिन्धुनामगोचरस्याम्नानस्य, भारतार्यावर्तनामगोचरस्य चानाम्नानस्य दर्शनादनुमिमते तावदनुमातारः पुरातत्त्वान्वेषिणो वेदपण्डिताः "नूनं मन्त्रकाले भारतस्यास्य नामैकं सिन्धुरित्येवापप्रथत्, न भारतं, नाप्यार्यावर्तः" इति । नन्वेवमभ्युपगमेऽनिष्टमापद्येत, किं? पुरस्तात् नाम, पश्चाद् वेदमन्त्राः इति । अत्रोच्यते—यथा हि पुरस्तात् मनुष्याणां शरीराकृतयः, तदनु तासां मनुष्यनाम, तत्पश्चात् "**त्वया वयं सुवृधा ब्रह्मणस्पते! स्पार्हा वसु मनुष्या ददीमहि**" (ऋ० २ । २३ । ९) इत्यादयो वेदमन्त्राः, यथा वा पूर्वमार्यदस्यूनां मूर्तयः, तदनु तासामार्यदस्युनामानि, तत्पश्चाद् "**विजानीह्यार्यान् ये च दस्यवः**" (ऋ० १ । ५१ । ८) इत्यादयो वेदमन्त्राः, एवं पुरस्ताद् देशः, तदनु तस्य सिन्धुनाम, तत्पश्चात् "**अमन्दान् स्तोमान् प्र भरे मनीषा, सिन्धावधि क्षियतो भाव्यस्य**" (ऋ० १ । १२६ । १) इत्यादयो वेदमन्त्राः, इति सन्तोष्टव्यम् । इष्टमेतद्, एतदनिष्टमिति चायुष्मता यथावेदं मन्तव्यं, न यथाबुद्धिकल्पनम् । मनुष्यबुद्धीनामप्रतिष्ठितत्वेन तत्प्रभवकल्पनाप्रतिष्ठानानुपपत्तेः ।

अतएव च वेदवादिनो विद्वांसः स्वमन्तव्यं यथावेदमनुविदधते, न यथामन्तव्यं भगवन्तं वेदं व्याचक्षते। सोऽयं सनातनः पन्थाः, स एव च मार्गः श्रेयान्। नन्वेवं तर्हि **"सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक्। वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे"** (मनु० १।२१) इति स्मृतिर्विरुध्येत?। सत्यम्। चेदेषा स्मृतिः "पूर्वमृषयो भगवन्तं वेदमद्राक्षुः, पश्चादस्मत्पूर्वजाः ऋषिदृष्टं भगवन्तं तमधीत्य बुद्धिस्थेभ्यस्तच्छब्देभ्यो नदीनामानि देशनामानि च विदधुरिति स्मारयेत्, तदाऽवश्यं स्मृतिर्विरुध्येत। न चैतदसौ स्मारयति। किं तर्हि स्मारयति? स खल्वग्रे जातो हिरण्यगर्भो नाम ब्रह्मा सुप्तप्रबुद्ध इव पूर्वेद्युरभ्यस्तं संस्कारात्मना स्वबुद्धावात्मनि महति स्थितं पूर्वकल्पीयवेदमधीयन्नुपस्थितेभ्यो वेदशब्देभ्यो विश्वेषां जडचेतनानां सूर्यचन्द्रमनुष्यपशुपक्षिसरीसृपादीनां पदार्थानां सूर्यचन्द्रमनुष्यपशुपक्षिसरीसृपादिनामानि, तेषां कर्माणि, तेषां सम्यगवस्थानानि च पृथक् पृथङ् निर्ममे, किमुक्तं भवति? पूर्वस्मिन् कल्पे ये पदार्थाः यथाऽऽसन्, तान् सर्वान् अस्मिन् कल्पे तद्वदेव तत्तदात्मना तत्तन्नाम्ना च हिरण्यगर्भो ब्रह्मा निरमास्त, तेषां कर्माणि, तेषां स्थानानि च न्याय्यानि पृथक् पृथगजीजनदिति स्मृतिरधिगमयति **"सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्"** (ऋ० १०।१९०।३) इति मन्त्रवर्णाश्रयात्। यथा पूर्वस्मिन् कल्पे सूर्यचन्द्रप्रभृति जडचेतनात्मकं जगत् सर्वमचीक्लृपत्, तथाऽस्मिन्नपि कल्पे विधाता परमेश्वरोऽकल्पयदिति मन्त्रवर्णपदार्थः। पूर्वं प्रकृतिशरीरः परमेश्वरः, ततो महत्तत्त्वशरीरो हिरण्यगर्भो ब्रह्मा, ततो विराट्, विराजो मनुष्याः पशवः पक्षिणो नद्यो देशाः, नदीनामानि, देशनामानि च, ततःपश्चाद् ऋषयो मन्त्रद्रष्टारः, इति हि वैदिको मन्त्रदर्शनक्रमः। तेन च नास्ति स्मृतेरस्याः कश्चिद् विरोधः। ननु स्मृत्याऽनया विरोधो मा भूत्, इतिहासस्तु भगवति वेदे प्रसज्येत, स चापि बहु दूषणमिति चेत्?। अत्रोच्यते। यद्येवमितिहासो भगवति वेदे प्रसज्यते, प्रसज्यतां नाम, न वयं तस्य वारणाय प्रभवामः। नह्येतिहासो भगवति वेदे प्रसज्यते, तावता भगवतो वेदस्यार्थः कदर्थयितव्यो भवति। न चेतिहासोऽप्यस्ति किञ्चिद् दूषणम्, अपि तु सोऽस्ति भगवतो वेदस्य भूरि

भूषणम्। यथा प्राक्तनाः मान्त्रकालिकाः सम्राजो राजानश्च मान्त्रकालिकान् ऋषीन् मन्त्रद्रशः काले काले श्रद्धया समाहूय दक्षिणादानादिभिराद्रषत, तथाऽर्वाक्तना अपि धनसनयो वेदवादिनो गृहस्थाः सामयिकान् मुनीन् वेदविदुषो ब्राह्मणान् साधूंश्च काले काले यथाश्रद्धमाहूय दक्षिणादानादिभिराद्रियेरन्नित्युपदेशे तात्पर्यात्। उपदेशरत्नानां चैतादृक्षाणामनेकेषामितिहासपिहितानामाकरो भगवान् वेद इति मा नु भैषीरेतस्मादेकस्मादितिहासादायुष्मन्!। कुतस्तर्हि वेदवादिभिः सर्वैरितिहासो भगवति वेदे नाभ्युपगम्यते ?। नाभ्युपगम्यतां, किं तेन। नहि सर्वं सर्वैरभ्युपगम्यते, शक्यते वाऽभ्युपगन्तुम् प्रकृतिवैचि त्र्यात्। तथापिवदामो वेदवादिभिः सर्वै रितिहासोऽभ्युपगम्यते। तेषां कैश्चिद् वेदवादिभिर्वास्तविकः, कैश्चिद् वेदवादिभिश्च काल्पनिक इत्यवान्तरविशेषे सत्यपि नास्त्यन्यत् किञ्चिद् विशेषान्तरमित्युपरम्यते।

अथ भारतनाम्नो निमित्तं यथा महाशक्तिः सम्राट् भरत इति पौराणिकाः ऐतिहासिकाश्च सङ्गिरन्ते, तथा सिन्धुनाम्नो निमित्तं महाप्रभावा सरितां माता सिन्धुरिति वैदिका ऐतिहासिकाश्चातिष्ठन्ते। मन्त्रवेलायामस्य भारतस्य पश्चिमसीमा समुद्रान्ता रसा सरिदासीत्, यां किल विश्वकोषकारः खुराशाणदेशान्तर्वाहिनीम् अवस्तापुस्तकलिखितां रंहां नदीमाह, वैदिकाश्च महाश्व-स्तोमीये देशे "वागुदात्त" नगरतलवाहिनीं त्रिपथगां रसामाचक्षते, तदिदं मान्त्रकालिकस्य भारतसम्राजो हिरण्यगर्भस्य प्राजापत्यस्य सीमामन्त्रतो विस्पष्टं प्रतिपद्यते। तत्र हि मन्त्रे तदानींतनस्य भारतस्यास्योत्तरसीमा हिमालयपर्वतमाला, पूर्वदक्षिणसीमा समुद्रः, पश्चिमसीमा च समुद्रान्ता रसा सरिदिति विशदं प्रतिपाद्यते। तस्यैतस्य सीमामन्त्रस्यैष आकारः "यस्येमे

**हिमवन्तो महित्वा, यस्य समुद्रं रसया सहाहुः। यस्येमाः प्रदिशो यस्य बाहू, कस्मै देवाय हविषा विधेम"** (ऋ० १०।१२१।४) इति। रसामिमामुल्लङ्घ्य पुरं प्रविशन्तीं भारतराजदूतीं सरमां पृच्छतां पणीनां द्वारपालानां **"कथं रसाया अतरः पयांसि"** (ऋ० १०।१०८।१) इति प्रश्नमन्त्रतोऽपि रसैव मन्त्रकालकस्य भारतस्यास्य पश्चिमसीमेति विज्ञायते। तदेवं पूर्वदक्षिणपश्चिमोत्तरसीमाचतुष्टयवतो भारतस्यास्य मध्ये

वहनात् महाप्रभावा सरिन्माता सिन्धुस्तन्नाम्नो निमित्तं योयुज्यते। सिन्धोरस्या महाप्रभावश्च बहुषु मन्त्रेषु मन्त्रदर्शिभिर्ऋषिभिराम्नायते, तेषां प्रियमेधसूनोः सिन्धुक्षिदृषेस्त्रयो मन्त्रा इहाप्यधस्तादुल्लिख्यन्ते—

**"दिवि स्वनो यतते भूम्योपरि, अनन्तं शुष्ममुदियर्ति भानुना।**
**अभ्रादिव प्रस्तनयन्ति वृष्टयः, सिन्धुर्यदेति वृषभो न रोरुवत्"॥३॥**
**"अभि त्वा सिन्धो! शिशुमिन्न मातरो वाश्रा अर्षन्ति पयसेव धेनवः।**
**राजेव युध्वा नयसि त्वमित् सिचौ, यदासामग्रं प्रवतामिनक्षसि"॥४॥**
**"स्वश्वा सिन्धुः सुरथा सुवासाः, हिरण्ययी सुकृता वाजिनीवती।**
**ऊर्णावती युवतिः सीलमावती, उताधिवस्ते सुभगा मधुवृधम्"॥८॥**

( ऋ० १०। ७५। ३-४-८ ) इति।

प्राचीनसाहित्यात्मके चाथर्ववेदे भारतस्यास्यास्ति सिन्धुनाम्नो निमित्तं सरिन्माता सिन्धुरित्युपपादयितुमेव **"सिन्धुपत्नीः सिन्धुराज्ञीः सर्वाः या नद्यः स्तन"** ( अथर्व०६।२४।३) इति मन्त्रः पठ्यते। स्फुटश्च सर्वासां नदीनां स्वामिनी सिन्धुरिति मन्त्रार्थः। नहि सागरान्तासु गंगाद्यासु बृहतीषु नदीषु विद्यामानासु केवला सिन्धुर्नदो, नामनिमित्तत्वाभावे, सर्वासां नदीनां राज्ञी वा स्वामिनी वा कर्हिचित् पठितुं शक्यते। नामनिमित्तत्वे च तस्यास्तथा पठनं संगच्छतेतराम्, अभिव्यज्यते च तथा पठने नामनिमित्तता-निबन्धनस्तत्रादरातिशयः, इति न जातु मतिमतां पण्डितानां परोक्षम्।

यथाऽयं भारतदेशो मन्त्रकाले, लोकेषु सर्वत्र नाम्ना सिन्धुरिति व्यपदिश्यते-स्म, तथा पाणिनिमुनिकालेऽपि नाम्ना सिन्धुरिति शब्द्यते स्मेति तत्सूत्राभ्याम-वसीयते। स हि मुनिवर्य्यो भारतस्यास्य सिन्धोर्ये राजानः स्वामिनो विद्यन्ते, ते सिन्धुः, सिन्धू, सिन्धवः इति समाख्यायन्ते, छन्दसि वेदे सर्वेषां विधीनां विकल्पस्याश्रयणादेकद्विबहुवचनेषु सर्वत्राविशेषेण प्रत्ययस्य तद्राजस्य लुकः सिद्धेः, तत्साधनाय **"द्व्यच्-मगध-कलिङ्गसूरमसादण्"** ( अष्टा०४। १।१७०) इति सूत्रं सूत्रयाम्बभूव। तत्र देशवचनो द्व्यच्-शब्दः सिन्धुशब्दः,

ततश्छान्दसत्वादेकद्विबहुवचनेषु तद्राजनाम्नः प्रत्ययस्याणो लुक्। ये त्वस्य भारतस्य सिन्धौ राजानः स्वामिनो न भवन्ति, केनचिदर्थेन चेह निवसन्ति, सन्तानं चेह जनयन्ति, ते सन्तानसन्तानिनः सर्वे सैन्धवः,सैन्धवौ, सैन्धवाः, इति संज्ञायन्ते, तत्सिद्धये **"सोऽस्य निवासः"** (अष्टा०४।१।८६) **"अभिजनश्च"**(अष्टा०४।१९०) इत्यधिकृत्य**"सिन्धुतक्षशिलादिभ्योऽणञौ"**(अष्टा०४।१।६३)इति सूत्रं सूत्रयाञ्चकार। नहि स्वकाले भारतनामप्रसिद्धौ वा, आर्यावर्तनामप्रसिद्धौ वा सत्यां मुनिरसौ "सिन्धुतक्षशिलादिभ्योऽणञौ" इति सूत्रयितुमर्हति। प्रमाणभूतः खलु पाणिनिमुनिः, चेत् तदानीं भारतार्यावर्तनामनी प्रसिध्येयातां, तदाऽवश्यमेव "भारततक्षशिलादिभ्यः" इति सूत्रयेत्, आर्यावर्ततक्षशिलादिभ्यः" इति वा सूत्रं प्रणयेत्। न च तथा सूत्रयति, न वा तथा सूत्रं प्रणयति। तदिदं पाणिनिमुनिकाले भारतस्यास्य सिन्धुनामप्रसिद्धौ सुदृढमैकान्तिकं लिङ्गम्। तत्काले भारतस्यास्य सिन्धोरीश्वरत्वात् स्वामित्वादस्मत्पूर्वजाः सर्वे प्रत्येकं समुदिता वा सिन्धुः सिन्धू सिन्धवः समाख्यायिषतेति पाणिनिमुनिसूत्रप्रणयनाशयो न तिरोहितः। यथा पाणिनिमुनिसमये, तथा मन्त्रसमयेऽप्यस्मत्पूर्वजाः भारतस्यास्य सिन्धोरधिपतित्वात् सिन्धुः सिन्धू सिन्धवः समज्ञायिषतेति तत्रभवतां मन्त्रद्रष्टृणामृषीणां सिन्धुनामगोचरेभ्यो मन्त्रप्रयोगेभ्यो निश्चीयते। मन्त्रद्रष्टार ऋषयस्तावदेकस्वरेणास्मत्पूर्वजेषु तद्राजप्रत्ययान्तं सिन्धुः सिन्धू सिन्धवः, इति नामपदं मुहुर्मुहुः प्रयुञ्जते **"पृष्टो दिवि धायि-अग्निः पृथिव्यां नेता सिन्धूनां वृषभःस्तियानाम्"**( ऋ ७।५।२)।वृषभः स्तियानां=स्तिया दिया, इति गोनामनी, गवां वृषभ इव नेता सिन्धूनां= सिन्धुदेशराजानामग्निः। **"आ राजाना! मह ऋतस्य गोपा! सिन्धुपती! क्षत्रिया! यातमर्वाक्"** ( ऋ० ७।६४।२) सिन्धुपती=हे सिन्धूनाँ स्वामिनौ, पालयितारौ वा।**"एष रुक्मिभिरीयते,वाजी शुभ्रेभिरंशुभिः।पतिः सिन्धूनां भवन्"** (ऋ० ९।१५।५) एष=सोमः। **"राजा सिन्धूनां पवते पतिर्दिवः"** (ऋ० ९।८६।३३)। सिन्धूनां=

"सोमोऽस्माकं ब्राह्मणानां राजा" ( यजु० । ९ । ४० ) ( तै० सं० १ । ८ । १० ) इति याजुषमन्त्राद् ब्राह्मणमुख्यानां पञ्चजनाख्यानां सिन्धुदेशाधिपतित्वात् सिन्धूनाम, इत्यादिष्वनेकेषु मन्त्रेषु। ततो वयं निःसंशयं निश्चिनुमहे नूनं पाणिनिसमयवत् मन्त्रसमयेऽप्यास्माकीनाः पूर्वजाः सिन्धोरस्य भारतस्याखण्डैकराजत्वाल्लोकेषु सर्वत्र सिन्धुः सिन्धू सिन्धवः प्राख्यायिषतेति।

यथा हि हकारस्थाने भकारोच्चारणपद्धतिः **"युवं सिन्धूँरभिशस्तेरवद्यादग्नीषोमावमुञ्चतं गृभीतान्"** ( ऋ० १। ९३ । ५ ) **"गृभ्णामि ते सौभगत्वाय हस्तम्"** ( ऋ० १०।८५ । ३६ ) इत्यादिमन्त्रवर्णात् मान्त्रकालिकीति निःसन्देहम्, एवं सकारस्थाने हकारोच्चारणपद्धतिरपि **"सरस्वती साधयन्ती धियं नः"** (ऋ० २ । ३ । ८) **"बृहस्पते ! यो नो अभि ह्वरो दधे, स्वा तं मर्मर्तु दुच्छुना हरस्वती"** (ऋ० २ । २१ ६) इत्यादिमन्त्रवर्णात् सनातनीति निर्विचिकित्सम्। ह्वरः=कौटिल्यम्, भावेऽसुन्, आविद्धं वचः, अभिदधे=अभिधत्ते, तं स्वा=स्वकीया, दुच्छुना=शुनमिति सुखनाम, तद्रहिता, दुःखदा, हरस्वती=सरस्वती वाणी, मर्मर्तु=भृशं मारयतु। तयैव चानया सनातन्या सकारस्थाने हकारोच्चारणपद्धत्या मन्त्रद्रष्टृभिर्ऋषिभिः सेवितस्य तीर्थीभूतस्य महापुनीतस्यास्य भारतस्य सिन्धोरधिपतित्वादास्मकाः पूर्वजाः पितरः, पितामहप्रपितामहप्रभृतयश्च सर्वे, यथा सिन्धुः सिन्धू सिन्धवः, इति साभिमानमात्मानं सर्वदा सर्वत्र प्रावोचन, तथा हिन्दुः हिन्दू हिन्दवः, इत्यपि साभिमानं सजातीयेषु च विजातीयेषु च समस्तेषु लोकेषु निजसाम्राज्यमाहात्म्यप्रदर्शनस्य हेतोः सहर्षमात्मानमचकथन्। अद्यापि च तामेव सनातनीमुच्चारणपद्धतिमाश्रयन्तो गुर्जराः पाञ्चनदाश्च सर्वे हिन्दवः, सारः हारः, सब्बे हब्बे, इत्यादिकान् भूरिशः शब्दान् प्रयुञ्जाना उपलभ्यन्ते, इति न सिन्धुनामस्थाने हिन्दुनामोच्चारणं वेदविदां पण्डितानां चेतो मात्रयाऽपि विस्माययति। पद्धतेः पर्यनुयोगानर्हत्वात्। अत एव प्राचीनकोषकाराः केचन सिन्धुः सिन्धू सिन्धवः, इत्यनुदाहृत्य, हिन्दुः हिन्दू हिन्दवः, इत्युदाजह्रुः। रूढेः प्राबल्येन निरपवादं सर्वदा सर्वत्राश्रयणीयत्वात्। अर्थे च भेदाभावात्।

अदूरदर्शिनः खलु केचन मनुवंशजाः ईदृक्षे सरलेऽर्थे मुधा विवदन्ते, नितान्ते चासत्ये निष्प्रमाणकेऽर्थेऽभिनिविशन्ते, श्रद्धाजडाँश्च बालहृदयान् जनान् वाक्चतुर्येण वञ्चयन्ते। नूनमसत्यं ते प्रकटीकुर्वते, सत्यं निह्नुवते, मुधा मृषा प्रब्रुवते। सर्वथा तेषामेष प्रमादः, तथाऽपि क्षम्यते। क्षमाधर्माणो हि हिन्दवः।

**कोऽसौ हिन्दुर्भारतं यस्य देशः, कोऽसौ हिन्दुर्यस्य सेव्यः परेशः।**
**कोऽसौ हिन्दुर्हैन्दवी यस्य भाषा, ऋग्वेदाख्यो यस्य वेदो निदेशः॥१॥**
**कोऽसौ हिन्दुर्यस्य देशाभिमानः, कोऽसौ हिन्दुर्यस्य भाषाभिमानः।**
**कोऽसौ हिन्दुर्यस्य वेषादिमानः, कोऽसौ हिन्दुर्यस्य धर्मार्घप्राणः॥२॥**

**यस्येश्वरसमो नास्ति, नास्त्यृग्वेदसमोऽपरः।**
**हिन्दुधर्मसमो धर्मो नास्ति स हिन्दुरुत्तमः॥ ३ ॥**

तेषामेषां भारतस्वामिनां हिन्दूनां सर्वेषामविशेषेण धर्मपुस्तकं भगवान् ऋग्वेदः, न यजुर्वेदो न सामवेदो, नाथर्ववेदो हिन्दूनां तेषां धर्मपुस्तकं, नचेतिहासो नापि पुराणं तेषां धर्मपुस्तकम्। कुतो विज्ञायते? मूलत्वात्। यथा खलु नानाविधस्यानेकशाखोपशाखादिभेदभिन्नस्य जडचेतनात्मकस्य संसारवृक्षस्य मूलमीश्वरः, तथाऽनेकविधस्यानेकशाखोपशाखादिभेदभिन्नस्य यजुर्वेदादिलक्षणस्य संस्कृतभाषासाहित्यपादपस्य मूलमस्ति भगवानृग्वेदः। यत्कारणं, तस्मिन् भवति भवति यजुर्वेदो, भवति सामवेदो, भवत्यथर्ववेदो, भवतीतिहासो, भवति च पुराणम्। यदि च न भवेद् भगवान् ऋग्वेदो, न भवेद् यजुर्वेदो, न भवेत् सामवेदो, न भवेदथर्ववेदो, न भवेदितिहासो न भवेत् पुराणम्। यस्मिन् भवति येषां भावः, अभवति च यस्मिन् येषामभावः, तत् तेषां मूलमिति निर्विवादम्। नचेह परीक्षका अपि कर्हिचिद् विवदन्ते, न च लौकिका अपि तत्र विरुद्धं किञ्चिद् भाषन्ते। यजुर्वेदे, सामवेदेऽथर्ववेदे च भगवान् ऋग्वेदः शब्दतोऽन्वीयते, पुराणे चेतिहासे चैषोऽर्थतोऽन्वीयते। तदिदं भगवतस्तस्य मूलभावे दृढतरं लिङ्गम्। एतेन लिंगेन तस्य मूलभावः स्फुटं प्रतिपद्यते। नहि मूलत्वाभावे शब्दतो वाऽर्थतो वा यजुर्वेदादिषु स्कन्धोपस्कन्धादिकल्पेषु सर्वेषु भगवतस्तस्यान्वयः कथञ्चिदुपपद्यते। मूलं हि लोके

स्कन्धोपस्कन्धादिषु सर्वेष्वन्वीयमानं लोक्यते,नामूलम् । मूलभावेन च तस्य सर्वमूलस्य भगवतः ऋग्वेदस्य धर्मपुस्तकत्वं प्रव्यक्तमवबुध्यते । कृत्स्नस्य धर्मविषयस्य वाङ्मयसाहित्यस्य शाखिनो धर्मपुस्तकमूलादेव प्ररोहोपपत्तेः। नहि धर्मपुस्तकमूलादृते कुतश्चिन्मूलान्तराद् धर्मविषयो भाषामयसाहित्यात्मको द्रुमः कचित् कर्हिचित् प्ररोढुमर्हति । यवेभ्यो हि यवाः प्ररोहन्ति, शालिभ्यश्च शालयः । नहि यवाः उप्यन्ते, शालयश्च प्ररोहन्ति । मनुष्येषु खल्वपि लोके सम्प्रदायविशेषवतां मनुष्याणां सर्वेषां धर्मविषयस्य भाषामयसाहित्यद्रुमस्य प्ररोहः स्वधर्मपुस्तकमूलादेवोपलभ्यते,न कुतश्चित् मूलान्तरात्। आयजुर्वेदम्, आ चेतिहासपुराणेभ्यो यावानस्ति हिन्दूनां धर्मविषयस्य वाङ्मयसाहित्यात्मकस्य कल्पवृक्षस्य विग्रहः, तस्य सर्वस्य मूलं भवत्येकलो भगवानृग्वेदः, तस्य तत्र सर्वत्र शब्दतोऽर्थतश्चान्वयोपलब्धेः । अतो भगवान् ऋग्वेद एवैकलो नूनं हिन्दूनां सर्वेषामविशेषेण धर्मपुस्तकं, न यजुर्वेदो धर्मपुस्तकं न सामवेदो धर्मपुस्तकं, नाप्यथर्ववेदो धर्मपुस्तकम्, इतिहासपुराणे इति तु किमु वक्तव्यम् । **प्रथमोपादानात्**। यत्र यत्र हि संस्कृतभाषासाहित्यस्य पादपस्य विस्तारः श्राव्यते **"स होवाच-ऋग्वेदं भगवो! अध्येमि, यजुर्वेदं सामवेदमाथर्वणं चतुर्थम्, इतिहासपुराणं पञ्चमं वेदानां वेदं, पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां, भूतविद्यां, क्षत्रविद्यां, नक्षत्रविद्यां, सर्पदेवजनविद्याम्"** (छां० ७।१।२) **"ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्याः उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि"** (बृ० ४।१।२) इत्याद्यासु श्रुतिषु, तत्र सर्वत्र भगवान् ऋग्वेद एव प्रथममुपादीयते, न यजुर्वेदो न सामवेदो नाप्यथर्ववेदः । किं कारणं ? यत् कारणं समस्तस्य यजुर्वेदादिलक्षणस्य संस्कृतभाषासाहित्यस्य शाखिनोऽस्ति भगवानृग्वेदो मूलम् । नहि मूलत्वाभावे स प्रथमं सर्वत्रोपादातुं शक्यते । लोकेऽपि च प्रथमं मूलमेवोपादीयते, पश्चात् स्कन्धोपस्कन्धशाखोपशाखादि सर्वम् । न च लोकसामान्यं श्रुतिदर्शितं न्यायः कदाचिदति-

वर्तितुमुत्सहन्ते । अविश्वासप्रसङ्गात् । तत्र मुख्यं मूलं भवति, मूलादितरत स्कन्धोपस्कन्धादिसर्वममुख्यम् । न च मूलभूते मुख्ये भगवति ऋग्वेदे विद्यमाने स्कन्धोपस्कन्धादिकल्पानां यजुर्वेदादीनामितिहासपुराणान्तामुख्यानां धर्मपुस्तकत्वमभ्युपगन्तुं शक्यते, तदभ्युपगमो वा कदाचित्कथञ्चिद् युज्यते । मुख्यामुख्योर्मुख्ये कार्यसंप्रत्ययस्यैवौचित्यात् । अतो मुख्यो भगवान् ऋग्वेद एवैकलो हिन्दूनां सर्वेषामविशेषेण धर्मपुस्तकं, न यजुर्वेदो धर्मपुस्तकं, न सामवेदो धर्मपुस्तकं, नाप्यथर्ववेदो धर्मपुस्तकमिति युक्तं दरीदृश्यामहे ।

**साक्षादाम्नानात्।** "**ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः। यस्तन्न वेद किमृचा करिष्यति, य इत् तद् विदुस्ते इमे समासते**" ( ऋ० १ । १६४ । ३९ ) इति मन्त्रे हि भगवत ऋग्वेदस्य मन्त्रा ऋचो ब्रह्मणि परमेऽक्षरेऽधिनिषीदन्ति=तात्पर्येण पर्यवस्यन्ति, ज्ञेयत्वेनाक्षरं परमं ब्रह्मावगमयन्तीति साक्षादाम्नायते, न यजूंषि, न सामानि, नाथर्वाङ्गिरसा मन्त्रास्तत्राधिनिषीदन्तीत्याम्नायते। यदि यजुर्वेदः सामवेदोऽथर्ववेदोऽपि धर्मपुस्तकं विद्येत, यथा भगवान् ऋग्वेदः, तदा तेषां मन्त्राः यजूंषि सामानि आथर्वाङ्गिरसा अपि तत्राधिनिषीदन्तीत्याम्नायेत, लोकानां तेषु धर्मपुस्तकताबुद्धेर्दार्ढ्यार्थम् । यत्कारणं लोका इमे स्वीयं धर्मपुस्तकं साक्षाद्भगवद्वचनं मन्यमानाः परमं प्रमाणमध्यवस्यन्ति, तच्चास्मानक्षरं परमं ब्रह्म परमात्मानं ज्ञेयत्वेन भक्तव्यत्वेन चोपदिशति, प्राप्यत्वेन चान्ते प्रब्रवीति कैवल्यलक्षणस्य नित्यसुखस्य शश्वदुपभोगार्थमिति दृढतरं विश्वसन्ति, न च यजुर्वेदस्य, सामवेदस्याथर्ववेदस्य च मन्त्रास्तत्राधिनिषीदन्तीत्याम्नायते । अनाम्नानेन चैतेन तेषां धर्मपुस्तकत्वं निर्हन्यते, इति प्रत्यक्षम्।

**उदाहरणात्।** ब्राह्मणकृतः स्युरारण्यककृतो वा भवेयुः, उपनिषदामारण्यकेष्वन्तर्भावात्, सर्वे ते स्वस्वप्रतिपाद्यमर्थं प्रमाणीकर्तुम् ऋग्वेदस्य भगवतो मन्त्रान् "**तदेतदृचाऽभ्युक्तम्**" ( शत० ब्रा० १० । २ । ६ । ६ ) ( गो० ब्रा० १ । १ । ६ ) ( तै० ब्रा० ३ । १० । ६ । १४ ) "**तदेतदृचाऽभ्यनूक्तम्**" ( छां० उ० ३ । १२ । ५ ) "**तत्रैते द्वे ऋचौ भवतः**" ( छां० ३ । १७ । ६ )

इत्येवं तत्र तत्र प्रमाणत्वेनोदाहरन्ति,लोकानां श्रद्धातिशयोत्पादनार्थं, त्वरया चोपादानार्थम् । लोकाः हि प्रायेण स्वधर्मपुस्तकं प्रकृतितोऽतिशयेन श्रद्धधते, तत्प्रमाणीकृतं चार्थं त्वरयोपाददते । यदि च यजुःसामाथर्ववेदाः अपि धर्मपुस्तकानि भवेयुर्यथा भगवानृग्वेदः, तदा अवश्यं तेषां मन्त्रानपि "तदेतद् यजुषाऽभ्युक्तं यजुषाऽभ्यनूक्तम्, अत्र यजुर्भवति" "तदेतत् साम्नाऽभ्युक्तं, साम्नाऽभ्यनूक्तम्, "अत्र साम भवति" इत्येवं तत्र तत्र प्रमाणत्वेनोदाहरेयुः। नोदाहरन्ति। ततो निःसंशयं प्रतिपद्यामहे "न यजुर्वेदो धर्मपुस्तकं, न सामवेदो धर्मपुस्तकं, नाप्यथर्ववेदो धर्मपुस्तकमिति । ब्राह्मणेषु चारण्यकेषु च प्रमाणत्वेनोदाह्रियमाणा मन्त्राः,यजुर्वेदे सामवेदेऽथर्ववेदे च क्वचित् कृत्स्नशः क्वचिदंशश उपलभ्यमाना अपि, न ते तन्मन्त्राः कथञ्चिदाख्यातुं शक्यन्ते । यजुर्वेदे यज्ञकर्मानुष्ठानस्य सुविधार्थं,सामवेदे यज्ञकर्मानुष्ठानस्य साद्गुण्यार्थम्, अथर्ववेदे च लौकिकजनताया आदरातिशयस्योत्पादनार्थम् ऋग्वेदमन्त्राणामेव पौनःपुन्येन पाठस्य वैदिकैः सर्वैरभ्युपगमात् । तद्यथाहुः सर्ववेदभाष्यकृतः सायणाचार्याः भगवति ऋग्वेदे भाष्योपक्रमणिकायाम् "**मन्त्रकाण्डेष्वपि यजुर्वेदगतेषु तत्र तत्राध्वर्युणा प्रयोज्या ऋचो बह्वय आम्नाताः, साम्नां तु सर्वेषामृगाश्रितत्वं प्रसिद्धम्, आथर्वणिकैरपि स्वकीयसंहितायामृच एव बाहुल्येनाधीयन्ते**" इति। ये तु यजुर्वेदादिषु मुहुर्मुहुःपठितान् भगवत ऋग्वेदस्य मन्त्रान् यजुर्वेदादीनामेव मन्त्रान् आचक्षते, यथा च भगवान् ऋग्वेदो धर्मपुस्तकं, तथा यजुर्वेदः सामवेदोऽथर्ववेदोऽपि धर्मपुस्तकमित्युच्चकैरभिदधते, ते स्थूलदर्शिनो मन्दाः सर्वैर्वेदवादिभिः शिष्टैर्व्यतिरेच्याः । वेदगोचरयथार्थज्ञानाभावेन वेदवादिनां शिष्टानां परिषदोऽयोग्यत्वात् । ननु सर्वेषु ब्राह्मणेषु सर्वेषु चारण्यकेषु वेदाश्चत्वारः पापठ्यन्ते, प्रमाणं चास्थीयन्ते,यथाविधि पठनं पाठनं च तेषां चतुर्णामविशेषेण समस्ताः साम्प्रदायिकाः भाषन्ते, क्वास्ति वेदगोचरयथार्थज्ञानाभावावकाशः, इति चेद् ?। अत्रोच्यते । न भो ! वेदानां चतुष्ट्वं वयमपवदामो न वेदाश्चत्वार इति, न वा चतुर्णां तेषां प्रामाण्यं प्रतिषेधामो न ते चत्वारः प्रमाणमिति, न वा सर्वसम्मतं पठनं पाठनं वा चतुर्णां तेषां निषेधामो न चत्वारो वेदाः पठितव्याः

पाठयितव्याश्चेति, नापि ब्राह्मणेषु चारण्यकेषु च भगवानृग्वेद एवैकलः पापठ्यते, न चत्वारो वेदाः पापठ्यन्ते, इति प्रवदामः, किन्तर्हि ? तत्र चान्यत्र च, यत्र यत्र चत्वारो वेदाः पठ्यन्ते, तत्र सर्वत्रोपयुक्ततमसाहित्यदृष्ट्यैव ते चत्वारो वारं वारं पठ्यन्ते, न धर्मपुस्तकदृष्ट्येति निगदामः । धर्मपुस्तकानैक्ये जातेरैक्यस्य विधातुमशक्यत्वात् । नहि यस्या जातेरनेकानि धर्मपुस्तकानि सन्ति, तस्या ऐक्यं विधात्राऽपि कर्हिचिद् विधातुं शक्यते । जातेरैक्यं च **"अश्मन्वती रीयते संरभध्वम्"** ( ऋ० १० । ५३ । ८) **"संगच्छध्वं संवदध्वम्"** ( ऋ० १०।१९१।२ ) इत्यादिना भगवता वेदेन साक्षादुपदिश्यते, साम्प्रदायिकैर्वेदवादिभिश्च सर्वैर्नियमेनाभ्युदयस्य हेतुत्वादिष्यते, तच्च ब्राह्मणकृद्भिरारण्यककृद्भिश्च वैदिकोत्तमैर्महर्षिभिरिष्यते-तमामिति किमु वक्तव्यम् । अतो वेदेषु चतुर्षु सत्स्वपि भगवान् ऋग्वेद एवैकलः सर्वेषां हिन्दूनां धर्मपुस्तकं, न यजुर्वेदो न सामवेदो नाथर्ववेदो धर्मपुस्तकमित्यास्तां तावद्विस्तरः । उपदेशात् । स्मृतिकाराः खलु मन्वादयः कचिदन्ते कचिन्मध्ये वेदत्रयस्याध्ययनप्रवचने अभिदधतोऽप्याद्यन्तयोरेकमेव वेदमधिगन्तुम्, एकमेव वेदमभ्यसितुमुपदिशन्ति, धर्ममूलं चैकमेव वेदमनुशासति **"तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः । वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना"** (मनु० २ । १६५) । कृत्स्नः=आदितोऽन्तान्तः । अधिगन्तव्यः=अर्थतो ज्ञातव्यः, सार्थोऽध्येतव्यः । रहस्यमुपनिषदः । **"वेदमेव सदाऽभ्यस्येत्, तपस्तप्स्यन् द्विजोत्तमः । वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते"** (मनु० २ । १६६) । अभ्यासः=वारंवारमध्ययनम् । **"पितृदेवमनुष्याणां वेदश्चक्षुः सनातनम् । अशक्यं चाप्रमेयं च, वेदशास्त्रमिति स्थितिः"** ( मनु० १२ । ९४ ) । चक्षुः =धर्मपथदर्शकम् । अशक्यं=तपसा विनाऽधिगन्तुमशक्यम् । अप्रमेयं=गुरुं विना प्रमातुमर्थतो निश्चयेतुमशक्यम् । **"वेदशास्त्रार्थतत्त्वज्ञो यत्र तत्राश्रमे वसन् । इहैव लोके तिष्ठन् ब्रह्मभूयाय कल्पते"** (मनु० १२ । १०२) **"यज्ञानां तपसां**

चैव, शुभानां चैव कर्मणाम्। वेद एव द्विजातीनां, निःश्रेयसकरः परः" (याज्ञ० स्मृ० १। ४०) "नास्ति वेदात् परं शास्त्रं, नास्ति मातुः परो गुरुः। नास्ति दानात् परं मित्रम्, इह लोके परत्र च" (अत्रि-संहिता० १५२) इत्यादिषु बहुषु श्लोकेषु। यदि त्रयो वेदाश्चत्वारो वा वेदाः हिन्दूनां धर्मपुस्तकं भवेयुः, तदा मन्वादयः स्मृतिकृतो नैकमेव वेदमधिगन्तु-मुपदिशेयुः, नैकमेव वेदमभ्यसितुमनुशिष्युः, नैकमेव वेदं धर्माश्रयं प्रब्रूयुः। नहि धर्मशास्त्रकारास्ते सत्सु त्रिषु वेदेषु, चतुर्षु वा वेदेषु सत्स्वेक एव वेदोऽधिगन्तव्यः, एक एव वेदोऽभ्यसितव्यः, इत्युपदेष्टुमर्हन्ति। यथा-र्थोपदेशार्थं हि तेषां प्रवृत्तिर्नायथार्थोपदेशार्थम्। "वेदः कृत्स्नोऽधिगन्तव्यः, वेदमेव सदाऽभ्यस्येत्, वेद एव द्विजातीनाम्" इत्येकमेव वेदमधिगन्तव्यत्वेना-भ्यसितव्यत्वेन चोपदिशन्तस्ते भगवन्तः प्रज्ञापयन्ति 'नूनमेक एव वेदो हिन्दूनां धर्मपुस्तकं न वेदद्वयं, न वा वेदत्रयं, न वा वेदचतुष्टयमिति। नन्विह वेद इत्येक-वचनं जात्यभिप्रायं, नैकवेदाभिप्रायमिति। नैतद्वक्तव्यम्। व्यवस्थोपलब्धेः। मनुस्मृतौ खलु वेदशब्दप्रयोगाणां व्यवस्थोपलभ्यते, यत्रैकं वेदं वक्तुमभिप्रैति भगवान् मनुः, तत्रैकवचनान्तं वेदशब्दं प्रयुङ्क्ते, यत्र द्वौ वेदौ, तत्र द्विवचनान्तं, यत्र च वेदत्रयं वक्तुमभिलषति, तत्र वेदशब्दस्य बहुवचनान्तस्य प्रयोगं कुरुते, इति। अत्र च "वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम्" (मनु० ३।२) इत्यादिकं बहुलं निदर्शनम्। न चोपलभ्यमानामेतां बहुलनिदर्शनपूर्विकां वेदशब्दप्रयोगविषयां व्यवस्थामुल्लङ्घ्य "वेदः कृत्स्नोऽधिगन्तव्यः, वेदमेव सदाऽभ्यस्येत्, वेद एव द्विजातीनाम्" इत्यादौ जात्यभिप्रायेणैकवचनान्तो वेदशब्दः प्रयुज्यते, नैकवेदाभिप्रायेणेति कल्पना कथञ्चिद् युज्यते। कुतः?। संशयप्रसङ्गात्। एतस्यां हि कल्पनायां, किमेकवेदाभिप्रायेणैकवचनान्तं वेदशब्दं प्रायुक्त भगवान् मनुः, आहोस्विद् द्विवेदाभिप्रायेण, किं वा वेदत्रया-भिप्रायेणेति वेदसंख्यागोचरः संशयः प्रसज्येत। न च प्रसज्यमानस्य वेदसंख्यागोचरस्य संशयस्यास्य निवृत्तिकारणं किञ्चिदुपलभामहे। संशयितोऽ-र्थस्तु न कश्चित् कदाचिद् हानोपादानाय कल्पते। हानोपादानसम्प्रतिपत्त्यर्थं

च सर्वस्य स्मृतिशास्त्रस्य प्रणयनम् । तच्च हानोपादानाभावे सर्वथा वैयर्थ्यमापद्येतेति कृतं तेऽनया स्मृतिशास्त्रप्रणयनवैयर्थ्यकर्या जातिकल्पनया । तस्माद् "वेदःकृत्स्नोऽधिगन्तव्यः"इत्यादौ सर्वत्रैक एव वेदोऽधिगन्तव्यत्वेनाभ्यसितव्यत्वेन चोपदिश्यते, न वेदद्वयं, न वा वेदत्रयमिति युक्तमालोचामहे । ननु कोऽयमसावेको वेदः,इति चेत्? । ऋग्वेद इति ब्रूमः । पूर्वत्रानधीतऋग्वेदस्य षण्ढादिवदफलत्वोक्तेः । अस्ति तावदुद्धृताभ्यां "वेदः कृत्स्नोऽधिगन्तव्यः" इत्यादिकाभ्यां श्लोकाभ्यामव्यवहितपूर्वपठितः श्लोकः **"यथा षण्ढोऽफलः स्त्रीषु, यथा गौर्गविचाफला । यथा चाज्ञेऽफलं दानं, तथा विप्रोऽनृचोऽफलः"** (मनु० २ । १५८) इति । तत्र यो विप्रोऽनृचः=ऋगृहीनः, अनधीत-ऋग्वेदः, स षण्ढादिवदफलः=ऐहिकामुष्मिकफलशून्य इत्युच्यते । किमनेनोक्तं भवति ? यो मेधावी मनुपुत्रो यजुर्वेदादिनिखिलविद्याध्ययनेऽपि स्वधर्मपुस्तकं भगवन्तम् ऋग्वेदं नाध्यगीष्ट, स कर्तव्यकर्मगोचरज्ञानाभावेन तदनुष्ठानेऽसमर्थत्वात् नात्राभ्युदयं विन्दते, न वाऽमुत्र मोक्षफलं लभते, इति । स्वधर्मपुस्तकाध्ययनाद् हि मनुष्यः किं कर्म कर्तव्यं, किं न कर्तव्यमिति जानीते, जानानश्च यन्न कर्तव्यं, तन्न करोति, यत् कर्तव्यं, तत् कर्तव्यबुद्ध्या करोति । तस्य करणाच्चैहिकामुष्मिकं सकलं फलं निष्प्रत्यूहं प्राप्नोति । येन तु यजुर्वेदादिकाः अखिलाः विद्याः अध्यगायिषत,स्वधर्मपुस्तकं च भगवान् ऋग्वेदो नाध्यगायि,स कर्तव्यकर्मगोचराज्ञानेन तदनुष्ठानेऽशक्तत्वात् स्त्रीषु षण्ढ इव, नारीषु क्लीब इव, लोकेऽफल एव भवति । मा नाम क्वचित् कश्चित् मनुपुत्रो लोकेऽस्मिन् षण्ढ इवाफलो भूत् , तदर्थं धर्मपुस्तकस्याध्ययनेनार्थतो ज्ञानाय, तदभ्यासाय चोत्तरत्र परमया कृपया स्मृतिकारो भगवान् मनुरज्ञापयति "वेदः कृत्स्नोऽधिगन्तव्यः" "वेदमेव सदाऽभ्यस्येत् " इति । स को वेदः; यः कृत्स्नोऽधिगन्तव्यः, सदा चाभ्यसितव्यः ? तस्योत्तरं- यस्यानध्ययनात् सर्वो विप्रो निखिलो मनुपुत्रो लोके षण्ढ इवाफलो भवति,स वेदः,नान्यः कश्चन वेदः । उपस्थितानुपस्थितयोरुपस्थितग्रहणस्यैव सङ्गतत्वात् । स चास्ति भगवान् ऋग्वेदः इति विस्पष्टम् । तस्माद् भगवान् ऋग्वेद एवैकलो हिन्दूनां धर्मपुस्तकं,न

यजुर्वेदो न सामवेदो,नाथर्ववेदो धर्मपुस्तकमिति युक्तमुत्पश्यामः। **लक्षणा-न्न्वयाच्च** । यानि खलु धर्मपुस्तकलक्षणानि, धर्मपुस्तकलक्षणविद्भिरभ्यु-पेयन्ते, तानि भगवन्तमृग्वेदमेकं हित्वा न साकल्येन पुस्तकान्तरे वेदान्तरे वा क्वचिदन्वीयन्ते। धर्मपुस्तकलक्षणेषु हि सर्वेषु मुख्यं धर्मपुस्तकलक्षणं सृष्टे-र्याथातथ्यतो यथासृष्टिविद्यं प्रतिपादनं धर्मपुस्तकलक्षणविद एकस्वरेणातिष्ठन्ते। तच्च भगवन्तम् ऋग्वेदमेकं परित्यज्य नान्यत्र पुस्तकान्तरे वेदान्तरे वा क्वचि-दीक्षामहे, येन यजुर्वेदं वा, अथर्ववेदं वा, सामवेदं वा धर्मपुस्तकमातिष्ठेमहि। यजुर्वेदस्य हि ऋग्वेदेन भगवता विहिते यज्ञे कर्मण्यनुष्ठीयमानेऽनुष्ठानपद्धति-रूपेणोपयोगात् प्रामाण्येऽपि न धर्मपुस्तकरूपेण प्रामाण्यमास्थीयते। नह्यद्य-यावदेको यजुर्वेदः क्रमेणानुवर्तते,यथा भगवानृग्वेदः। शुक्लकृष्णभेदप्रभेदैरने-कस्य यजुर्वेदस्योपलब्धेः। अद्यत्वेऽपि खलु भारते द्वित्रा यजुर्वेदाः, परत्र च यक्षाः यजुर्वेदाः किल मुद्रिता उपलभ्यन्ते। सैषाऽनैक्योपलब्धिर्भवति तस्य धर्मपुस्तकत्वे नितान्तं बाधकम्। विनिगमनाविरहेणानेकेषां तेषां कस्यापि धर्म-पुस्तकत्वानुपपत्तेः। पद्धतिरूपत्वे च तस्यानेकत्वं भवति बह्वनुकूलम्। देशभेदे-नानुष्ठातृपुरुषभेदेन च तदनेकत्वस्य युक्ततरत्वात्। ननु यजुर्वेदस्य पद्धतिरूपत्वं-कुतोऽवगम्यते?।सङ्कीर्णत्वादिति प्रब्रूमः। यज्ञकर्मपद्धतयः स्युः, संस्कारकर्म-पद्धतयो वा भवेयुः, सर्वास्ता ऋग्भिर्ब्राह्मणैश्च सङ्कीर्णा विद्यन्ते। तत्सङ्करा-भावे तासां तद्भावानुपपत्तेः। नहि ऋग्भिर्ब्राह्मणैश्च न ताः सङ्कीर्यन्ते,यज्ञकर्म पद्धतयः संस्कारकर्मपद्धतयश्च कथञ्चिदुपपद्यन्ते। यज्ञकर्मारम्भे, संस्कार-कर्मारम्भे,तदनुष्ठानसमये चोच्चार्यमाणा मन्त्राःऋग्वेदमन्त्रत्वाद् ऋचोऽभिधी यन्ते, यज्ञकर्म-संस्कारकर्मविधयश्च विधायकवाक्यत्वाद् ब्राह्मणानि कथ्यन्ते। चेदेष यजुर्वेदो यज्ञपद्धतिर्न भवेत्,तदा नोऽयं ऋग्भिर्नोऽयंब्राह्मणैश्च सङ्कीर्येत। सङ्कीर्यते च। तत्र "**हिरण्यगर्भः**"(यजु० १३।४) इत्यादयो मन्त्र ऋचः सर्वसम्मताः,"**अश्वस्तूपरः**"(यजु० २४।१)"**ब्रह्मणे ब्राह्मणम्**" (यजु० ३०।५) इत्यादीनि च विधिवाक्यानि ब्राह्मणानि। तद् यथोक्तं यजुर्वेदसर्वानु-क्रमण्यां कात्यायनेन मुनिना "**अश्वस्तूपरो ब्राह्मणाध्यायः**" "**ब्रह्मणे**

**ब्राह्मणम्, इति द्वे कण्डिके, तपसे (तपसे कौलालम्) अनुवाकश्च ब्राह्मणम्** " ( सर्वानु० ) इति । न च ऋग्भिर्ब्राह्मणैश्च सङ्कीर्यमाणोऽयं यजुर्वेदो यज्ञपद्धतिरूपतां जातुचिदतिशेते । लोके दृश्यमानाः यज्ञकर्मपद्धयः संस्कारकर्मपद्धतयश्च सर्वाः अनाप्तैः पुरुषैर्निर्मितत्वाद् वैदिकेषु सर्वेषु न प्रामाण्यमश्नुवते । परमाप्तैर्याज्ञवल्क्यादिभिर्ऋषिभिर्दृष्टत्वाच्च यज्ञपद्धति-रूपत्वेऽपि यजुर्वेदः प्रमाणं, न दृश्यमानपद्धतिवद् भवति स्वप्नेऽप्यप्रमाणम् । **समत्वाव।** उपनिषत्समो हि यजुर्वेदो,नोपनिषिद्भ्यो जातु चिद् विशिष्यते । कुतः? संग्रहणात् । उपनिषत्संग्रहकर्तारः खलु ऋषिपुत्राःयजुर्वेदस्य चत्वारिंश-मध्यायमुपनिषत्सु संगृह्णन्ति, तन्नामकरणं च "ईशोपनिषद्" इति कुर्वन्ति। न च यजुर्वेदस्योपनिषद्भिः समत्वाभावे तदध्यायस्तत्र संग्रहीतुं शक्यते, तन्नामकरणं चोपनिषदिति कर्तुं पार्यते । लोकेऽपि च समानामेव समवायः सर्वत्र लोक्यते, नासमानाम् । तद् यथा हिन्दुषु हिन्दवः समवयन्ति, म्लेच्छेषु च म्लेच्छाः, मनुष्येषु वा मनुष्याः समवयन्ति, गोषु गावः, अश्वेषु अश्वाः, बर्करेषु च बर्करा इति । न चैतस्माद् विपरीतं क्वचित् कदाचिदवलोक्यते, बर्करेषु अश्वाः, अश्वेषु गावः, गोषु मनुष्या इति । न चोपनिषत्संग्रहकर्तारः ऋषिसूनवो लोकं न लोकन्ते, लोकसामान्यातिक्रमणं वा युक्तमवबुध्यन्ते । ते च यजुर्वेदस्यान्तिमाध्यायमुपनिषत्सु संगृह्णन्तो नूनमुपनिषदां तुल्योऽयं यजुर्वेद इति स्फुटं प्रज्ञापयन्ति। यजुर्वेदस्योपनिषद्भिस्तुल्यत्वे च यथोपनिषदः प्रमाणं भवन्त्योऽपि न हिन्दूनां धर्मपुस्तकं, तथा प्रमाणं भवन्नपि यजु-र्वेदो न हिन्दूनां धर्मपुस्तकमिति स्फीतालोकमध्यवर्तिघटवद् विस्पष्टम् । न चैतादृशे विस्पष्टेऽर्थे खलु जातिहितचिन्तकाः प्रेक्षावन्तः क्वचित् कर्हिचित् सन्दिहते । यजुर्वेदाद् हि कर्मानुष्ठानप्रकाराः ज्ञायन्ते,उपनिषद्भ्यश्चात्मज्ञान-प्रकाराः,इत्येतावति विशेषे सत्यपि नास्ति कश्चिदपरो विशेषः । तस्मात् प्रमाणं भवन्नपि यजुर्वेदो न हिन्दूनां धर्मपुस्तकं,यथोपनिषदः,इति साधु प्रतिजानीमहे। ननु यजुर्वेदो धर्मपुस्तकं मा भूत्, सामवेदो धर्मपुस्तकं कुतो न स्यात् । नहि यजुर्वेदो हिन्दूनां न धर्मपुस्तकम् , एतावता सामवेदोऽपि न धर्मपुस्तकम् । अहो अपूर्वमिदं भवतो व्यसनमिति चेत्?। अत्रोच्यते । न खलु, वयं व्यस-

नितया सामवेदस्य धर्मपुस्तकत्वाभावमभिरोचयामहे, न वा तत्र निर्हेतुकं किञ्चिदभिदध्महे, हेत्वाभासं वा कर्हिचित् प्रयुयुद्महे। कुतस्तर्हि सामवेदो न धर्मपुस्तकम् ?। अनतिरेकात्। सामवेदश्चेदृग्वेदतोऽतिरिच्येत,तदाऽवश्य-मृग्वेदवत् स्वातन्त्र्येण धर्मपुस्तकं भवेत्। न ततोऽतिरिच्यते। ये खलु भगवतः ऋग्वेदस्य मन्त्रा ऋचो यजुर्वेदोक्तया दिशाऽनुष्ठीयमाने यज्ञे कर्मणि तेषु तेष्ववसरेषु जेगीयन्ते,ते मन्त्रा उद्गातॄणां सुविधार्थं सङ्गृह्यमाणाः सामवेद इति समाख्यायन्ते। गानवचनो हि नूनमेष सामशब्दः। तच्च गानं नियमेन लौकिके वैदिके च कर्मणि सर्वत्र पद्यापरपर्यायासु ऋक्ष्वेव गीयते, न गद्येषु यजुःषु। ऋचो मन्त्राश्च सर्वे ते भगवतः ऋग्वेदस्य सन्तोऽपि गानोपाधिना सामानि व्यपदिश्यन्ते,नामी परमार्थतः सन्ति सामानि। तस्मात् तेषां समूहः सामवेदोऽपि भगवानृग्वेद एव, न ततो मात्रयाऽप्यतिरिच्यते। अतिरेकाभावे च कुतोऽयं स्वातन्त्र्येण धर्मपुस्तकं भवेत्। ननु सामवेदे कियन्तो मन्त्राः ईदृशाः सन्ति, ये भगवति ऋग्वेदेऽस्मिन् नावलोक्यन्ते, चेदृग्वेदतो नातिरिच्येत सामवेदः, तदा तस्य सर्वे मन्त्रास्तत्रोपलभ्येरन्। अनुपलम्भाच्च विज्ञायतेऽस्ति भगवतः ऋग्वेदतोऽतिरिक्तःकश्चित् सामवेदो नाम स्वतन्त्रो वेदः,स च ऋग्वेद इव धर्म-पुस्तकमिति चेत् ?। सत्यम्,ईदृशाः सन्त्यल्पशो मन्त्राः,ये तावदृग्वेदेऽस्मिन् नावलोक्यन्ते, अनवलोकनादेव चेदानीं ते संगृह्यमाणाः सामवेद इति संज्ञा-यन्ते,व्याख्यायन्ते च लोकानां पठनपाठनार्थम्,तथापि ते सन्ति ऋचो मन्त्रा, **"ऋच्यध्यूढं साम गीयते"**(छां० १।६ १) इति श्रुतेर्न साममन्त्राः,अतस्तेऽवश्यं शाखान्तरेभ्यः कुतश्चिद् याज्ञिकैः समग्राहिषतेत्यनुमिमीमहे, देवदत्तस्य सतो यथा गृहाभावेन बहिर्भावमनुमिमते जनाः। शाखान्तराणि च सर्वाणि काल-गत्या निःशेषेणालोपिषतेति न ते मन्त्रास्तत्रास्माभिः प्रदर्शयितुं शक्यन्ते। ननु नो चेदृग्वेदतःपृथगस्ति सामवेदो धर्मपुस्तकं,तदा **"वेदानां सामवेदोऽस्मि"** (गीता० १०।२२) इति कथमुच्यते ?। गानाभिप्रायेणेति वेदितव्यम्। विभूति-योगाध्याये खलु भगवतो विभूतयो वक्तव्याः। गानेषु च सर्वेषु ऋक्षु गीयमानं गानमात्मनो विभूतिं मन्यते भगवान्, तावन्मात्रेण"वेदानां सामवेदोऽस्मि" इत्यचकथत्,न पृथग् धर्मपुस्तकाभिप्रायेण। तस्मात् सामवेदो न धर्म पुस्तकम्।

अथर्ववेदस्तु न जातु त्रय्यन्तर्गतः। अतो लोकोपयोगिपुरातनसाहित्य-संग्रहरूपतया धर्मपुस्तकानुकूल्येन प्रामाण्यमश्नुवानोऽपि न स्वातन्त्र्येण धर्मपुस्तकरूपेण कर्हिचित् प्रमाणमिति दक्षिणोत्तरसकलवैदिकजनता-निर्धारितो धर्ममार्गः। किमुक्तं भवति ? यज्ञपद्धतिरूपत्वाद् यजुर्वेदो यज्ञपुस्तकं, यज्ञे कर्मणि गीयमानानामृग्वेदमन्त्राणां संग्रहमात्रत्वात् सामवेदो यज्ञपुस्तकम्, ओषधिनीतियन्त्रमन्त्रतन्त्रादिलौकिकार्थसंग्रहरूपत्वादथर्ववेदो नूनं लोकपुस्तकं, न च त्रयाणामेषामस्ति कश्चिदेकोऽपि धर्मपुस्तकमिति । "**एवं वा अरे अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः साम-वेदोऽथर्वाङ्गिरसः, इतिहासः पुराणं विद्याः उपनिषदः**" (बृहदा० ३ । ४ १०) इति श्रुत्या च सर्वेषामितिहासपुराणादीनामविशेषेणात्मनिः-श्वसितत्वं श्राव्यते,न ऋग्वेदेन सह केवलस्य यजुर्वेदादित्रयस्येति न तयाऽपि यजुर्वेदः सामवेदोऽथर्ववेदो धर्मपुस्तकं प्रमाणयितुं शक्यते, यथा भगवान् ऋग्वेदो धर्मपुस्तकम्। अन्यथेतिहासपुराणादीनामपि धर्मपुस्तकता स्यात् । आत्मनिःश्वसितत्वाविशेषात् । इतिहासः पूर्वचरितसंकीर्तनं, पुराणं वंशा-द्यनुकीर्तनं, शिल्पादिविद्याः विद्याः, अध्यात्मविद्याः उपनिषदः । नन्वस्तु वेदवदितिहासपुराणादीनामपि धर्मपुस्तकत्वं,का हानिरिति चेत् ?। तदा "**वेद-प्रणिहितो धर्मोऽधर्मस्तद्विपर्ययः**" ( भागव० ६ । १ । ४० ) इत्यादीनि तद्वचनानि बाध्येरन्, वेदवदितिहासपुराणादीनामपि धर्मपुस्तकतया तत्प्र-णिहतस्यापि धर्मत्वात् । प्रणिहितः=विहितः । ननु वेदेन यद् विधीयते, पुराणेतिहासादिभिरपि तदेव विधीयते, नार्थान्तरं किञ्चिदिति तद्विहितोऽपि वेदविहित एवेति चेत् ?। तदाऽपि तानि धर्मपुस्तकानि न स्युः, अपूर्वार्थावि-धानात् । नहि यदपूर्वमर्थं न विधत्ते, तद् धर्मपुस्तकं भवितुमर्हति । तस्माद् ऋग्वेद एवैकलो धर्मपुस्तकं, नेतिहासपुराणादीनि, यथा यजुर्वेदादित्रयम् । ऋग्वेदे पुरुषसूक्ते च ऋग्यजुःसामशब्दाः मन्त्रपराः प्रयुज्यन्ते न वेदपराः "**अहेर्बुध्न्य ! मन्त्रं मे गोपाय, यमृषयस्त्रयीविदो विदुः । ऋचो-यजूंषि सामानि, सा हि श्रीरमृता सताम्**" (तै० ब्रा०१ । २ । २६)

इति श्रुत्यन्तरे तेषां साक्षान्मन्त्रपरत्वाख्यानात् । क्वचिद् वेदपरत्वाख्यानं तु प्रौढिवादाभिप्रायेणेति न विस्मर्तव्यम् । ये तु वेदनाममात्रमदिरामदान्धाः विवेकबुद्धेर्नाशाद् ऋग्वेदवद् यजुर्वेदः सामवेदोऽथर्ववेदोऽपि धर्मपुस्तकमिति प्रतिजानते, ते विद्यमानविवेकबुद्धिभिर्महद्भिरुपेक्षणीयाः । यत्कारणं ते परवशाः सन्तोऽप्रामाणिकं वचो भाषन्ते, न स्ववशाः सन्तः । शतपथप्रभृतीनि ब्राह्मणानि च धर्मपुस्तकानुकूलतया प्रमाणानि भवन्त्यपि न धर्मपुस्तकानि तानीति वेदवादिनां चिरन्तनो निर्णयः। उपनिषदो वेदान्ता अध्यात्मविद्यामात्रं प्रमाणभूता अपि न धर्मपुस्तकपदवीमारोहन्ति ।

हिन्दुधर्मपुस्तके चास्मिन्नृग्वेदे सर्वेषां हिन्दूनां मनुपुत्राणामधिकारः समानः, यः कोऽपि गुरुकुलेषु भगवन्तं तं पिपठिषेत्, पठेत्, स्वयं वाऽधिजिगांसेत,अधीयीत,न केनचिद् निषेद्धुं शक्यते,वारयितुं वा कर्हिचिदुत्सह्यते। शास्त्रस्य सतस्तस्य मनुष्यमात्राधिकारत्वनिश्चयात् । सूत्र्यते च व्यासेन मुनिना **"हृद्यपेक्षया तु मनुष्याधिकारत्वात्"** ( वे० १ । ३ । २५ ) इति ।

ननु वेदाध्ययने विहितोपनयनसंस्काराः मनुष्या अधिक्रियन्ते, नाविहितोपनयनसंस्काराः । विहितोपनयनसंस्कारा अविहितोपनयनसंस्काराश्च मनोरपत्यानि हिन्दवो न सर्वे विहितोपनयनसंस्कारा इति। नैतद् वक्तव्यम्। उपनयनसंस्कारस्य यज्ञार्थत्वेनाध्ययनाङ्गताविधानात् । यः खलु वेदमधीत्य यथाविधानमग्न्याधानं कृत्वाऽग्निहोत्रदर्शपूर्णमासचातुर्मास्याग्निष्टोमादियज्ञकलापं यथाविधि यथाकालं यष्टुं याजयितुं च कामयते,तस्योपनयनसंस्कारोऽध्ययनाङ्गत्वेन विधीयते। यत्कारणं यज्ञार्थेऽध्ययने विहितोपनयनसंस्कार एवाधिक्रियते, नाविहितोपयनसंस्कार इति नियमः। अत एव तैत्तिरीयारण्यकश्रुतौ यज्ञार्थेऽध्ययनेऽधिकृतस्य विहितोपनयनसंस्कारस्य चिन्हभूतमुपवीतं यज्ञोपवीतमितिव्यपदिश्यते, अध्ययनं यजनं याजनं च त्रितयं सहोपदिश्यते । तस्याः एतस्याश्चारण्यकश्रुतेरयमाकारः **"तस्माद् यज्ञोपवीत्येवाधीयीत,याजयेद् यजेद् वा यज्ञस्य प्रसृत्यै । अजिनं वासो वा, दक्षिणत उपवीय दक्षिणं बाहुमुद्धरते,अवधत्ते सव्यमिति यज्ञोपवीतम्"** (तै० आ० २।१) इति । नह्युपनयनसंस्कारस्य यज्ञार्थत्वाभावे तच्चिन्हभूतमुपवीतं यज्ञोपवीत-

मिति व्यवदेष्टुं शक्यते। यज्ञसम्बन्धाद् ह्युपवीतं यज्ञोपवीतं सम्पद्यते, नर्ते यज्ञसम्बन्धादिति सुव्यक्तम्। यस्तु वेदाध्ययनमात्रेणार्थी, न वेदमधीत्य यथाविधानमग्न्याधनं कृत्वाऽग्निहोत्रदर्शपूर्णमासचातुर्मास्याग्निष्टोमादियज्ञजातं यष्टुं याजयितुं चाभिलषते, तस्योपनयनसंस्कारो नापेक्ष्यते। पुरुषार्थत्वादध्ययनस्य। यज्ञार्थे ह्यध्ययने यज्ञवैगुण्यनिवृत्त्यर्थमुपनयनसंस्कारोऽपेक्षणीयो भवति, न पुरुषार्थे तस्मिन्। पुरुषार्थस्य पुरुषेच्छाधीनप्रवृत्तिरूपतयोपनयनस्य तत्रोपयोगाभावेनानपेक्षणात्। नह्यनुपयुक्तं किंचित् कचित् कदाचिदपेक्ष्यते। न च दर्शपूर्णमासं यज्ञं प्रकृत्य यथा व्रीहीनवहन्तीत्यवघातश्चोद्यते, तथा कश्चिद् यज्ञं प्रकृत्य स्वाध्यायोऽध्येतव्य इति पठ्यते, येनाध्ययनस्याप्यवघातवद् यज्ञार्थत्वं स्यात्, पुरुषार्थत्वं च न स्यात्। नन्वध्ययनं स्वयमेव यज्ञः, स च पुरुषार्थत्वेऽप्युपनयनसंस्कारं प्रयोजयिष्यति, कृतं तदङ्गिना यज्ञान्तरेणेति। सत्यम्, अध्ययनं स्वयमेवास्ति यज्ञः, तथापि नासावग्न्याधानपूर्वको यज्ञः, किन्तु सामान्ययज्ञः। यस्त्वग्न्याधानपूर्वको यज्ञः, स चाध्ययनं स्वार्थं प्रयोजयन् उपनयनसंस्कारं प्रयोजयति, न सामान्ययज्ञः, पञ्चमहायज्ञवत्। यथा खलु पञ्चमहायज्ञाः सामान्ययज्ञत्वात् स्वार्थं नोपनयनसंस्कारं प्रयोजयन्ति, तथाऽध्ययनमपि स्वार्थं नोपनयनसंस्कारं प्रयोजयितुमर्हति, यावदेतदग्न्याधानपूर्वकस्य यज्ञस्याङ्गतां न भजति, सामान्ययज्ञतां च न त्यजति। ननु पञ्चमहायज्ञा अपि न सामान्ययज्ञाः, किन्तु विशेषयज्ञाः, तत्र चोपनीता एवाधिक्रियन्ते, नानुपनीता इति। नैतद् वक्तव्यम्। तथा सति वृषलस्य पत्नी, शूद्रस्य पत्नी, इत्यादिशब्दासिद्धिप्रसङ्गात्। नहि यज्ञसंयोगाभावे वसिष्ठस्य पत्नी, विश्वामित्रस्य पत्नी, इत्यादिवद् वृषलस्य पत्नी, शूद्रस्य पत्नी, इत्यादयः शब्दाः कर्हिचिदनायासेन सेद्धुमर्हन्ति। न चायासदुराग्रहो ज्यायानित्यनायासेन तत्सिद्धिमभिसमीक्ष्यैव महाभाष्यकृद् भगवान् पतञ्जलिः **"पत्युर्नो यज्ञसंयोगे"** ( अष्टा० ४। १ ३३ ) इति सूत्रे भाष्ये **"सर्वेण गृहस्थेन पञ्च महायज्ञाः निर्वर्त्याः"** इत्यवोचत्। न च पाणिनेरनभिमतं महाभाष्यकृता भगवता पतञ्जलिना कदाचिद् वक्तुं शक्यते, न वा पाणिनेरनभिमतत्वे तथासूत्रसूत्रणं कथञ्चित् संगच्छते। पाणिनेस्तथासूत्रसूत्रणं महाभाष्यकृतस्तस्य तथा वचनं च

पञ्चानां महायज्ञानां सामान्ययज्ञत्वे सत्येव सञ्ज्ञाघटीति, न सति विशेषयज्ञत्वे। तस्मात् सामान्ययज्ञाः एते पञ्च महायज्ञाः, न विशेषयज्ञा, तत्र चोपनीताः स्युरनुपनीता वा भवेयुः, सर्वेषां गृहमेधिनां हिन्दूनां यथाऽस्ति समानोऽधिकारः, तथैवास्ति स्वधर्मपुस्तकस्य भगवत ऋग्वेदस्याध्ययनेऽपि सर्वेषां हिन्दूनां समानोऽधिकार इति सर्वं चतुरश्रम् । अनियमाच्च । ब्रह्मविद्याग्रहणसमं हि स्वधर्मपुस्तकाध्ययनम् । ब्रह्मविद्याग्रहणार्थिनो जनाः श्रोत्रियं ब्रह्मनिष्ठं गुरुं यथाकालमुपसीदन्ति, स्वधर्मपुस्तकाध्ययनार्थिनो मनुष्यास्तत्रभवन्तं वेदविदमाचार्यं यथाकालमुपसर्पन्ति । श्रोत्रियं ब्रह्मनिष्ठं गुरुं यथाकालमुपसीदतां ब्रह्मविद्याजिघृक्षूणां सर्वेषां मनुष्याणामविशेषेण-यथोपनयननियमो न विद्यते, तेषां केचनैवोपनीयन्ते केचन च नोपनीयन्ते, यत्रैतच्छ्रुतं भवति "तं ह्योपनिन्ये" ( शत० ११।५ ३ । १६ ) "तान् हानुपनीयैवैतदुवाच" (छां० ५।११।७) इति, तथा तत्रभवन्तं-वेदविदमाचार्यं यथाकालमुपसर्पतां स्वधर्मपुस्तकाधिजिगांसूनां सर्वेषां मनुपुत्राणामविशेषेणोपनयननियमोऽपि न विद्यते, तेषां केचनोपनीयन्ते केचन च नोपनीयन्ते। यदि च परत्रानियमकारणं किञ्चिदन्यद् विद्यते, तदाऽत्राप्यनियमकारणं किञ्चिदन्यदुपपत्स्यते, पुनरपि परत्रेवात्राप्यनियमस्तदवस्थः। अर्थित्वं च मनुष्यमात्रसाधारणं नोपनयननियमहेतुरुपपद्यते। तस्मादुपनीताः स्युरनुपनीताः वा भवेयुः, सर्वेषां मनोरपत्यानां हिन्दूनामविशेषेण स्वधर्मपुस्तके भगवति ऋग्वेदेऽधिकारः समान इति निरपवादम्।

यथा हि मनोरपत्यानि पुरुषाः द्विप्रकाराः केचनोपनीताः केचनानुपनीताः, तथा मनोरपत्यानि स्त्रियोऽपि द्विप्रकारा उपनीता अनुपनीताश्च। तत्रोपनयनाभावेऽप्युपनीतानां पुरुषाणां स्त्रियः उपनीताः अभ्युपेयन्ते, अनुपनीतानां पुरुषाणां च स्त्रियोऽनुपनीता अभ्युपगम्यन्ते । पुरुषाणां यो धर्मः, स एव तेषां स्त्रीणां धर्म इति सिद्धान्तात् । पुरुषा उपनीताः अनुपनीताः सर्वेऽविशेषेण स्वधर्मपुस्तकस्य भगवतः ऋग्वेदस्याध्ययनेऽध्यापने चाधिक्रियन्ते, तेषां स्त्रियोऽप्युपनीताः अनुपनीताः सर्वा अविशेषेण स्वधर्मपुस्तकस्य भगवत ऋग्वेदस्याध्ययनेऽध्यापने चाधिक्रियन्ते । पुरुषाणां यथाधिकारमीहमानानामधीयानानां मध्ये यथा केचिदुपाध्यायाः

सम्पद्यन्ते, केचिदाचार्याः सम्पद्यन्ते, तथा यथाधिकारं यतमानानामधीयानानां स्त्रीणां मध्येऽपि काश्चिदुपाध्याया बोभूयन्ते, काश्चिदाचार्य्याः इति पाणिनि-मुख्याः सर्वे वैयाकरणाः मन्यन्ते। अन्यथा तासामाचार्योपाध्यायाशब्द-साधनप्रक्रिया सर्वा वैयर्थ्यमापद्येत। तत्र याःकिल स्त्रियः स्वधर्मपुस्तकं भग-वन्तमृग्वेदं स्त्रीवर्गमध्यापययन्ति, ता उपाध्यायाः आख्यायन्ते, याश्च वेदोक्तं कर्मयोगाख्यं सनातनं धर्मं स्त्रीवर्गमुपदिशन्ति, ता आचार्या इति संज्ञायन्ते। स्त्रियःस्त्रीषूपाध्यायाः नियोक्तव्याः, पुरुषाश्च पुरुषेषु, न तु ततो भ्रमतोऽपि विपरीतं पुरुषेषु स्त्रियो नियोक्तव्याःस्त्रीषु च पुरुषाःनियोक्तव्या इति। सैषा वैदकी मर्यादा। सा च सवत्र सर्वदा पालयितव्या, न कदाचिदतिक्रमितव्या वेदवादिनां शिष्टानाम्। अन्यथाऽनिष्टप्रसङ्गादित्यलं बहुना। मन्त्रद्रष्टृत्वसामान्याच्च। यथा हि भग-वत ऋग्वेदस्य मन्त्राणां द्रष्टार उत्कृष्टाश्चापकृष्टाश्च नानाप्रकाराः पुरुषाः वर्तन्ते, तथा स्त्रियोऽप्युत्कृष्टाश्चापकृष्टाश्च नानाप्रकाराः मन्त्राणां तस्य द्रष्ट्र्यो विद्यन्ते। मन्त्रद्रष्ट्रीणामेतासां स्त्रीणां शची-वाग्-घोषाऽपाला-विश्ववा-राद्याः सुप्रसिद्धाः सर्वैर्वेदाध्यायिभिर्विद्वद्भिर्ज्ञायन्ते। तत्रभवतीभिस्ताभिर्य तावदृचो मन्त्रा ईश्वरप्रेरणया स्वस्वहृदयेषु यथावेलमदर्शिषत, तेषां मन्त्रत्रितय-मत्रोल्लिखामः—

**"अहं केतुरहं मूर्धाऽहमुग्रा विवाचनी।**
**ममेदनुक्रतुं पतिः, सेहनाया उपाचरेत्" ॥ २ ॥**

क्रतुः=सङ्कल्पः। सेहनायाः=गृहकार्येषु भाविना कष्टानामभिभवित्र्याः। उपाचरेत्=उपाचरति, चर्करीति। पतिः=पालयिता, स्वामी। **"मम पुत्राः शत्रुहणोऽथो मे दुहिता विराट्। उताहमस्मि संजया पत्यौ मे श्लोकः उत्तमः"** (ऋ० १०।१५९।१–२) इति। संजया=सम्यक् जेत्री शत्रूणाम्। श्लोकः=यशः। उत्तमः=उच्चतमः। शचीदृष्टमेतन्मन्त्रद्वितयम्, अथायं घोषादृष्टो मन्त्रः। मन्त्रद्रष्टुः कक्षीवतो दुहिता घोषा शय्यातः प्रातरुत्थाय नेत्रयुगल-मुन्मीलयन्ती बहिरागता सहसा दृष्टिपथमापतिते द्यावापृथिव्यौ सम्बो-धयन्ती समाम्नौ—

"कुह स्विद् दोषा, कुह वस्तोरश्विना ! कुहाभिपित्वं करतः कुहोषतुः । को वां शयुत्रा विधवेव देवरं, मर्यं न योषा कृणुते सधस्थ आ' ( ऋ० १० । ४२ । २ ) इति । कुह=क । दोषा=रात्रौ । वस्तोः=दिवा । अश्विना=हे अश्विनौ ! हे द्यावापृथिव्यौ !, अभिपित्वं= विश्रामं, मार्गश्रमापनयनं, करतः=कुरुथः । ऊषतुः=वसथः । वां=युवां, शयुत्रा= शयने । विधवा=धवः पतिः, तद्विरहिता, विगतपतिका, रण्डा स्त्री, इव=यथा, देवरं=द्वितीयं वरम्, अपरं पतिं,भर्तारं पुरुषम् । मर्यम्=अभिनवं ब्रह्मचर्योपपन्नं वोढारं भर्तारं पुरुषं, न=यथा, योषा=नवोढा स्त्री । कृणुते=कुरुते, आङ् अभिमुख्ये, अभिमुखीकरोति सन्तानकर्मणे । सधस्थे=सह स्थाने, शयन- मन्दिरे । विधवेव देवरमित्यापत्कालविषयमुपमावचनं, मर्यं न योषेतिचा- पदनापदुभयकालविषयमिति विवेकः ।

याः खलु तत्रभवत्यः स्त्रियः स्वधर्मपुस्तकस्य भगवत ऋग्वेदस्यैतादृशानाम- मनेकेषां मन्त्राणां दृष्ट्र्यो विद्यन्ते, तास्तत्र नाधिक्रियन्ते, इति फल्गुवचो,न च तद् वेदविद्वांसो दूरदर्शिनःपण्डिताःस्वप्नेऽपि रोचयन्ते । "स्त्रीशूद्रौ नाधीयाताम्" इत्यादिवाक्यं च ते शिष्टापरिगृहीतत्वादप्रमाणमभिमन्यन्ते,प्रामाण्याग्रहेऽपि चैतद् नितान्ताशक्तौ स्त्रीशूद्रौ गोचरयति, न स्त्रीमात्रं, न शूद्रमात्रमित्या- तिष्ठन्ते ।तस्मात् स्त्रियः स्युः पुरुषा वा भवेयुः,सर्वेषां मनोरपत्यानां हिन्दूनां हिन्दुजातेर्वाऽविशेषेण स्वधर्मपुस्तके भगवति ऋग्वेदेऽध्ययनाध्यापनयोः समानोऽधिकार इति सर्वमवदातम् ।

**"यस्याः देवो व्यापको विश्वमूर्तिः, यस्याः वेदो विश्वविद्याविभूतिः ।**
**यस्याः धर्मो विश्वधर्मप्रसूतिः, सेयं लोके शाश्वती हिन्दुजातिः ॥१॥**
**यस्याः व्यासः सर्वविद्यानिधानं, यस्याः रामः सर्वधर्माक्षमानम् ।**
**यस्याः कृष्णः शासिता सर्वशक्तिः,सेयं लोके शाश्वती हिन्दुजातिः॥२॥**
**शुद्धौ वृद्धौ सदा यत्नो, युद्धे नित्यमभीरुता ।**
**विद्या नीतिर्दया दानं, हिन्दुजातेर्गुणाः मताः ॥ ३ ॥**

यस्तु तत्र मनुष्यः,स्त्री वा पुरुषो वा, स्वधर्मपुस्तकं भगवन्तम् ऋग्वेदं, कुतश्चित् कारणादध्येतुं न क्षमते, कस्यचिद् हेतोः पठितुं न समर्थयते, स सर्वो हिन्दुबन्धुः साक्षाद् भगवता गीतां गीतामधीयीत। यथा हि सर्वेषां मनोरपत्यानां भगवान् ऋग्वेदो धर्मपुस्तकं, तथैवैषा भगवती गीताऽपि सर्वेषां मनोरपत्यानां धर्मपुस्तकं, नास्ति किञ्चिदन्तरम्। ऋग्वेदोक्तस्य कर्मयोगाख्यस्य सनातनस्य धर्मस्यात्राप्यनुशासनात्। तस्याः एतस्याः श्रीमद्भगवद्गीतायाः सुखेनावबोधार्थं,समस्तासु हिन्दुजनतासु चाविरलप्रचारार्थमस्माभिः स्वल्पाक्षरं सुव्यक्तार्थं सरलाशयं स्वान्तप्रियं पदभाष्यं नाम वैदिकभाष्यं निरमायि, न विस्तरभयाद् वाक्यभाष्यं व्यरचि। तदेतदास्माकीनं पदभाष्यं नाम वैदिकभाष्यं विमलमतयो विद्वांसोऽवलोकयन्तु, पठन्तु च पाठयन्तु च। समस्तासु हिन्दुजनतासु चा शिरोबालेभ्य आ च पादनखेभ्योऽङ्गेऽङ्गे रोम्णि रोम्णि च प्रवेविष्टां दुर्भगामकर्मण्यतापिशाचीं,वैदिकधर्मलगुडेनापसारयन्तु, स्वयं कर्मयोगिनः सम्पद्यमानाः पराँश्च कर्मयोगिनः सम्पादयन्तु, नातोऽधिकं किंचिदन्यद् वयमाशास्महे।

धर्मपुस्तकपाठेन, प्राप्यते शाश्वती गतिः।
लोके कीर्तिर्धनं धान्यं, सन्तानं शुक्ला मतिः॥ १॥
ऋग्वेदो गीतया युक्तो, हिन्दूनां धर्मपुस्तकम्।
सर्वेषामविशेषेण, दृष्टादृष्टार्थसाधकम्॥ २॥
पठन्तु पाठयन्तु च, विद्वांसो गृहमेधिनः।
हिन्दून् सर्वानशेषेण, परिव्राजो मनस्विनः॥ ३॥
जानन्ति पठिता धर्ममीश्वरं हृद्यवस्थितम्।
सङ्घस्य चाद्भुतां शक्तिं, यादृशं चेह जीवितम्॥४॥
जीवितं गौरवेणाढ्यं र्जीवितं भूरिचेतनाः।
सङ्घशक्तेः फलं तच्च, मन्यन्ते वेदविज्जनाः॥ ५॥

वैदिकमुनिः



# अथ भगवद्गीतोपनिषद्वैदिकभाष्यम् ।

## अथ प्रथमोऽध्यायः ।



उपनिषत्सु सर्वासु परमोपनिषद् मता ।
साक्षाद् भगवता गीता, गीता या लोकविश्रुता ॥१॥
मतग्रहग्रहाविष्टैर्व्याख्याता पण्डितैः पुरा ।
नासावर्थं स्वकं प्राह, वक्तुं यं लोकमागता ॥२॥
योऽर्थो निखिलवेदस्य, कर्मयोगः सुनिश्चितः ।
स एवाखिलगीतायाः, अर्थो गीताविदां मतः ॥३॥
तं बुध्येत यथा लोको, व्याख्याभासैर्विमोहितः ।
प्रवृत्तस्तेन गीतायाः, व्याख्याने देवचोदितः ॥४॥
व्याख्यानं भवतात् पूर्णं, गीतादेव्याश्च मण्डनम् ।
भूयाच्च लोकबोधाय, प्रार्थये नन्दनन्दनम् ॥५॥

अथ प्रवृत्ते भारते संग्रामे यदा किल पाण्डुनन्दनः कुन्तीपुत्रोऽर्जुनो भीष्मद्रोणमुख्यानामात्मबन्धूनामवश्यं भाविनमात्मकर्तृकं बधमवेक्ष्य जातेन मनुष्यस्वभावेन मोहेन भूरिशोकमापेदे, किमधुना वेदविहितो नैजो धर्मः कर्तव्यबुद्ध्या लोकसंग्रहबुद्ध्या चानुष्ठातव्यः, किं वा लोकशास्त्रगर्हितेन भिक्षावृत्तिधर्मेण कष्टावहेन, आत्मात्मीयजीवनयात्रा कथञ्चित् निर्वोढव्या, इति गाढं संशयानः, सर्वतः शोकमोहाच्छन्नविवेकबुद्धित्वात् नात्मकर्तव्यं किञ्चित् निर्दध्रे, तदा रथसारथ्ये तूष्णीमुपविष्टं सर्वसाक्षिभूतं भगवन्तं श्रीकृष्णम् आत्मकर्तव्य-

निर्दिधीर्षया,शिष्यभावेनोपसन्नो भृशं गद्गदया वाचा, स्वकर्तव्यनिर्णयं पप्रच्छ। तदानीं लब्धावसरो विश्वमतिर्भगवान् श्रीकृष्णोऽर्जुनवत् मनुष्यजातम् आ ब्राह्मणाद् आ च चाण्डालाद्, अस्मात् शोकमोहदुःखार्णवात् समुद्धर्तुकामो नियमेनाभ्युदयनिःश्रेयसैकसाधनभूतस्य, यथायथं मनुष्यमात्रानुष्ठानयोग्यस्य, सर्वदा सर्वत्रानुष्ठानैकतानस्य, सर्वतः सर्वदा सर्वथा शोकमोहदुःखार्णवोत्तरणे दृढतमपोतस्य, शास्त्रीयस्य वेदोदितस्य शाश्वतस्य सनातनधर्मस्य कर्मयोगस्य प्रतिपादकानि मधुरतमानि पौनःपुन्येन पठनीयानि मङ्गलमयानि पद्यात्मकानि यानि वाक्यानि, तमर्जुनं प्रोवाच, तानि सर्वलोकानुजिघृक्षया परमकृपालुः परमर्षिः पाराशर्य्यः कृष्णद्वैपायनो वेदव्यासो ग्रन्थरूपेण-उपनिबबन्ध। सोऽयं ग्रन्थो भगवन्मुखनिःसृतवाक्यसन्दर्भात्मकत्वेऽपि, ज्ञानप्राधान्येन-उपनिषदामतिसामीप्याद् "भगवद्गीता-उपनिषद्" इति अन्वर्थां विशिष्टसंज्ञाम् उपलेभे, तयैव च विशिष्टसंज्ञया लोके शास्त्रे च सर्वत्र पप्रथे। तत्र द्वितीयाध्यायस्थैरादिमैर्दशभिः श्लोकैः सार्धम् उपोद्धातस्वरूपः प्रथमोऽध्यायो वेदव्यासेन परमर्षिणा प्राणायि भगवद्वाक्यानामवतारार्थम्, मध्ये च-अन्ते-च-अर्जुन-सञ्जयोक्तिरूपाः कतिपयश्लोकास्तथैव प्राणायिषत भगवद्वाक्यानां संयोजनार्थं, ग्रन्थोपसंहारसौष्ठवलाभार्थं च। एवं सप्तभिः श्लोकशतैः सम्पन्नस्य परममान्यस्य ग्रन्थस्यास्य धृतराष्ट्रप्रश्नस्वरूपस्तावत् प्रथमः श्लोकः। तत्र सञ्जयं धृतराष्ट्रोऽप्राक्षीदित्यनुवदन् वैशम्पायनो राजानं जनमेजयमाह—

"धृतराष्ट्र उवाच"।

**"धर्मक्षेत्रे कुरुक्षेत्रे समवेताः युयुत्सवः।**
**मामकाः पाण्डवाश्चैव, किमकुर्वत सञ्जय!" ॥१॥**

अर्थः—सञ्जय = हे सञ्जय! धर्मक्षेत्रे = धर्मस्य पुण्यस्य जनके भूभागे, पुण्ये भूप्रदेशे, कुरुक्षेत्रे = नामतः कुरुक्षेत्रे, युयुत्सवः = योद्धुमिच्छवः, युद्धमिच्छन्तः सन्तः, समवेताः = एकीभावे सम, एकीभावः एकत्रीभावः, तम् अवेताः प्राप्ताः, एकत्रीभूताः मिलिताः, मामकाः = मम धृतराष्ट्रस्य, इमे दुर्योधनादयः, च = तथा, पाण्डवाः = पाण्डोरिमे युधिष्ठिरादयः,

एव = ते एव उभये, नान्ये, इत्यन्ययोगव्यवच्छेदोऽवधारणार्थः, किमकुर्वत = किं प्रश्ने, किमकुर्वन्, किं व्यदधुरित्यर्थः ॥ १ ॥
अथ धृतराष्ट्रप्रश्नस्योत्तरमाह सञ्जयः. इति वैशम्पायनोऽनुवदति—
"सञ्जय उवाच" ।

"दृष्ट्वा तु पाण्डवानीकं, व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य, राजा वचनमब्रवीत्" ॥२॥

अर्थः—तु=अथ, आत्मानीकदर्शनानन्तरं, राजा=राज्यकर्मण्यधिकृतो, दुर्योधनः=त्वत्पुत्रः सुयोधनो व्यूढं=युद्धकाले शकट-मकर-वज्रादिनाम्ना येनाकारविशेषेण सैन्यं स्थाप्यते, स आकारविशेषो व्यूहः, स एव बलविन्यासो नाम, तेन स्थापितं विन्यस्तं, पाण्डवानीकं=पाण्डवानां पाण्डुपुत्राणामनीकं सैन्यं बलं, दृष्ट्वा=दृष्टिपथं नीत्वा, ईक्षित्वा, तदा=तदानीमाचार्यं=धनुर्विद्याशिक्षयितारं द्रोणनामानमाचार्यमुपसङ्गम्य=उपसङ्गत्य, समीपे विनीतभावेन गत्वा, वचनं=वक्ष्यमाणं वाक्यमब्रवीत्=अवदत्, अभाषतेत्यर्थ, ॥ १ ॥

अथ द्रोणाचार्यं राजा दुर्योधनो यद् वचनमब्रवीत्, तदाह नवभिः—

"पश्यैतां पाण्डुपुत्राणाम्, आचार्य ! महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण, तव शिष्येण धीमता" ॥ ३ ॥

अर्थः—आचार्य=हे आचार्य ! धीमता=भाविपरिणामचिन्तिका बुद्धिः धीः, तद्वता, तव=ते, शिष्येण=छात्रेण, द्रुपदपुत्रेण=द्रुपदस्य राज्ञः सुतेन धृष्टद्युम्नेन, व्यूढां=वज्रनाम्ना व्यूहेन स्थितिप्रकारविशेषेण स्थापिताम्, एताम्=इमां सम्मुखे स्थितां, पाण्डुपुत्राणां=पाण्डुसुतानां, महतीं=बृहतीं, चमूं=सेनां, पश्य=प्रार्थनायां लोट्, विलोकय, इत्यर्थः॥३॥

"अत्र शूराः महेष्वासाः भीमार्जुनसमाः युधि ।
युयुधानो विराटश्च, द्रुपदश्च महारथः" ॥ ४ ॥

अर्थः—अत्र=अस्यां पाण्डुपुत्राणां सेनायाम्, अनेके, इति शेषः, महेष्वासाः=महाधनुषः, इष्वासो धनुः, इषुर्बाणः, सोऽस्यते क्षिप्यतेऽनेनेति तद्व्युत्पत्तेः, शूराः=विक्रान्ताः, तीव्राक्रमणेन शत्रुव्यूहभेदकाः,

वीराः, सन्तीति क्रियाशेषः, । कीदृशाः ? ये युधि=युद्धे, भीमार्जुनसमाः= भीमेन चार्जुनेन च तुल्याः, सदृशाः, वर्तन्ते । के ते ? आह-युयुधानः= सात्यकिः, च=तथा विराटः=अभिमन्युश्वशुरः, च=तथा महारथो द्रुपदः=द्रौपद्यास्तातः, इत्यर्थः ।

महारथ इति युयुधानविराटयोरपि विशेषणम्, "सर्वे एव महारथाः"(६) इत्युपसंहारादिति केचित् । महारथस्य लक्षणं वक्ष्यते॥४॥

"धृष्टकेतुश्चेकितानः, काशिराजश्च वीर्यवान् ।
पुरुजित् कुन्तिभोजश्च, शैब्यश्च नरपुङ्गवः" ॥५॥

अर्थः—धृष्टकेतुः=धृष्टकेतुनामा शिशुपालपुत्रः, चेकितानः= चिकितानपुत्रः, च=तथा वीर्यवान्=अतिशयबलं वीर्यं, तद्वान्, काशिराजः=काशिदेशाधिपतिर्बृहद्बलः, पुरुजित्=पुरुजिद् राजा, च= तथा, कुन्तिभोजः=पाण्डवमातुः कुन्त्याः पिता, च=तथा, नरपुङ्गवः= पुरुषर्षभः, मनुष्यश्रेष्ठः, शैब्यः=शिबिगोत्रो राजा, इत्यर्थः ।

धृष्टकेत्वादीनां त्रयाणां विशेषणं वीर्यवान् तथा पुरुजिदादीनां त्रयाणां विशेषणं नरपुङ्गवः, इत्यपरे ॥ ५ ॥

"युधामन्युश्च विक्रान्तः, उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च, सर्व एव महारथाः" ॥६॥

अर्थः—च=तथा, विक्रान्तः=विशिष्टपराक्रमः, विशिष्टत्वं महत्त्वं, शूरः, इति यावत्, युधामन्युः=युधामन्युनामा पाञ्चालः, च=तथा, वीर्यवान्=अतिशयबलः, उत्तमौजाः=पाञ्चालो नृपतिरुत्तमौजाः, सौभद्रः= सुभद्रातनयोऽभिमन्युः, च=तथा द्रौपदेयाः="प्रथमः प्रतिविन्ध्यस्तु श्रुतसेनस्तथाऽपरः । श्रुतकीर्तिः शतानीकः श्रुतकर्मा तु पञ्चमः" इति श्लोकोक्ताः प्रतिविन्ध्यादयः पञ्च द्रौपदीपुत्राः, सर्वे=युयुधान- मारभ्य ये सप्तदश परिगणिताः, ये च घटोत्कचप्रभृतयो न गणिताः, ते सर्वे, महारथा एव=एकरथार्द्धरथव्यवच्छेदोऽत्रधारणार्थः, नैषामेकोऽ- प्येकरथोऽर्द्धरथो वा, किन्तु सर्वे महारथा एवेत्यर्थः ।

अर्जुनो भीष्मवदतिरथः प्रसिद्धत्वात् नात्र पर्यगणायि, तथाऽ- न्येऽपि महारथाः सर्वे पाण्डुतनया न पर्यगणायिषत । महारथादीनां लक्षणं तु पूर्वाचार्यैरेवम स्मारि—

"एको दशसहस्राणि, योधयेद् यस्तु धन्विनाम् ।
शस्त्रशास्त्रप्रवीणश्च, स महारथ उच्यते ॥ १ ॥
अमितान् योधयेद् यस्तु, स प्रोक्तोऽतिरथाभिधः ।
रथस्तु एकेन यो योद्धा, तन्न्यूनोऽर्द्धरथः स्मृतः" ॥२॥ इति ॥६॥

अथ पाण्डवसेनायां ये विशिष्टाः, तानुक्त्वा स्वसेनाविशिष्टान् वक्तुं प्रतिजानीते—

"अस्माकं तु विशिष्टा ये, तान् निबोध द्विजोत्तम! ।
नायका मम सैन्यस्य, संज्ञार्थं तान् ब्रवीमि ते" ॥७॥

अर्थः—अस्माकं तु=पाण्डवानां व्यवच्छेदस्तोरर्थः, अस्माकं धार्त्तराष्ट्राणां तु, ये=ये केचन, विशिष्टाः=एकरथत्व-महारथत्वादि-विशेषणोपेताः, शूराः इति यावत्, मम=राज्ञो मम, सैन्यस्य=बलस्य, नायकाः=नेतारः, तान्=अमून् द्विजोत्तम=हे द्विजश्रेष्ठ ! हे ब्राह्मण ! निबोध=भौवादिकस्य बुधे रूपं, प्रार्थनायां लोट्, नितरां बुध्यस्व, संजानीहि, संज्ञार्थं=संज्ञानं संज्ञा स्मृतिरुपस्थितिः, तदर्थं, ते=तुभ्यं, ब्रवीमि=वच्मि, कथयामीत्यर्थः ॥ ७ ॥

अथ यथाप्रतिज्ञं स्वसेनाविशिष्टान् ब्रवीति—

"भवान् भीष्मश्च कर्णश्च, कृपश्च समितिञ्जयः ।
अश्वत्थामा विकर्णश्च, सोमदत्तिस्तथैव च" ॥८॥

अर्थः—भवान्=तत्रभवान् द्रोणाचार्यः,च=तथा भीष्मः=पितामहो भीष्मः,च=तथा कर्णः=अङ्गराजः कर्णः, च=तथा समितिञ्जयः=युद्धजित्, समितिं युद्धं जयतीति तद्व्युत्पत्तेः, कृपः=अश्वत्थाममातुलः कृपाचार्यः, अश्वत्थामा=कृपीगर्भजो भवत्पुत्रः, च=तथा विकर्णः=विकर्णाख्यो मम राज्ञः कनिष्ठो भ्राता, च=तथा सौमदत्तिः=सोमदत्तपुत्रो भूरिश्रवाः, तथा-एव=भवदादिवदेव शूर इत्यर्थः ॥८॥

अथैकैकोक्तिभारमसहमानः प्राह—

"अन्ये च बहवः शूराः, मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः, सर्वे युद्धविशारदाः" ॥९॥

अर्थः—अन्ये च=इतरेऽपि, बहवः=अनेके शल्य-कृतवर्मप्रभृतयः, शूराः=शौर्यशालिनो वीराः, मदर्थे=मत्प्रयोजनाय, मत्प्रयोजनसिद्ध्यै, त्यक्तजीविताः=दत्तजीवनाः, त्यक्तं दत्तं जीवितं जीवनं प्राणो यैरिति तद्व्युत्पत्तेः, नानाशस्त्रप्रहरणाः=अनेकविधशस्त्रप्रहर्तारः, विविध-शस्त्रास्त्रप्रहारज्ञा इति यावत्, किं बहुना, सर्वे=विश्वे, युद्धविशारदाः=संग्रामकुशलाः, इत्यर्थः ॥ ९ ॥

किञ्च—

"अपर्याप्तं तदस्माकं, बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां, बलं भीमाभिरक्षितम्" ॥१०॥

अर्थः—तद्=यस्य बलस्य भवदादयो विशिष्टास्तद्, भीष्माभि-रक्षितं=सूक्ष्मबुद्धिना भीष्मेण सेनापतिनाऽभितो रक्षितम् अवितं, सर्वतो गोपायितम्, अस्माकं=धार्त्तराष्ट्रणामस्माकं, बलं=सैन्यम्, अपर्याप्तम्=अपरिमितम्, एकादशाक्षौहिणीसंख्योपेतत्वादत्यधिकं, बहुलमिति यावत् । एतेषां तु=अस्मद्व्यवच्छेदस्तोरर्थः, एषां पाण्डवानां तु, भीमाभिरक्षितं=स्थूलमतिना भीमेन सर्वतो रक्षितम् अवितम्, इदम्=एतत् पुरतः स्थितं, बलं=सैन्यं, पर्याप्तं=परिमितं, सप्ताक्षौहिणीमात्रत्वा-दतिन्यूनमित्यर्थः ॥ १० ॥

अथ विशिष्टानुक्त्वा कर्तव्यमाह—

"अयनेषु च सर्वेषु, यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु, भवन्तः सर्व एव हि" ॥११॥

अर्थः—सर्वेषु=विश्वेषु, च=एव, अयनेषु=वर्त्मसु व्यूहस्य प्रवेश-निर्गममार्गेषु, यथाभागं=यद् यद् अयनं वर्त्म यस्य यस्य सेनानायकस्य भागत्वेन विभज्य नियमितं नियन्त्रितं, तं स्वंस्वं भागमनतिक्रम्य, अवस्थिताः=अवधानेन-अप्रमादेन, चतुरक्षाः सन्तः स्थिताः, भवन्तः=तत्रभवन्तः, सर्वे एव=समस्ता एव, हि=निश्चयेन-विभ्रमाभावेन, भीष्ममेव=सेनापतिं भीष्मपितामहमेव, नतु मामित्येवार्थः, अभि-रक्षन्तु=अभितः सर्वतः पुरतः पृष्ठतः पार्श्वतो रक्षन्तु गोपायन्त्वित्यर्थः ।

सेनापतौ हि रक्षिते सर्वं रक्षितं भवति, तस्मिन्नरक्षिते चा-रक्षितं सर्वम् । स च सर्वं सैन्यमधिष्ठाय मध्ये तिष्ठन् शत्रुभिर्युध्य-

मानो गाढं व्यग्रः कदाचित् पृष्ठतः पार्श्वतः पुरतो वा हन्तुमायन्तं शत्रुं नावेक्षेत, नावेक्ष्यमाणश्चासौ रिपुः स्याद् एनं हन्यात् । अतो भवतां सर्वेषाम् आत्मरक्षणस्य हेतोः सेनापतेरस्य भीष्मस्य रक्षणं परमावश्यकं कर्म ॥ ११ ॥

अथ तत्पश्चात् यद् वृत्तं, तद् धृतराष्ट्रेण पृष्टः सञ्जय आह—

**"तस्य सञ्जनयन् हर्षं, कुरुवृद्धः पितामहः ।**
**सिंहनादं विनद्योच्चैः, शङ्खं दध्मौ प्रतापवान्" ॥१२॥**

अर्थः—तस्य=अमुष्य द्रोणाचार्यमुपसङ्गम्य वचनं ब्रुवतो राज्ञो दुर्योधनस्य, हर्षं=ह्लादं, सञ्जनयन्=समुत्पादयन्, युद्धोत्साहं वर्धयन्, कुरुवृद्धः=धार्त्तराष्ट्रेषु पाण्डवेषु च कुरुसन्तानेषु-आयुष्टो वृद्धः, प्रतापवान्=प्रतापस्तेजः, तद्वान्, तेजस्वी, प्रतापी, पितामहः=पितुः पिता भीष्मः, उच्चैः=महान्तं, सिंहनादं=सिंहनादतुल्यनादं, विनद्य=विधाय, मृगेन्द्रगर्जनं गर्जित्वेति यावत्, शङ्खं=शङ्खनामानं वाद्यविशेषं, दध्मौ=वादनकर्मा धमतिः, वादयामासेत्यर्थः ॥ १२ ॥

**"ततः शङ्खाश्च भेर्य्यश्च, पणवानकगोमुखाः ।**
**सहसैवाभ्यहन्यन्त, स शब्दस्तुमलोऽभवत्" ॥१३॥**

अर्थः—ततः=पितामहशङ्खवादनानन्तरं, शङ्खाश्च, भेर्य्यश्च, पणवानकगोमुखाः=पणवाश्च, आनकाश्च, गोमुखाश्च, सर्वे वाद्यविशेषाः, सहसैव=तत्क्षणमेव, द्रागित्येव, अभ्यहन्यन्त=कर्मकर्तरि लकारः, अभिहताः, स्वयमेव वादिताः अभूवन्, सः=असौ, शब्दः=रवः, शङ्खादिवाद्यविशेषेभ्यो निःसृतः शब्दः, तुमलः=भयङ्करः, हृदयकम्पनोऽभवत्=अजायतेत्यर्थः ।

भेरी=दुन्दुभिः, पणवाः=ढोलेति ख्याताः, आनकाः=मृदंगाकृतिवाद्यविशेषाः गोमुखाः=नृसिंहाः ॥ १३ ॥

**"ततः श्वेतैर्हयैर्युक्ते, महति स्यन्दने स्थितौ ।**
**माधवः पाण्डवश्चैव, दिव्यौ शङ्खौ प्रदध्मतुः" ॥१४॥**

अर्थः—ततः=भीष्मादिवाद्योद्घोषानन्तरं श्वेतैः=शुक्लवर्णैः, हयैः=अश्वैः, युक्ते=युते, महति=बृहति, स्यन्दने=रथे, नन्दिघोषाख्ये

शताङ्गे, स्थितौ=रथिसारथिभावेन प्रतिष्ठितौ, माधवः=मायापतिः, माया योगमाया प्रकृतिः, तस्याः स्वामी श्रीकृष्णः, च=तथा, पाण्डवः=, पाण्डुपुत्रोऽर्जुनः, एव=द्वावेव, दिव्यौ=अद्भुतौ शङ्खौ, प्रदध्मतुः= प्रकर्षेण बलाधिक्येन वादयामासतुरित्यर्थः । तत्रार्जुनो रथी, सारथिः श्रीकृष्णः ॥ १४ ॥

"पांचजन्यं हृषीकेशो, देवदत्तं धनञ्जयः ।
पौण्ड्रं दध्मौ महाशङ्खं, भीमकर्मा वृकोदरः" ॥१५॥

अर्थः—हृषीकेशः=इन्द्रियाणि हृषीकाणि, तेषामीशः स्वामी, स्वाधीनेन्द्रियः श्रीकृष्णः, पाञ्चजन्यं=पाञ्चजन्यनामानं शङ्खं, दध्मौ= वादयाम्बभूव, धनञ्जयः=धनप्राप्तिनिमित्तं युद्धं धनं, तज्जिद्, युद्धेन धनानां जेता वा, अर्जुनो, देवदत्तं=देवदत्तनामानं, भीमकर्मा=भयङ्करव्यापारो वृकोदरः=व्याघ्रो वृकः, तत्तुल्योदर्य्यो भीमसेनः, पौण्ड्रं= पौण्ड्रनामानं, महाशङ्खं=वृहच्छङ्खं, दध्मौ=वादयाञ्चकारेत्यर्थः ॥१५॥

"अनन्तविजयं राजा, कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च, सुघोषमणिपुष्पकौ" ॥१६॥

अर्थः—कुन्तीपुत्रः=पृथातनयो राजा=नृपतिर्युधिष्ठरोऽनन्तविजयम्=अनन्तविजयनामानं शङ्खं दध्मौ । नकुलः=माद्रीपुत्रो नकुलः, च=तथा सहदेवः=नकुलस्य कनिष्ठो भ्राता सहदेवः, सुघोषमणिपुष्पकौ=सुघोषनामानं, मणिपुष्पकनामानं च शङ्खं दध्मौ, इत्यर्थः ॥१६॥

"काश्यश्च परमेष्वासः, शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च, सात्यकिश्चापराजितः" ॥१७॥

अर्थः—च=तथा, परमेष्वासः=महाचापः, काश्यः=काशिराजः, च=तथा महारथः शिखण्डी=शिखण्डो दाढिकाभावः, सोऽस्यास्तीति शिखण्डी दाढिकारहितः, स्त्रीमुखः, खोत, इति लोकेषु विश्रुतः द्रुपदपुत्रः, धृष्टद्युम्नः=द्रुपदज्येष्ठपुत्रः, च=तथा, विराटः= अभिमन्युश्वशुरः, च=तथा, अपराजितः=न परैः शत्रुभिराजीयते, सोऽपराभिभूतः, अजितः, सात्यकिः=युयुधानः ॥ १७ ॥

"द्रुपदो द्रौपदेयाश्च, सर्वशः पृथिवीपते ! ।
सौभद्रश्च महाबाहुः, शङ्खान् दध्मुः पृथक् पृथक्" ॥१८॥

अर्थः—द्रुपदः=द्रौपदीपिता, च=तथा द्रौपदेयाः=द्रौपदीपुत्राः प्रतिविन्ध्यादयः, च=तथा महाबाहुः=महाभुजबलः, आजानुबाहुरित्यपरे, सौभद्रः=सुभद्रातनयोऽभिमन्युः, सर्वशः=सर्वे, पृथिवीपते= हे सर्वभूस्वामिन्-हे राजाधिराज धृतराष्ट्र ! पृथक् पृथक्=भिन्नं भिन्नं, स्वे स्वे स्थाने स्थिता एव, शङ्खान् = स्वान् स्वान् शङ्खान् दध्मुः = प्रदध्मुः, वादयामासुरित्यर्थः ॥ १८ ॥

"स घोषो धार्त्तराष्ट्राणां, हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव, तुमुलो व्यनुनादयन्" ॥१९॥

अर्थः—सः = असौ, घोषः = रवः, पाण्डवशङ्खानां शब्दः, नभः = अन्तरिक्षं, च=तथा पृथिवीं = भूमिं, च = उभयमेव = न केवलं नभः,न केवलां पृथिवीं, किंतु द्वयमेव, इत्ययोगव्यवच्छेद एवार्थः, व्यनुनादयन् = प्रतिध्वनयन्, विशिष्टेनानुशब्देनापूरयन्, तुमुलः = भयङ्करः सम्पन्नः, धार्त्तराष्ट्राणां=धृतराष्ट्रस्य तव पुत्राणां दुर्योधनमुख्यानां, हृदयानि= चेतांसि, व्यदारयत् = विशेषेणाव्यथयत्, हृदयविदारणतुल्यां पीडामुदपादयदित्यर्थः ॥ १९ ॥

ननु पुनः किं जातम ? इति पृष्टः सञ्जय आह—

"अथ व्यवस्थितान् दृष्ट्वा, धार्त्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते, धनुरुद्यम्य पाण्डवः" ॥२०॥

"हृषीकेशं तदा वाक्यम्, इदमाह महीपते ! ।
सेनयोरुभयोर्मध्ये, रथं स्थापय मेऽच्युत !" ॥२१॥

अर्थः—अथ=शङ्खवादनानन्तरं, कपिध्वजः=कपिर्वानरः, तदाकृतिचिह्नं ध्वजे केतने पताकायां यस्य, स पाण्डवः=पाण्डुतनयोऽर्जुनः, धार्त्तराष्ट्रान्=धृतराष्ट्रस्य तव पुत्रान् दुर्योधनादीन्, व्यवस्थितान्= युद्धोद्योगेन स्वेस्वे स्थाने सावधानतया स्थितान्, दृष्ट्वा=ईक्षित्वा, शस्त्रसम्पाते=शस्त्राणां सम्यक्पातने प्रहरणे, प्रवृत्ते=वर्तमाने कः,

प्रवर्तमाने, प्रयोगाभिमुखे सति, तदा=तदानीं, शस्त्रसम्पातप्रवृत्ति-समये, धनुः=गाण्डीवसंज्ञं कोदण्डम्, उद्यम्य=उद्धृत्य उद्यतं कृत्वा, हृषीकेशं=वश्येन्द्रियं श्रीकृष्णम्, इदम्=एतद्, वाक्यं=वचनं, महीपते=हे पृथिवीपते धृतराष्ट्र! आह=उवाच, किम् ? उभयोः=द्वयोः, सेनयोः=बलयोः, मध्ये=मध्यमे भूभागे, मे=मम, रथं=स्यन्दनम्, अच्युत=हे अटलस्वभाव! हे दृढप्रतिज्ञ!, स्थापय=निधापय, स्थितं कुर्वित्यर्थः ॥२०॥२१॥

ननु कियत्कालम् ? इति जिज्ञासायामर्जुन आह—

"यावदेतान् निरीक्षेऽहं, योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे" ॥२२॥

अर्थः—यावत्=यावत्कालं, योद्धुकामान्=युद्धाभिलाषुकान्, युयुत्सून्, अवस्थितान्=अवधानेन-अप्रमादेन पुरतः स्थितान्, एतान्=इमान्, अहं=पाण्डवोऽहं, निरीक्षे=अवलोके । निरीक्षणप्रयोजनमाह-अस्मिन्=एतस्मिन्, रणसमुद्यमे=युद्धोद्योगे, कैः=कर्तरि तृतीया, कैः-योद्धृभिः, मया=अर्जुनेन मया, सह=सार्धं, कैर्वा सह=सार्धं मयाऽ-र्जुनेन, योद्धव्यं=युद्धं कर्तव्यमिति निरीक्षे, इत्यर्थः ॥२२॥

किञ्च—

"योत्स्यमानान् अवेक्षेऽहं, य एतेऽत्र समागताः ।
धार्त्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः" ॥२३॥

अर्थ—योत्स्यमानान्=युद्धं करिष्यमाणान्, सर्वान् एतान्, अहं=पाण्डवोऽहम्, अवेक्षे=निरीक्षे, ये एते=ये इमे, दुर्बुद्धेः=दुष्टमतेः, विपरीत-धिषणस्य, धार्त्तराष्ट्रस्य=धृतराष्ट्रसूनोर्दुर्योधनस्य, युद्धे=संग्रामे, प्रिय-चिकीर्षवः=प्रियमिष्टं कर्तुं विधातुमिच्छवः सन्तोऽत्र=इह युद्धभूमौ, समागताः=सङ्गत्यागताः, इत्यर्थः ॥२३॥

ननु तदनु किं वृत्तमिति पुनर्धृतराष्ट्रेण पृष्टः सञ्जयो यत् प्रत्युवाच, तद् वैशम्पायनोऽवतारयति—

"सञ्जय उवाच"।

"एवमुक्तो हृषीकेशो, गुडाकेशेन भारत ! ।
सेनयोरुभयोर्मध्ये, स्थापयित्वा रथोत्तमम्" ॥२४॥

" भीष्मद्रोणप्रमुखतः, सर्वेषां च महीक्षिताम्।
उवाच पार्थ! पश्यैतान् समवेतान् कुरूनिति" ॥२५॥

अर्थः—भारत=हे भरतसन्तान धृतराष्ट्र! एवम्=इत्थं, गुडाकेशेन=गुडवन्मधुरत्वात् गुडाका निद्रा, तस्या ईशेन स्वामिना, जितनिद्रेणार्जुनेन, उक्तः=अभिहितो हृषीकेशः=जितेन्द्रियो भगवान् श्रीकृष्णः, उभयोः=द्वयोः,सेनयोः=सैन्यदलयोः,मध्ये=मध्यमे भूप्रदेशे, रथोत्तमं=सर्वेषां रथानामुत्तमं पाण्डवरथं, भीष्मद्रोणप्रमुखतः= भीष्मस्य द्रोणस्य च प्रमुखे सम्मुखे, च=तथा सर्वेषां=विश्वेषां, महीक्षितां=क्षियतिरैश्वर्यकर्मा,मह्यां पृथिव्यामैश्वर्यवतां शल्यप्रभृतीनां भूभुजां प्रमुखे, स्थापयित्वा=स्थितं कृत्वा, पार्थ=हे पृथायाः कुन्त्याः पुत्र! एतान्=इमान् समवेतान्=सङ्घीभूतान्,युद्धाय सम्भूयावस्थितान्, कुरून्=कुरुवंश्यान् त्वं पश्य=अवलोकय, इति=एतद् उवाच= उवादेत्यर्थः ॥२५॥

अथ हृषीकेशेनोक्तः पार्थस्तत्र यदपश्यत्, तदाह—

"तत्रापश्यत् स्थितान् पार्थः, पितॄनथ पितामहान्।
आचार्यान् मातुलान् भ्रातॄन्,पुत्रान् पौत्रान् सखींस्तथा"
"श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ॥२६॥

अर्थः—तत्र=रणभूमौ, पार्थः=पृथातनयोऽर्जुनः, उभयोरपि= द्वयोरपि,सेनयोः=सैन्ययोः, स्थितान्=युद्धार्थमवस्थितान्, पितॄनपश्यत्, सुहृदश्चापश्यदित्येवं द्वितीयान्तस्य प्रत्येकं क्रियापदेनान्वयः, पितॄन्, पितामहान्, सुहृदश्च विहाय, नान्यान् काँश्चिदपश्यदित्येवार्थः,पितॄन्= पितृव्यान् भूरिश्रवादीन्, अथ=तथा पितामहान्=भीष्मादीन्, आचार्यान्=द्रोणादीन्, मातुलान्=शल्यादीन्, भ्रातॄन्=दुर्योधनादीन्, पुत्रान्=लक्ष्मणाभिमन्युप्रभृतीन्, पौत्रान्=लक्ष्मणादिपुत्रपुत्रान्, तथा सखीन्=वयस्यानश्वत्थामप्रभृतीन्, श्वशुरान्=द्रुपदादीन्, च=तथा सुहृदः=कृतवर्म-भगदत्तादीन् कृतोपकारानपश्यदित्यर्थः ॥२६॥

ननु दृष्ट्वा किं व्यदधात्? तत्राह—

तान् समीक्ष्य स कौन्तेयः, सर्वान् बन्धूनवस्थितान्॥२७

**कृपया परयाऽऽविष्टो, विषीदन् इदमब्रवीत् ।**

अर्थः—सः=असौ, कौन्तेयः=कुन्तीपुत्रोऽर्जुनः, तान्=अमून्, सर्वान्=सम्पूर्णान् बन्धून्=बान्धवान्, अवस्थितान्=युद्धार्थमवधानेनाप्रमादेन स्थितान्,समीक्ष्य=निरीक्ष्य,परया=अस्त्रयाऽस्वाभाविक्या, मोहजन्यया, कृपया=करुणया, आविष्टः=व्याप्तः, विषीदन्=विलपन्, शोचन्, दुःख्यन्, इदम्=एतद्, अब्रवीत्=अगदीद्,अभाषतेत्यर्थः ॥२७॥

अथ यदब्रवीदर्जुनः, तदुदाहरति—

"अर्जुन उवाच" ।

**"दृष्ट्वेमं स्वजनं कृष्ण!, युयुत्सुं समुपस्थितम् ॥२८॥**
**सीदन्ति मम गात्राणि, मुखं च परिशुष्यति ।**
**वेपथुश्च शरीरे मे, रोमहर्षश्च जायते" ॥ २९ ॥**

अर्थः—कृष्ण=हे कृष्ण ! इमम्=एतं स्वजनं=स्वबन्धुवर्गं पितृपितामहादिकं, युयुत्सुं=योद्धुकामं, समुपस्थितं=सम्यक्-शस्त्रास्त्रादिभिः सुसज्य, समीपे अन्योऽन्यस्य पुरतः स्थितं, दृष्ट्वा=लोकित्वा, मम=मे, गात्राणि=अङ्गानि करचरणादीनि, सीदन्ति=विश्लिष्यन्ति, त्रुट्यन्ति, निश्चेष्टानि बोभुवति, च=तथा, मुखं=वक्त्रं, परिशुष्यति=परिवायति,परितः सर्वतः-बाह्याभ्यन्तरतः शुष्कीभवति, निर्द्रवीभवति, च=तथा, मे=मम शरीरे=देहे, वेपथुः=कम्पः, च=तथा रोमहर्षः=रोमाञ्चो जायते=बोभूयते, इत्यर्थः ॥२९॥

**"गाण्डीवं स्रंसते हस्तात्, त्वक् चैव परिदह्यते ।**
**न च शक्नोम्यवस्थातुं, भ्रमतीव च मे मनः" ॥३०॥**

अर्थः—गाण्डीवं=गाण्डीवनामकं धनुः,हस्तात्=करात्,स्रंसते=निपतति, च=तथा त्वक्=चर्म, एव=निश्चयेन, परिदह्यते=सर्वतः सन्तप्यते । च=तथा, अवस्थातुं=शरीरं धारयितुं, न शक्नोमि=न पारयामि, च=तथा, मे=मम, मनः=स्वान्तं भ्रमतीव=भ्राम्यतीव, भ्रमणं करोतीव-भ्रमणकर्तृसदृशं भ्रमणमनुभवत्येव, न जातु प्रकृतिस्थं तत् प्रत्यवेमीत्यर्थः ॥३०॥

"निमित्तानि च पश्यामि, विपरीतानि केशव ! ।
न च श्रेयोऽनुपश्यामि, हत्वा स्वजनमाहवे" ॥३१॥

अर्थः—च = तथा, केशव = हे प्रशस्तकेश ! निमित्तानि = मनोभ्रमणसदृशानि कारणानि, चिह्नानि, विपरीतानि = अशुभानि, पश्यामि = लोचयामि, च तथा, आहवे = युद्धे, स्वजनं = स्वबन्धुवर्गं, हत्वा = हिंसित्वा, श्रेयः = कल्याणम्, ऐहिकामुष्मिकं किञ्चिदिष्टं फलं, नानुपश्यामि = नानुभवामीत्यर्थः ॥३१॥

नन्वस्ति विजयादिकमैहिकं श्रेयः, कुतस्तत् न पश्यसि ? तत्राह—

"न कांक्षे विजयं कृष्ण ! न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द ! किं भोगैर्जीवितेन वा" ॥३२॥

अर्थः—कृष्ण = हे कृष्ण ! विजयं = विशिष्टं जयमुत्कर्षं न कांक्षे = न कामये, च = तथा, राज्यं = राज्ञां कर्म प्रजाशासनादिकं, च = तथा, सुखानि = राज्यफलभूतानि विषयभोगसुखानि, न कांक्षे नापेक्षे। गोविन्द = हे वेदवाणीलब्धरहस्य ! हे वेदतत्त्वज्ञ ! नः = अस्माकं, राज्येन = बन्धुबधमूलकेन राजकर्मणा, किं = किं प्रयोजनं, भोगैः = राज्यमूलकैर्विषयभोगैः, विषयभोगसुखैः, किं = किं प्रयोजनं, जीवितेन = विषयभोगसुखार्थेन, उपक्रोशमलीमसेन क्षणिकेन प्राणधारणेन, वा = च, किं = किं प्रयोजनं, किं सर्वत्राक्षेपे, न किमपि प्रयोजनमित्यर्थः ॥ ३२ ॥

नन्वेकाकिनोऽर्जुनस्य ते राज्यभोगसुखाकांक्षा मा भूत, स्वबन्धुवर्गस्यार्थे तु सोचितैव ? तत्राह—

"येषामर्थे कांक्षितं नो, राज्यं भोगाः सुखानि च ।
त इमे ऽवस्थिता युद्धे, प्राणाँस्त्यक्त्वा धनानि च" ॥३४

अर्थः—नः = अस्माकं, येषां = पितृपितामहादीनां स्वबन्धूनां येषाम्, अर्थे = निमित्ते, यदर्थमिति यावत्, राज्यं = प्रजाशासनादिकं राजकर्म, काङ्क्षितं = वाञ्छितं, भोगाः = राज्यमूलकविषयभोगाः, काङ्क्षिताः अपेक्षिताः, च = तथा सुखानि = विषयभोगसुखानि, काङ्क्षितानि वाञ्छितानि । ते = सर्वे ते, इमे = एते प्राणान् = जीवितं, च = तथा,

धनानि = विषयभोगसाधनानि स्थावरजंगमानि वित्तानि, त्यक्त्वा = हित्वा, युद्धे = युद्धभूमौ, अवस्थिताः = अवधानेनाप्रमादेन स्थिताः उपस्थिता इत्यर्थः ॥ ३३ ॥

ननु के ते ? तत्राह—

"आचार्याः पितरः पुत्राः, तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः, स्यालाः सम्बन्धिनस्तथा" ३४

अर्थः—आचार्याः = द्रोणादयः, पितरः = भूरिश्रवादयः पुत्राः = अभिमन्युलक्ष्मणादयः, तथैव = यथैवैते तथैव, च = पुनः पितमहाः = भीष्मादयः । मातुलाः = शल्यादयः, श्वशुराः = द्रुपदादयः, पौत्राः = लक्ष्मणादीनां पुत्राः, स्यालाः = धृष्टद्युम्नादयः, तथा सम्बधिनः = पुत्र-पौत्राणां श्वशुरादयः ॥ ३४ ॥

ननु त्वमिदानीं किमिच्छसि ? तत्राह—

"एतान् न हन्तुमिच्छामि, घ्नतो ऽपि मधुसूदन! ।
अपि त्रैलोक्यराज्यस्य, हेतोः किं नु महीकृते" ॥३५॥

अर्थः—मधुसूदन = हे मधोर्हन्तः ! घ्नतोऽपि = घातयतोऽपि, शस्त्रास्त्रैरस्मान् हिंसतोऽपि, एतान् = इमान् पितृपितामहादीन्, त्रैलोक्यराज्यस्य = भुवनत्रयाधिपत्यस्य, हेतोरपि = प्राप्तिनिमित्तेऽपि, त्रिलोकीस्वामित्वप्राप्त्यर्थमपि, न हन्तुं = न हिंसितुम्, इच्छामि = वाञ्छामि, किं नु = किं पुनः, महीकृते = पृथिवीराज्यनिमित्ते, भूलोकमात्राधिपत्यप्राप्त्यर्थमित्यर्थः ॥ ३५ ॥

ननु वधोद्यतत्वाद् आततायिनो धार्त्तराष्ट्राः सर्वे, तस्माद् हन्तव्याः, आततायिनां हनने दोषाभावात् ? तत्राह—

"निहत्य धार्तराष्ट्रान् नः, का प्रीतिः स्याद् जनार्दन! ।
पापमेवाश्रयेदस्मान्, हत्वैतानाततायिनः" ॥३६॥

अर्थः—जनार्दन = हे दुष्टजनमर्दन ! धार्तराष्ट्रान् = धृतराष्ट्रस्य पुत्रान् दुर्योधनमुख्यान् स्वबान्धवान्, निहत्य = निःशेषेण हत्वा, नः = अस्माकं, का = किं, प्रीतिः = सुखं, स्यात् = भवेत्, किमाक्षेपे, न स्यादित्येतत् । आततायिनः = लोकशास्त्रमर्यादामतिक्रम्य स्वार्थवशेन परानिष्टकारिणः

शस्त्रहस्तान् बधोद्यतानपि, एतान् = इमान्, हत्वा = हिंसित्वा, अस्मान्= पाण्डवानस्मान्, पापमेव = पुण्यव्यवच्छेदोऽवधारणार्थः, दुरितमेव, दुष्कृतमेव न सुकृतमित्येतत्, आश्रयेत्=संस्पृशेत् लगेदित्यर्थः। यद्यपि "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारहरश्चैव, षडेते आततायिनः" ॥ (वसिष्ठस्मृ० ३। १६) इतिलक्षणयोगाद् आततायिनो धार्तराष्ट्राः, "आततायिनमायान्तं हन्यादेवाविचारयन्। नाततायिवधे दोषो हन्तुर्भवति कश्चन" ॥ (मनु० ८। ५०-५१) इति धर्मशास्त्रविहितश्चाततायिवधः, तथापि धार्तराष्ट्रा न केवलमाततायिनः, किन्तु बन्धवोऽपि, शास्त्रं चाततायिवधं निर्दोषमाह, नात्मबन्धुवधम्। आत्मबन्धुवधश्च सर्वथा निषिद्धत्वात् पापं कर्म, तत् कथं धार्तराष्ट्रान् स्वबान्धवान् निहत्यास्मकं प्रीतिः=सुखं भविष्यति। सुखस्य सर्वत्र पुण्यमूलत्वकीर्तनात् ॥ ३६ ॥

तर्हि कस्ते निश्चयः? तत्राह—

**"तस्मान्नार्हाः वयं हन्तुं, धार्तराष्ट्रान् स्वबान्धवान्।**
**स्वजनं हि कथं हत्वा, सुखिनः स्याम माधव!" ॥३७॥**

अर्थः—तस्मात्=यस्माद् धार्तराष्ट्राणां हनने दुःखहेतुपापसंस्पर्शोऽवश्यम्भावी, तस्माद् धार्तराष्ट्रान्=धृतराष्ट्रपुत्रान् दुर्योधनादीन्, स्वबान्धवान्=निजबन्धून, हन्तुं=हिंसितुं, वयं=पाण्डवा वयं, नार्हाः= न योग्याः, नेच्छाम इत्येतत्। माधव=हे मायाधव! स्वजनं=निजबन्धुवर्गं, हत्वा=घातयित्वा, हि=प्रश्ने, वयं=पाण्डवा वयं, कथं=केन प्रकारेण, सुखिनः=सुखभाजः, स्याम=भवेमेति त्वमेव कथयेत्यर्थः ॥ ३७ ॥

ननु स्वजनत्वमुभयत्र तुल्यम्। तत्र कथमेकाकिनो भवन्तः एव स्वजनहनने दोषमवलोकयन्ति, न धार्तराष्ट्राः? तत्राह—

**"यद्यप्येते न पश्यन्ति, लोभोपहतचेतसः।**
**कुलक्षयकृतं दोषं, मित्रद्रोहे च पातकम्" ॥ ३८ ॥**
**"कथं न ज्ञेयमस्माभिः, पापादस्मान्निवर्तितुम्।**
**कुलक्षयकृतं दोषं, प्रपश्यद्भिर्जनार्दन!" ॥ ३९ ॥**

अर्थः—यद्यपि = चेदपि, एते = इमे धार्तराष्ट्रा दुर्योधनादयोः, लोभोपहतचेतसः = राज्यस्य लोभेनोपहतं नष्टं चेतः पुण्यापुण्यविवेकविषयं चित्तं येषां, ते तथा सन्तः, कुलक्षयकृतं = कुलस्य स्वबन्धुवृन्दस्य क्षयेण नाशेन कृतमुत्पन्नं, कुलनाशे सति जायमानं, दोषं = नरकपातादिलक्षणं दोषं,च = तथा मित्रद्रोहे = मित्रवदाचरतामस्माकं पाण्डवानां द्रोहो जिघांसा बधः,तत्र भवं पातकं = पापं, न पश्यन्ति = मनोनेत्रेण न लोचयन्ति,न विविच्य जानन्ति ॥३८॥ तथपि जनार्दन = हे दुष्टजनमर्दन ! कुलक्षयकृतं = कुलनाशे भवं, दोषं = नरकपातादिलक्षणं दोषं, प्रपश्यद्भिः = मनोनेत्रेण साक्षात् लोचयद्भिः,अस्माभिः = पाण्डुपुत्रैरस्माभिः, अस्मात् = बन्धुवधलक्षणात् कुलक्षय हेतुभूताद् एतस्मात्,पापात् = पापकर्मणो युद्धात्,निवर्तितुं = पर वर्तितुं,कथं = किमर्थं, न ज्ञेयं = न ध्येयं,कथं तस्मान्नोपरन्तव्यमित्यर्थः ॥३९॥

ननु कोऽस्ति कुलक्षयकृतो दोषः ? तत्राह—

"कुलक्षये प्रणश्यन्ति, कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नम्, अधर्मोऽभिभवत्युत" ॥४०॥

अर्थः—कुलक्षये = कुलनाशे, कुलधर्माभिज्ञसर्वपुरुषनाशे,सनातनाः = सदातनाः, अविच्छिन्नपारम्पर्येणागताः,कुलधर्माः = कुलमात्रधर्माः, आचारविशेषाः, प्रणश्यन्ति = अत्यन्तं नष्टाः भवन्ति, सर्वथा लुप्यन्ति । धर्मे = कुलधर्मे, नष्टे = प्रणष्टे, अधर्मः = प्रवर्धमानो विपरीतधर्मः, कृत्स्नम् = अखिलम्. उत = अपि, कुलम् = अवशिष्टं कुलम्, अभिभवति = अभितः प्राप्नोति, व्याप्नोति, इत्यर्थः ॥ ४० ॥

ननु किं ततः ? तत्राह—

"अधर्माभिभवात् कृष्ण !, प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय !, जायते वर्णसङ्करः" ॥४१॥

अर्थः—कृष्ण = हे कृष्ण ! अधर्माभिभवात् = अधर्मकर्तृकात् कृत्स्नस्य सकलस्य कुलस्याभिभवात्,कुलस्त्रियः = कुलमहिलाः,प्रदुष्यन्ति = भृशं दुष्टा भवन्ति, त्यक्तकुलमर्यादाः सत्यो नितान्तं दुराचरन्ति, कामचाराः बोभुवति । स्त्रीषु = कुलमहिलासु, दुष्टासु = दोषयुक्तासु, दुराचरन्तीषु वार्ष्णेय = हे वृष्णिकुलोद्भव ! वर्णसङ्करः = वर्णानाम् आर्य्यानार्य्याणां

तद्भेदानां च ब्राह्मणक्षत्रियविट्शूद्रादीनां सङ्करो मिश्रीभावो जायते = बोभूयते, मिश्रितवर्ण उत्पद्यते, इत्यर्थः ।
कुलधर्मो हि स्त्रीणां सदाचरणे परमः सहायः । यावत् खल्वेताः सर्वतोऽनुष्ठीयमानं कुलधर्मं पश्यन्ति, तावद् यत्नेन सदाचरन्ति, तदतिक्रमणे च नरकपातादिलक्षणं भयं मन्यमाना न जातु स्वप्नेऽपि दुराचरन्ति । यत्रैतदुदाहृतं भवति "हविर्भिरेके स्वरितः सचन्ते, सुन्वन्त एके सवनेषु सोमान् । शची मदन्त उत दक्षिणाभिः, नेत् जिह्मायन्त्यो नरकं पताम" ( निरु० १ । ११ ) इति । कुलनाशे च तद्धर्मप्रवर्तकपुरुषाभावात् प्रवर्धमानेनाधर्मेणाभिभूते सनातने कुलधर्मे, कामचारेण वर्तमानाः स्त्रियो नूनं प्रदुष्यन्ति, स्वतन्त्राः सत्यो दुराचरन्ति । प्रदुष्टासु दुराचरन्तीषु च तासु जायते वर्णसङ्कर इति सुध्रुवम् ॥४१॥
ननु जायतां वर्णसङ्करः, का हानिः ? तत्राह—

**"सङ्करो नरकायैव, कुलघ्नानां कुलस्य च ।**
**पतन्ति पितरो ह्येषां, लुप्तपिण्डोदकक्रियाः" ॥४२॥**

अर्थः—सङ्करः = जायमानो वर्णसङ्करः, कुलघ्नानां = कुलहन्तॄणां, च = तथा, कुलस्य = कृत्स्नस्यावशिष्टस्य पुत्रपौत्रादिलक्षणस्य कुलस्य, एव = निश्चयेन, नरकाय = नर्काय नीचैर्गमनाय, नीचगतिप्राप्तये दुर्गत्यै भवतीति शेषः । हि = च-तथा, एषामेतेषां कुलघ्नानां कुलहन्तॄणां, पितरः = स्वर्गस्थाः भूमिष्ठाश्च वृद्धवृद्धतमाः पितरः लुप्तपिण्डोदकक्रियाः = लुप्ताः लोपमदर्शनं गताऽभावं प्राप्ताऽन्नप्रदानलक्षणा श्राद्धाख्या पिण्डक्रिया, जलप्रदानलक्षणा तर्पणाख्या चोदकक्रिया येषां, ते तथा सन्तः, पतन्ति = स्वर्गसुखात् प्रच्यवन्ते, दीनाः क्षीणायुषो जायन्ते, इत्यर्थः ।

पिता, पितामहः, प्रपितामहः, माता, मातामही, पितामही, प्रपितामहीति पितरोऽत्राभिप्रेयन्ते । ते स्वर्गस्थाः स्युः, भूमिष्ठा वा भवेयुः । यदा खल्वेते स्वकुलजैः पुत्रपौत्रप्रपौत्रैः श्रद्धाभक्तिपुरस्सरं यथाविधि यथाकालं दीयमाने अन्नोदके उपलभन्ते, तदा हृष्टमनसो यथासुखमुपभुञ्जते, स्वं च बहु मन्वते, दीर्घायुषश्च बोभूयन्ते । नचान्यस्य वीर्येणोत्पादितानां पुत्रपौत्रप्रपौत्राणामस्ति पितृभिस्तैस्तैः कश्चित् परम्परागतो दृढतरः सम्बन्धः, तदभावे च कथं ते श्रद्धाभक्तिपुरस्सरं

तेभ्योऽन्नोदके यथाविधि प्रदास्यन्ति,प्रदानाभावे च कष्टेन जीवनयात्रां निर्वहन्तस्तेऽन्ततः पतिष्यन्त्येव। तदिदं पश्यन्नेव ऋषिरग्निमौरसं पुत्रं ययाचे,प्रतिषिषेध चान्यजातम्—"परिषद्यं ह्यरणस्य रेक्णो नित्यस्य रायः पतयः स्याम। न शेषोऽग्ने! अन्यजातमस्ति, अचेतानस्य मा पथो विदुक्षः" (ऋ० ७।४।७) इति ॥४२॥

उक्तं दोषमुपसंहरति—

"दोषैरेतैः कुलघ्नानां, वर्णसङ्करकारकैः।
उत्साद्यन्ते जातिधर्माः, कुलधर्माश्च शाश्वताः" ॥४३॥

अर्थः—कुलघ्नानां=कुलघातकानां, वर्णसङ्करकारकैः=वर्णानां सङ्करस्यमिश्रीभावस्यकारकैर्विधायकैः, एतैः,=एभिरुदाहृतैर्दोषैः= दूषणैरवद्यैः, जातिधर्माः=क्षत्रियत्वादिवर्णधर्माः, च=तथा शाश्वताः= सनातनाः, परम्पराप्राप्ताः, कुलधर्माः=कुलाचारनामानो वंशधर्माः, उत्साद्यन्ते=उन्मूल्यन्ते, विनाश्यन्ते, इत्यर्थः ॥ ४३ ॥

ननूत्सन्नेषु कुलजातिधर्मेषु किं भवति ? तत्राह—

"उत्सन्नकुलधर्माणां, मनुष्याणां जनार्दन!।
नरके नियतं वासो भवतीत्यनुशुश्रुम" ॥४४॥

अर्थः—जनार्दन=हे दुष्टजनमर्दन! उत्सन्नकुलधर्माणाम्= उत्सन्नाः उन्मूलिताः नष्टाःशाश्वताः सनातनाःकुलजातिधर्माःयेषां,तेषां मनुष्याणां=मनुष्याकृतीनां सङ्करप्रायाणां नराणां, नरके=दुःखमये निकृष्टे स्थाने, यत्र न किञ्चिदपि सुखमस्ति, तत्र नियतं=नियमेन, वासो=निवासो, भवति=बोभोति, इति=एतद् अनुशुश्रुम=अनुक्रमेण वृद्धानां वेदविदां पारम्पर्येणाकर्णयाम्बभूविमेत्यर्थः।

महाकष्टं खलु लोके दुःखमये निकृष्टे स्थाने नरके वासः। नहि तत्र रम्याणि गृहाणि, निर्मलानि वा वस्त्राणि, स्वादूनि वा भोजनानि, प्रातः सायं दुःखेनापि प्राप्यन्ते, वीरा वा सूनवो महिलासु गृहलक्ष्मीषु जातुचिदुत्पद्यन्ते, नचोत्पद्यमानाः अपि रूपिणो वा, चिरायुषो वा, कदाचिज्जायन्ते, न च विभवाभावात् परिचारका वा तत्र कथञ्चिद् उपलभ्यन्ते।नचातो न्यूनं किञ्चिद् दुःखं नाम मनुष्याणां प्रज्ञावताम्।

तदिदं पश्यन्नेव ऋषिरवोचत्—"ईशे हि अग्निरमृतस्य भूरेः, ईशे रायः सुवीर्यस्य दातोः। मा त्वा वयं सहसावन्! अवीराः माऽप्सवः परिषदाम माऽदुवः" (ऋ० ७।४।६) इति ॥ ४४ ॥

अथ कुलनाशे बहु दुःखं मन्यमानः प्राह—

"अहो बत महत् पापं, कर्तुं व्यवसिता वयम्।
यद् राज्यसुखलोभेन, हन्तुं स्वजनमुद्यताः" ॥४५॥

अर्थः—अहो=आश्चर्य-चित्रं, बत=कष्टम्, वयं=परमविवेकिनः सन्तोऽपि वयं पाण्डवाः, महत् पापं=स्वजनबधः प्रथममेव पापं, तत्र कुलक्षयदोषोऽपरो मिलित इति महत्पापं, कर्तुं=विधातुं, व्यवसिताः= व्यवसायं निश्चयं प्राप्ताः, अध्यवसायं चकराश्चक्रुम। किं तत् महत् पापम्? आह–यद् राज्यसुखलोभेन=राज्यस्य, राज्योचितविषयभोग-सुखस्य च लोभेन गर्द्धेन, कांक्षया, स्वजनं=निजबन्धुवर्गं, हन्तुं=हिंसितुम् उद्यताः=उद्युक्ताः स्म, इत्यर्थः ॥ ४५ ॥

अथ "पापान्मरणं श्रेयः" इति न्यायेनाह—

"यदि मामप्रतीकारम्, अशस्त्रं शस्त्रपाणयः।
धार्तराष्ट्राः रणे हन्युः, तत् मे क्षेमतरं भवेत्" ॥४६॥

अर्थः—यदि=चेद्, अशस्त्रं=न विद्यते शस्त्रं यस्य, तं न्यस्त-शस्त्रम्, अप्रतीकारं=प्रतिक्रियामकुर्वन्तं, युध्यमानं प्रति न युध्यमानं, माम्=अर्जुनं मां, शस्त्रपाणयः=शस्त्रहस्ताः, धार्तराष्ट्राः=धृतराष्ट्रपुत्राः दुर्योधनादयः, रणे=रणभूमौ कुरुक्षेत्रे, हन्युः=मारयेयुः, तत्=अदो हननं मारणं, मे=मम, क्षेमतरं=शिवतरं, भृशं, नितान्तं मङ्गलं शुभं, पापा-निष्पत्तेरत्यन्तं हितं, स्यात्=भवेत् ॥ ४६ ॥

ननु तदनन्तरं पार्थः किमकरोदिति धृतराष्ट्रेण पृष्टः सञ्जय आह–

"सञ्जय उवाच"।

"एवमुक्त्वाऽर्जुनः सङ्ख्ये, रथोपस्थ उपाविशत्।
विसृज्य सशरं चापं, शोकसंविग्नमानसः ॥४७॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा-र्जुनसंवादेऽर्जुनविषादयोगो नाम प्रथमोऽध्यायः ॥१॥

अर्थ—एवं=पूर्वोक्तप्रकारेण, उक्त्वा=श्रीकृष्णं विज्ञापयित्वा, शोकसंविग्नमानसः=बन्धुवधशोकेन संविग्नं संवेगं-प्रकम्पणं-शैथिल्यम्-औदासीन्यमित्येतत् प्राप्तं मानसं मनो यस्य, सोऽर्जुनः=कुन्तीपुत्रोऽर्जुनः, सशरं=शरैर्बाणैः सहितं चापं=धनुर्विसृज्य=सन्त्यज्य, सङ्ख्ये=रणे संग्रामे युद्धभूमौ, रथोपस्थे=रथमध्ये, उपाविशत्=उपविवेशेत्यर्थः ॥४७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्र-निष्णात पण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतो-पनिषद्वैदिकभाष्ये प्रथमोऽध्यायः ॥१॥

---

# "अथ द्वितीयोऽध्यायः"।

ननु शोकसंविग्नमानसोऽर्जुनः सशरं चापं विसृज्य यदा रथोपस्थे उपाविशत्, तदा भगवान् श्रीकृष्णस्तं किमवोचत्? इति धृतराष्ट्रेण पृष्टः सञ्जय आह—

"सञ्जय उवाच"

"तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः" ॥१॥

अर्थः—तथा = यथापूर्वमुक्तं तथा, कृपया = बन्धुमोहजन्यया करुणया, आविष्टं = व्याप्तम्, अश्रुपूर्णाकुलेक्षणम् = अश्रुभिः पूर्णे, अत एवाकुले व्याकुले दर्शनाक्षमे ईक्षणे नेत्रे यस्य, तं विषीदन्तं = विलपन्तं शोचन्तं दुःख्यन्तं, तम् = अमुं पाण्डुसूनुमर्जुनं, मधुसूदनः=मधुनाम्नोऽसुरस्य सूदयिता हन्ता, मधुं सूदयति हन्तीति तद्व्युत्पत्तेः, भगवान् श्रीकृष्णः, इदम् = एतद्, वाक्यं=वचनम्, उवाच=अवोचदित्यर्थः ॥१॥

अथ तदेव भगवद्वाक्यमवतारयति द्वाभ्याम्—

"श्रीभगवान् उवाच"।

"कुतस्त्वा कश्मलमिदं, विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन !" ॥ २ ॥

अर्थः—अर्जुन = हे अर्जुन ! अनार्यजुष्टं=नाद्ययावद् आर्यैरार्य-

जातिसम्भवैः क्षत्रियैर्जुष्टं सेवितम्, अकीर्तिकरम्=अपकीर्तिकरं, लोकेऽयशस्करम्, अस्वर्ग्यं=न स्वर्गसाधनं, परलोकेऽपि न स्वर्गदम्, इदम्=एतत्, कश्मलं=मोहः, वैचित्यम्, अज्ञानं, विपरीतज्ञानं, विषमे=समताशून्ये जयपराजयस्थाने, नितान्तानवसरे, त्वा=त्वाम्, अर्जुनं त्वां, कुतः=कस्माद् हेतोः, समुपस्थितं=समुपास्थात्, प्रापदित्यर्थः।

वैदिकाः खलु द्वावेव वर्णौ मन्यन्ते "उभौ वर्णावृषिरुग्रः पुपोष" (ऋ० १।१७९।६) इति मन्त्रवर्णाद्, आर्यवर्णो दासवर्णश्च। यत्रेदमाम्नायते "आर्यं वर्णमावत्" (ऋ० ३।३४।९) "दासवर्णमधरं गुहाऽकः" (ऋ० २१२।४) इति। तत्र दासवर्णो दस्युवर्णोऽनार्यवर्णः इत्यनर्थान्तरं, वर्णशब्दश्च जातिपर्यायः। तेनार्यदासशब्दौ मनुष्यादिशब्दवत् जातिशब्दौ, न गुणशब्दौ नापि, क्रियाशब्दाविति सिद्धान्तः ब्राह्मणादिशब्दाश्च गुणशब्दाः, न जातिशब्दाः, तद्यथोक्तं महाभाष्यकृद्भिः "सर्वे एते शब्दाः गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति (अष्टा०२।२।६) इति। तत्र क्वचित् प्रयुज्यमानो वर्णशब्दश्चोपवर्णपरो द्रष्टव्यः। उपवर्णः उपजातिः उपाधिरित्यनर्थान्तरम्। तत्रानपायिनी यावदाश्रयभाविनी जातिः, आगमापायिनी-न यावदाश्रयभाविनी चोपजातिरिति विशेषः॥ २॥

**"क्लैब्यं मा स्म गमः पार्थ ! नैतत् त्वय्युपपद्यते।**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप !" ॥३॥**

अर्थः—पार्थ=हे पृथापुत्र ! क्लैब्यं=क्लीबो नपुंसकः, तस्य भावः क्लैब्यं, नपुंसकत्वं, युद्धपराङ्मुखत्वं, मा स्म गमः=मा गाः, न तत् प्राप्नुहि, यस्माद् एतद्=इदं रणवैमुख्यलक्षणं क्लैब्यं, कातर्यं, त्वयि=वीरशिरोमणौ त्वयि, नोपपद्यते=न युज्यते। परन्तप=हे शत्रुतापन! आत्मनो विपक्षभूतान् परान् शौर्यतेजोगभस्तिभिर्भानुरिव तापयतीति तद्व्युत्पत्तेः, क्षुद्रं=क्षुद्रतासम्पादकत्वात् क्षुद्रं निकृष्टं तुच्छं, हृदयदौर्बल्यं=मनोनैर्बल्यं, त्यक्त्वा=हित्वा, विवेकेन दूरं नीत्वा, उत्तिष्ठ=उत्थितो भव, युद्धाय सज्जीभवेत्यर्थः॥ ३॥

ननु भगवदुक्त्यनन्तरं पार्थः किं प्रत्यभाषत? इति जीप्सायामर्जुनवाक्यमवतारयति—

"अर्जुन उवाच" ।

**"कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ! ।**
**इषुभिः प्रतियोत्स्यामि, पूजार्हावरिसूदन !" ॥४॥**

अर्थः—मधुसूदन = हे मधुनिषूदन ! अहम् = अर्जुनोऽहं, सङ्ख्ये = युद्धे, कथं = केन प्रकारेण, इषुभिः = बाणैः, भीष्मं = पितामहं भीष्मं, च = तथा द्रोणम् = आचार्यं द्रोणं, प्रतियोत्स्यामि = प्रतिप्रहरिष्यामि, कथमिषुभिस्तौ प्रति युद्धं करिष्यामि, यस्मात् अरिसूदन = हे शत्रुनाशन ! पूजार्हौ = पुष्पादिभिः पूजायोग्यौ, तौ स्त इत्यर्थः ॥ ४ ॥
ननु पूजार्हाणां भीष्मादीनां युद्धेनाहनने राज्यलाभाभावाद् भैक्षमन्नमेव यावज्जीवं लोके भोक्ष्यसे, न जातु राज्यवद्भिर्भोग्यान् भोगान् ? तत्राह—

**"गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके । हत्वाऽर्थकामाँस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान्" ॥५॥**

अर्थः—हि = प्रसिद्धान्, महानुभावान् = महान् विशालोऽनुभावः श्रुताध्ययनतप आचरणादिनिबन्धनः प्रभावः प्रतापस्तेजो येषां तान् महाप्रभावान् विशालहृदयान् महात्मनो गुरून् = महतः, पूज्यान्, भीष्मादीन् स्वजनान्, अहत्वा = न हिंसित्वा, इह = अस्मिन्, लोके = मनुष्यलोके, भैक्ष्यमपि = लोकशास्त्रगर्हितत्वसम्भावनायामपिः, भिक्षया लब्धमन्नं लोकशास्त्रगर्हितमपि, भोक्तुम्=अशितुं, श्रेयः=प्रशस्ततरं, स्वजनहिंसावर्जनार्थत्वेन प्रत्यवायाजनकत्वात् । अर्थकामान् = सर्वेषां कृतेऽर्थम् अर्थनीयं हितं कामयन्ते समीहन्ते ये, तान् गुरून् = महतो, भीष्मादीन् बन्धून् हत्वा तु = चार्थे तुः, हिंसित्वा च, मारयित्वा च, इहैव=लोकान्तरव्यवच्छेदोऽवधारणार्थः, अस्मिन्नेव मनुष्यलोके, रुधिरप्रदिग्धान्=रुधिरेण लोहितेन प्रलितान्, अशुद्धान् जुगुप्सितान्, भोगान्=कृपणजनप्रार्थनीयान् विषयभोगान्, भुञ्जीय = अश्नीयाम्, इत्यर्थः ॥५॥
किञ्च—

**"नचैतद् विद्मः कतरत् नो गरीयो, यद्वा जयेम**

यदि वा नो जयेयुः। यानेव हत्वा न जिजीविषामः,
तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः" ॥६॥

अर्थः—च=तथा, एतद्=इदं, न विद्मः=न वयं जानीमः, एतत् किं? कतरत्=द्वयोः जयपराजययोः,जयपराजयप्राप्त्योः किमेकं, नः=अस्माकं,गरीयः=अतिशयेनाधिक्येन गुरु,महत्,श्रेष्ठम्,के ते द्वे? यद्वा=यदिवा, अथवा, जयेम=धार्तराष्ट्रान् भीष्मद्रोणमुख्यान् निजबान्धवान् हत्वा वयं जयं प्राप्नुयाम, यदिवा=यद्वा, अथवा, धार्तराष्ट्रास्ते नः=अस्मान् पाण्डवान् हत्वा जयेयुः=जयं प्राप्नुयुः। ननु धार्तराष्ट्रान् हत्वा जयप्रापणं प्रत्यक्षं गरीयो युष्माकं, कृतमिह संशयेन? तत्राह-यान्=भीष्मद्रोणमुख्यान् निजबान्धवान् यान्,हत्वा=हिंसित्वा,एव=निश्चयेन, न=नैव, जिजीविषामः=जीवितुमिच्छामः, किं पुनर्जये क्षणभंगुरान् भोगान् भोक्तुं,ते धार्तराष्ट्रा=भीष्मद्रोणमुख्याः निजबान्धवाः,प्रमुखे=सम्मुखे, अवास्थिताः=युद्धार्थमवधानेनाप्रमादेन स्थिता इत्यर्थः ॥६॥

ननु मया कृष्णेन सम्प्रति किं विधेयम्? तत्राह—

"कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वा धर्मसंमूढचेताः। यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे, शिष्यस्तेऽहं, शाधि मां त्वां प्रपन्नम्" ॥७॥

अर्थः कापण्यदोषोपहतस्वभावः=कृपनो दीनः, तस्येदं कार्पण्यं दैन्यं, मनसो दौर्बल्यं, स एव दोषः, तेनोपहतो नष्टोऽदर्शनतां गतः प्राप्तो यस्य शौर्यादिलक्षणः स्वभावः सः,धर्मसंमूढचेताः=धर्मे स्वकर्तव्यकर्मणि संमूढं नितान्तमज्ञं कार्याकार्यविवेकज्ञानशून्यं चेतश्चित्तं यस्य, सोऽहं, त्वा=त्वां, पृच्छामि=प्रश्नयामि। यद्=यदेव, निश्चितम्=असन्दिग्धं, श्रेयः=अतिशयेन प्रशस्यं सुकृतं पुण्यं श्रेयस्करं कर्म, स्यात्=भवेत, तत् मे=मह्यं त्वं ब्रूहि=कथय, अहं ते=तव शिष्यः=शासितव्यः, शासितुं शिक्षितुं योग्यः, शासनार्हः, त्वां=शरणं त्वां, प्रपन्नं=प्राप्त शिष्यभावेनोपसन्नं,मां=पार्थं मां, शाधि=शासनं ब्रूहि,शिक्षयेत्यर्थः॥७॥

ननु त्वं स्वयं श्रेयस्करं कर्म निर्धारय, किं मम शासनेन? तत्राह—

"नहि प्रपश्यामि ममापनुद्याद् यच्छोकमुच्छो-

षणमिन्द्रियाणाम् । अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम्" ॥८॥

अर्थः—भूमौ = पृथिव्याम, असपत्नं = न विद्यते सपत्नः शत्रुर्यस्य, तत् शत्रुवर्जितं, निष्कण्टकम, ऋद्धं = समृद्धं, धनधान्यादिभिः परिपूर्णं, राज्यं = साम्राज्यं, निष्कण्टकभूस्वामित्वं, च = तथा सुराणां = देवानाम, आधिपत्यं = स्वाम्यम, ऐश्वर्यं, नायकत्वम, अवाप्यापि = सम्भावनायामपिः, सम्प्राप्यापि, तत् साधनभूतं कर्म, नहि = न च, नैव, प्रपश्यामि, = आलोचयामि, सम्प्रेक्षे, यद् = यत्कर्म, इन्द्रियाणां = त्वगादिकरणानाम, उच्छोषणम् = उत्कर्षेण शोषकरं, सकलेद्रियसन्तापकं, शोकं = वियुक्तबन्धुजनस्मृत्या पुनः पुनर्जायमानं क्लेशम, अपनुद्यात् = दूरीकुर्यात्, नाशयेद्, अपनयेदित्यर्थः ॥८॥

नन्वेवमुक्त्वाऽर्जुनः किमकरोदिति पृष्टः सञ्जय आह—

"सञ्जय उवाच" ।

एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तप ! ।
न योत्स्ये इति गोविन्दमुक्त्वा तूष्णीं बभूव ह" ॥९॥

अर्थः—परन्तप = हे शत्रुतापन ! हे धृतराष्ट्र ! गुडाकेशः = निद्रेशः, जितनिद्रो निरालस्योऽर्जुनः, एवं = प्रागुक्तप्रकारेण, हृषीकेशम् = इन्द्रियस्वामिनं, वश्येन्द्रियं श्रीकृष्णम, उक्त्वा = गदित्वा, न योत्स्ये = नाहं युद्धं करिष्ये, न शत्रून् सम्प्रहरिष्ये, इति = इति च, गोविन्दं = वेदवाचस्तत्त्वतो वेदितारं, वेदतत्त्वाभिज्ञं भगवन्तमुक्त्वा = कथयित्वा, तूष्णीं = वाग्व्यापारविनिर्मुक्तो ह = एव, बभूव = अभूत्, मौनमाशिश्रिये, न पुनरन्यत् किञ्चिद् बभाषे, इत्यर्थः ॥२॥

ननु तदा कृष्णस्तं किमब्रवीत् ? तत्राह—

"तमुवाच हृषीकेशः, प्रहसन्निव भारत ! ।
सेनयोरुभयोर्मध्ये, विषीदन्तमिदं वचः" ॥१०॥

अर्थः—भारत = हे भरतसन्तान ! हे धृतराष्ट्र ! उभयोः = द्वयोः, सेनयोः = अनीकयोः, मध्ये = अन्तरे, विषीदन्तं = विलपन्तं, शोचन्तं, तम = अमुमर्जुनं, हृषीकेशः = जितेन्द्रियो भगवान् श्रीकृष्णः, प्रहसन् इव = सादृश्यमिवार्थः,

प्रतिष्ठितहास्यकर्तृसदृशमास्यं कुर्वन्,सस्मितवदनो भवन्,प्रसन्नमुखः सन्, इदम्=एतद्, वचः=वाक्यम्, उवाच=उवादेत्यर्थः ॥१०॥

अथ भगवद्वाक्यमवतारयति--

"श्री भगवान् उवाच" ।

**"अशोच्यानन्वशोचस्त्वं, प्रज्ञावादांश्च भाषसे ।**
**गतासूनगतासूंश्च, नानुशोचन्ति पण्डिताः" ॥११॥**

अर्थः—अशोच्यान्=न शोचितुमर्हान्, न शोकं कर्तुं योग्यान्, स्वधर्मनिष्ठान् सद्वृत्तान् भीष्मद्रोणमुख्यान् स्वपरसेनयोः स्थितान् निजबान्धवान्, त्वम् अन्वशोचः=शोकस्यार्जुने वर्तमानत्वेऽपि तदारम्भस्य भूतत्वात् लङ्, त्वमन्वशोचीः, शोकमन्वकार्षीः,"ते मत्कृते युद्धे मरिष्यन्तीति तद्वियोगं स्मारं स्मारमन्वक्लेशीः। "न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे। किं नो राज्येन गोविन्द ! किं भोगैर्जीवितेन वा" इत्येवं मुहुर्मुहुरन्वतप्सीः, च=तथा प्रज्ञावादान्= प्रज्ञा पाण्डित्यं, तत्पूर्वकाः वादाः "कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः, उत्सन्नकुलधर्माणाम्, कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन !" इत्येवमादयो वचनविशेषाः, तान् भाषसे=ब्रूषे, व्याचक्षे, अभिधत्से, अशोच्यशोचनं, प्रज्ञावादभाषणं चोभयं परस्परं विरुद्धम्। न चान्योऽन्यंविरुद्धं तदुभयम् एकदैकत्रावस्थातुमर्हति । त्वयि चार्जुने परस्परं विरुद्धमेतद् धर्मद्वयं युगपदवलोकामहे। अतो न विज्ञायते पण्डितोऽसि त्वं, किं वाऽपण्डितस्त्वं पण्डितंमन्य इति। यत्कारणं, पण्डिताः=तत्त्वविवेचनी प्रज्ञा पण्डा, सा जाता येषां, ते पण्डिताः प्रज्ञावन्तो दूरदर्शिनस्तत्त्वविदः, गतासून्=गताः परलोकं प्राप्ताः असवः प्राणाः येषां, तान्, परलोकप्राप्तप्राणान् मृतान्, च= तथा, अगतासून्=न परलोकप्राप्तप्राणान्, अमृतान्, जीवितान्, निजबान्धवान्, नानुशोचन्ति=नानुरुदन्ति,तान् ध्यायं ध्यायं न जातु विलपन्ति, व्यर्थत्वादित्यर्थः ।

ये खलु गतासवः, न ते शोकेन पुनरावर्तन्ते, इति व्यर्थस्तेषां शोकः, फलाभावात्। ये चागतासवः, ते वर्तन्ते एवेति तेषां शोकः

सुतरां व्यर्थः, अवसराभावात्। न च तत्त्वदर्शिनः पण्डिताः व्यर्थं किञ्चिदाचरन्ति, यदनुपस्थितं, तदुपस्थितमिव वा कृत्वा क्रन्दन्ति। त्वं चेद् वस्तुतः पण्डितोऽसि,नापण्डितस्त्वं,तदा गतासवः स्युः,अगतासवो वा भवेयुः, सर्वथाऽप्यशोच्यास्ते भीष्मादयो बान्धवाः। तस्मात् स्वप्नेऽपि त्वं तान् मास्म शोचः॥ ११॥

अथ शरीरदृष्ट्या शोकं निराकृत्यात्मदृष्ट्या तं निराकुरुते—

"न त्वेवाहं जातु नासं, न त्वं नेमे जनाधिपाः।
न चैव न भविष्यामः, सर्वे वयमतः परम्" ॥१२॥

अर्थः—अहं=वासुदेवोऽहं कृष्णः, जातु=कदाचित्, नासं न=अस्मात् कालात् पूर्वं नाभूवं न, तु=अपि तु? आसमेव=अभूवमेव, त्वं=पाण्डुतनयोऽर्जुनस्त्वं न=नासीर्न-नाभूर्न, अपितु? आसीरेव, अभूरेव,इमे=एते, जनाधिपाः=स्वपरसेनयोरवस्थिताः प्रजाधिपाः,न=अतः पूर्वं नासन् न-नाभूवन् न, अपि तु? आसन्नेव=अभूवन्नेव, अतः परम्=अस्मात् कालात् परस्मिन् काले, सर्वे=विश्वे, वयम्=अहं त्वं इमे-वयं, न भविष्यामो न=न स्थास्यामो न, च=अपि च? भविष्यामः एव=स्थास्याम एवेत्यर्थः।

यथाऽहं त्वमिमे-वयं सर्वेऽधुना वर्तामहे, तथा पूर्वमप्यवर्तिष्महि, परमपि च वर्तिष्यामहे। शरीरवद् शरीरिणः क्षेत्रज्ञस्यात्मनो विनाशाभावात्। अतो "भीष्मादयो मम बान्धवाः मन्निमित्तं विनंक्ष्यन्ति, तैर्विनाऽहं किं विधास्यामि" इति शोकं मा कार्षीः। ते हि पुण्यजन्मानो महाभागाः वर्तमानवद् भूतभविष्यतोरपि सत्त्वेनाविनाशित्वाद् यथा शरीरदृष्ट्या न शोच्याः, तथाऽऽत्मदृष्ट्याऽपि न शोचितुं योग्याः। नहि कालत्रयेऽपिसत्त्वेन येषां विनाशो मरणं स्वप्नेऽपि न सम्भावयितुं शक्यते, ते कथञ्चिच्छोच्याः भवितुमर्हन्ति। तस्माद्ध्यायमध्यायं तेषां वियोगं मा नु क्लेशीः॥१२॥

ननु जायतेऽथ म्रियते, इति प्रतिदिवसमालोचामहे। भीष्मादयोऽप्यजायन्त, ते मामकैः शस्त्रास्त्रप्रहारैरवश्यं मरिष्यन्ति। नहि जायते, न म्रियते चेति युज्यते। तन्मरणं च भूरिदोषावहत्वात् महाकष्टमिति कथं तान् नानुशोचामः, कथञ्चानुपदं जायमानं तद्वियोगं चक्षुषा मनसा दर्शं दर्शं न क्लिश्यामः? तत्राह—

**"देहिनोऽस्मिन् यथादेहे, कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति" ॥१३॥**

अर्थः—देहिनः = कर्मफलभोगायतनं शरीरं देहः, सोऽस्त्यस्येति देही, तस्य देहवतः शरीरिणश्चेतनस्यात्मनः पुरुषस्य, यथा = येन प्रकारेण, यद्वत्, अस्मिन् = एतस्मिन् वर्तमाने, देहे = शरीरे, कौमारं = कुमारभावो बाल्यं, यौवनं = यूनोभावस्तारुण्यं, जरा = वयोहानिः, वार्द्धिक्यम्, एतास्तिस्रोऽवस्थाः क्रमेणायन्ति, पूर्वावस्थानाशेऽन्यावस्था प्राप्नोति, अवस्थान्तरप्राप्तिर्भवति, तथा = तेन प्रकारेण, तद्वत्, देहान्तरप्राप्तिः = अन्यो देहो देहान्तरं, तस्य प्राप्तिः सम्बन्धः, पूर्वदेहनाशे देहान्तरस्य प्राप्तिर्बोभोति, धीरः = धीमान् बुद्धिमान् पण्डितस्तत्र = देहान्तरप्राप्तौ, न मुह्यति = न विपर्यस्यति, मोहोऽविवेको विपर्ययप्रत्ययः, देहस्य नाशेनात्मनाशं, देहस्य प्राप्त्याचात्मोत्पादं न मन्यते इत्यर्थः ।
यथा खलु क्रमेणागच्छद्भिः कौमारादिभिर्देहावस्थाभिरात्मा देही न जातु भिद्यते, केवलं यथाकालं प्राप्तेन तेन तेन देहावस्थाविशेषेण कुमारो युवा जीर्णः, इति व्यपदिश्यते, तथा यथासमयं प्राप्तैर्देहभेदैरपि नासौ विशिष्यते, केवलं पूर्वस्योपात्तस्य देहस्य नाशेन मृतः, अपूर्वस्यान्यस्य देहस्य प्राप्त्या च जातः, इति व्यवह्रियते । देहस्योत्पादविनाशौ नूनं देहस्यैव धर्मौ कौमारादिवत्, न देहिनः पुरुषस्यात्मनः क्षेत्रज्ञस्य । स तु कौमारादिषु देहावस्थाविशेषेषु यथैकः 'सूत्रमिव मणिगणेषु, नित्य मनुस्यूतो' तथा पूर्वोत्तरादिषु देहभेदेष्वपि स्वरूपेणाविकृतोऽजस्र-मनुवर्तते । पूर्वदेहे देहान्तरे च यदैक एवात्मा देही तत्तद्देहोत्पाद-विनाशाभ्यां न जातु चिदुत्पादविनाशलक्षणां विक्रियां काञ्चन बाभ-ज्यते, देहोत्पादे नोत्पद्यते, देहविनाशे च न विनश्यति, तदा तद्विनाश-निमित्तः शोको व्यर्थः । न च पण्डिताः व्यर्थं किञ्चिच्छोचन्ति, व्यर्थं वा किञ्चित् कुर्वन्ति । तस्माद् युद्धेन भीष्मादयः सर्वे विनंक्ष्यन्तीति वारंवारमधीयन् मा त्वं खित्थाः ॥ १३ ॥

ननु भीष्मादीनां वियोगं सञ्चिन्त्य सञ्चिन्त्य नाहं चेक्लिश्ये, किन्तर्हि ? तेषां स्पर्शे = सम्बन्धे, जायमानं सुखम्, अस्पर्शे च जायमानं दुःखं, चेतं चेतं चेखिद्ये ? तत्राह—

**"मात्रास्पर्शास्तु कौन्तेय !, शीतोष्णसुखदुःखदाः ।**
**आगमापायिनोऽनित्याः, ताँस्तितिक्षस्व भारत!" ॥१४॥**

अर्थः—अवधारणे तुः । कौन्तेय=हे कुन्तीपुत्र ! मात्रास्पर्शास्तु=मात्रास्पर्शा एव शीतोष्णसुखदुःखदाः, न मात्राः, इत्येवार्थेन तुनाऽवद्योत्यते, मात्राः विषयाः स्थूलसूक्ष्माः भूतभौतिका उपभोग्याः सर्वे पदार्थाः, मीयन्ते प्रमीयन्ते चक्षुरादिभिरिन्द्रियैरिति तद्व्युत्पत्तेः, तेषां स्पर्शाः=सम्बन्धाः, शीतोष्णसुखदुःखदाः = शीतस्योष्णस्य सुखस्य दुःखस्य दातारः, शीतं कदाचिद् ददति, कदाचिदुष्णं, कदाचित् सुखं यच्छन्ति कदाचिद् दुःखम्, तत्रापि चागमापायिनः = आगम उत्पादः, अपायो विनाशः, तच्छीलाः, उत्पादविनाशिनः, यातायातस्वभावाः, अतएवानित्याः = न नित्याः, न स्थिराः, क्षणिकाः, अतो भारत=हे भरतसन्तान ! तान्=अमून् शीतोष्णसुखदुःखदान् मात्रास्पर्शान्, तितिक्षस्व=सहस्व, शीतं वोष्णं वा, सुखं वा दुःखं वा, यद् यदा प्राप्तं, तत् तदा सुप्रसन्नेन चेतसा सेवस्व, उपभुंक्ष्व, मा मुधा दूयस्वेत्यर्थः ।

एष खलु विषयाणां स्थूलसूक्ष्माणां भूतभौतिकानां समस्तानामुपभोग्यानां पदार्थानां स्वभावः, यत् ते स्पर्शास्पर्शाभ्यां संयोगविप्रयोगाभ्यां शीतोष्णवत् कदाचित् सुखं यच्छन्ति, कदाचिद् दुःखमिति । न च यो यस्य स्वभावः, स केनचित् कदाचित् कथञ्चित् निग्रहीतुं शक्यते, न वाऽवश्यभोक्तव्यात् मात्रास्पर्शजात् सुखदुःखाद् विना भोगेन कश्चित् कर्हिचिन्मुच्यते । यच्चावश्यभोक्तव्यं, यस्माच्च सहस्रैरपि पुरुषायुषैर्न भोगाद् ऋते विप्रमोक्षः, तत् सर्वदा सर्वत्र स्वादूकृत्य हासं हासं भोक्तव्यमिति हि वेदविदां पण्डितानां परामर्शः । भीष्मादिदेहानामपि स्वस्पर्शास्पर्शाभ्यां सुखदुःखदातृत्वं स्वाभाविकं, न यत्नशतेनापि वारयितुं शक्यते । तस्माद् भारतेन पण्डितमतिना त्वया तत्स्पर्शजसुखवत् तदस्पर्शजदुःखमपि सम्प्रति हर्षं हर्षं सोढव्यं, न जातु भ्रमतोऽपि तप्तव्यम् ॥ १४ ॥

ननु यस्तान् मात्रास्पर्शान् तितिक्षते, तस्य किं भवति ? तत्राह—

**" यं हि न व्यथयन्त्येते, पुरुषं पुरुषर्षभ ! ।**
**समदुःखसुखं धीरं, सोऽमृतत्वाय कल्पते " ॥१५॥**

अर्थः—पुरुषर्षभ=हे पुरुषेषु वृषभ! हे पुरुष-श्रेष्ठ! एते=इमे मात्रा-स्पर्शाः,यं=यकं धीरं=धीमन्तं बुद्धिमन्तं पण्डितं,समदुःखसुखं=समे तुल्ये हर्षविषादजननाक्षमे सुखदुःखे यस्य, तं पुरुषं=मनुष्यं, हि=निश्चयेन, न व्यथयन्ति=न चालयन्ति,साम्यावस्थातो विषमावस्थां न प्रापयन्ति, न किञ्चिद् विकुर्वन्ति,सोढव्याः सन्त आयन्ति च यन्ति च,सः=असौ पुरुषः, मनुष्यः अमृतत्वाय=अमृतंब्रह्म "एतदमृतमभयमेतद् ब्रह्म" (छां० उ० ४।१५।१) इति श्रुतेः, तद्भावाय ब्रह्मत्वलाभाय मोक्षप्राप्तये, कल्पते=योग्यो भवति, समर्थः सम्पद्यत इत्यर्थः।

यः खलु मात्रास्पर्शान् तितिक्षते,यथासमयं यथाप्राप्तं संसेवते,यस्येष्ट-पदार्थसंयोगोऽनिष्टपदार्थसंयोगान्न विशिष्यते, यस्य वाऽनिष्टपदार्थ-संयोगइष्टपदार्थसंयोगात् नातिरिच्यते, यः सुखे न सुख्यति, दुःखे न दुःख्यति, न किञ्चिद् वष्टि, न वा किञ्चिद् द्वेष्टि, यत् करोति, तत् सर्वं कर्तव्यबुद्ध्या करोति,यदाचरति भद्रमाचरति,स उत्तमः पुरुषः,स श्रेष्ठो नरः,सोऽमृतत्वाय युज्यते,स नूनमिह निष्कण्टकस्तप्यते,परत्र चानन्तं सुखमश्नुते, नास्त्यत्र संशयः॥ १५॥

इतश्च शोको निरर्थकः—

**"नासतो विद्यते भावो, नाभावो विद्यते सतः।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः" ॥१६॥**

अर्थः—असतः= सच्छब्दोऽत्रात्मवचनः "सदेव सोम्येदमग्र आसीत्" (छां० उ० ६।२।१) "आत्मैवेदमग्रे आसीत्" (बृ० उ० १।४।१) इत्यादिश्रुतेः,ततो भिन्नमसत्,तस्यासतोऽनात्मनो देहा-देर्निखिलप्रपञ्चस्य,भावः=सत्ताऽस्तिताऽविनाशिता,न=नहि,विद्यते=अस्ति,सतः=आत्मनो देहिनः, अभावः=असत्ता, नास्तिता, विनाशिता, न=नहि, विद्यते=अस्ति। अनयोः=एतयोरुभयोः=द्वयोःसदसतोः, अपि=च, अन्तः=निश्चयः,यदसत्,तत् नश्यत्येव,न सदा भवति,यत् सत्, तत् सदा भवत्येव न कदाचित् नश्यति, इत्येवंलक्षणो निर्णयः, तत्त्व-दर्शिभिः=वस्तुनोऽनारोपितमबाधितं नैजं रूपं तत्त्वं, तद् द्रष्टुं शीलं येषां,तैर्वस्तुयाथात्म्यदर्शनस्वभावैः पण्डितैः,तु=एव, दृष्टः=मनोनेत्रेण लोकितः [illegible] निरणायीत्यर्थः।

यद्यपि सदसच्छब्दौ व्यक्ताव्यक्तवचनावपि प्रयुज्येते, तद् यथा "असतः सदजायत" ( ऋ० १० । ७२ । २ ) "नासदासीत् नो सदासीत्, तदानीम्" ( ऋ० १० । १२९ । १ ) "असद् वै इदमग्रे आसीत् ततो वै सदजायत" ( तै०उ०२।७ ) इति । "न सत् तत्, नासदुच्यते" ( गी० १३।१२ ) इति च । तथा भावाभाववचनावपि तद् यथा "कथमसतः सत् जायेत" (छां०उ०६।२।२) इति । तथापि न तावत्र तद्वचनौ प्रयुक्तौ वेदितव्यौ । किंवचनौ तर्हि ? आत्मानात्म-वचनौ । प्रकृतत्वात् । आत्मा देही, देहश्चानात्मा, द्वाविह शोकमोह-विषयौ प्रक्रियेते ; न च प्रकृतौ तौ परिहाय कौचनान्यावत्र प्रतिपाद-यितुं युज्येते । प्रकृतहानाप्रकृतप्रक्रिये हि तदा प्रसज्येयाताम् । अर्जुनस्य बन्धुविच्छेदेन जन्यमानस्य शोकस्योपशमाय चैष सर्व आरम्भः । न चात्मा देही यावदविनश्वरस्वभावो नोपपाद्यते, अनात्मा देहादिश्च यावद् विनश्वरस्वभावो न प्रतिपाद्यते, तावदसौ कथञ्चिदुपशाम्यति । तस्मादात्मानात्मवचनावेवात्र सदसच्छब्दौ प्रयुज्येते नान्यवचनाविति युक्तमुत्प्रेक्षामहे । तत्र सन्नात्मा देही, सदाऽविनश्वरस्वभावत्वान्नित्यः, न जातु नश्यति, न वा सहस्रैरपि शस्त्रास्त्रप्रहारलक्षणैः प्रयासैः कश्चित् तं नाशयितुं पारयति । देहादिश्चानात्माऽसन् सर्वदा सर्वत्र विनश्वर-स्वभावत्वादनित्योऽस्थास्नुरद्य वा श्वो वा नश्यत्येव, न तमीश्वरोऽपि कश्चिद् रक्षितुं शक्नोति । नहि वस्तुस्वभावः कचित् कदाचित् परिवर्तते, कचित्कदाचिद्वा पर्यनुयुज्यते, न च वस्तुस्वभावज्ञो भवादृक्षः कश्चित् पण्डितो वा तत्र मुह्यति, मुह्यन् वा कदाचित् शोचति । न च भीष्मादयो वस्तुस्वभावमुल्लङ्घ्य वर्तितुं क्षमन्ते, वस्तुत्वं वा हातुमुत्सहन्ते । तस्मात् ते सर्वथाऽशोच्याः । नाशोच्याँस्तान् त्वं शोचितुमर्हसि ॥१६॥

अथ "नाभावो विद्यते सतः" इत्येतदुपपादयति —

**"अविनाशि तु तद् विद्धि, येन सर्वमिदं ततम् ।**
**विनाशमव्ययस्यास्य, न कश्चित् कर्तुमर्हति" ॥१७॥**

अर्थः —तुरवधारणे । तत् = पूर्वोक्तं सद्, अविनाशि तु = विना-शित्वमेवार्थेन तुना व्यवच्छिद्यते, विनाशो ध्वंसोऽभावः, तद्रहितमेव, विद्धि = जानीहि, किं तत् सत् ? येन = येन सता, इदम् = एतत्, सर्वं =

समस्तं,देहादि सर्वं जगत्,ततं=व्याप्तं,क्षेत्रज्ञात्मना प्राणितम्। कस्मादेतदविनाशि विद्धि? यस्मादस्य=एतस्य,अव्ययस्य=व्ययो विनाशः, स निरवयवत्वाद् यस्य न विद्यते, सोऽव्ययः, तस्य विनाशरहितस्यात्मनः क्षेत्रज्ञस्य सतो, विनाशम्=अभावं, न कश्चित्=न कोऽपि, कर्तुं=विधातुम्, अर्हति=शक्नोति, विनाशासम्भवादित्यर्थः। यत् तावज्जन्यते,तद् विपरिणमते,तद् वर्द्धते,तदपक्षीयते,तद् विनश्यति, सावयवत्वात्,यथाऽसद् देहादि निखिलं जगत्। न च निरवयवत्वात् सदात्मवस्तु जन्यते। जन्येत चेत् सावयवत्वादसत् स्यात्। यज्जन्यं,तत् सावयवं, तदसदिति व्याप्तेः। नच जन्माभावे तस्यात्मनः सतो वृद्धिविपरिणामौ सम्भवतः। तदसम्भवे च नापक्षयो न विनाशः। नच विनाशरहितस्याव्ययस्य सर्वान्तरात्मनः सतः क्षेत्रज्ञस्य विनाशः केनचित् कर्तुमीश्यते। अत एवोक्तं छान्दोग्योपनिषदि "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" (छां० उ० ६। ११। ३) इति ॥१७॥

अथ "नासतो विद्यते भावः" इत्येतदुपपाद्यते—

**"अन्तवन्त इमे देहाः, नित्यस्योक्ताः शरीरिणः।**
**अनाशिनोऽप्रमेयस्य, तस्माद् युध्यस्व भारत!" ॥१८॥**

अर्थः—अनाशिनः=नाशो विनाशस्तद्रहितस्याविनाशिनः, नित्यस्य=धर्मतः स्वरूपतः परिणामवर्जितस्य कूटस्थनित्यस्य,अप्रमेयस्य=न प्रमातुं योग्यस्य प्रत्यक्षादिभिः प्रमाणैः परिच्छेत्तुमनर्हस्य, प्रत्यक्षादिप्रमाणागोचरस्य, शरीरिणः=देहिनः क्षेत्रज्ञस्यात्मनः सतः, इमे=एते प्रत्यक्षाः, देहाः=कायाः, अन्तवन्तः=अन्तो ध्वंसो विनाशस्तद्वन्तो विनाशिनः, उक्ताः=तत्त्वदर्शिभिरभिहिताः, तस्मात्=यस्मादविनाशी सद्वस्त्वात्मा, असद्वस्तुभूताः देहाश्चान्तवन्तो विनाशिनः, तस्मात्, भारत! हे भरतसन्तान! युध्यस्व=तद्विनाशनिमित्तं शोकं हित्वा युद्धं कुरुष्व, स्वधर्मं युद्धं मा नु त्याक्षीरित्यर्थः।

यस्मिन् खलु वस्तुनि संशयो वा विपर्ययो वा कदाचिज्जंजन्यते, तद् वस्तु प्रमित्यै, परिच्छित्यै प्रमाणान्यभिसंप्लवन्ते। तच्चाभिसंप्लवमानैः प्रमाणैः प्रमितत्वात् परिच्छिन्नत्वात् प्रमेयमिति परिभाष्यते। न चात्मनि शरीरिणि सति संशयो वा विपर्ययो वा कचित् कदाचित् कस्यचिद्

जाजायते, येन तत्प्रमायै प्रमाणानि तत्र व्याप्रियेरन् । तद्व्यापाराभावे च नासौ प्रमाणगोचरः,तदगोचरत्वाच्च नासौ शरीरादिवत् प्रमेयः। ननु प्रत्यक्षानुमानयोर्विषयो मा भूदात्मा, आगमस्य शब्दप्रमाणस्य विषयो भविष्यति। नहि तस्य तदविषयत्वे "तं त्वा औपनिषदं पुरुषं पृच्छामि" (बृ० उ० ३।९।२६) इत्यौपनिषद-विशेषणं कथञ्चित् सङ्गच्छते। नह्युपनिषदो न शब्दप्रमाणम्,इति चेद्? अत्रोच्यते-यथा हि खलु सामान्यतो दृष्टानुमानेनात्मानं सामान्येन रूपेणानुमिमतेऽनुमातारः, तावतैव चात्माऽनुमानगम्योऽस्माकमित्याचक्षते, तथैवौपनिषदाः किल मनुष्यत्व-ब्राह्मणत्व-कर्तृत्वादिधर्माक्रान्तस्य सविशेषस्यात्मनो लोकसिद्धत्वेऽपि तद्धर्मानाक्रान्तस्य निर्विशेषस्य लोकसिद्धत्वाभावेनोपनिषदेकगम्यत्वादौपनिषदं तद्विशेषणमुपाददते । अज्ञातज्ञापकत्वेन चोपनिषदां तद्गोचरं प्रामाण्यंसंगिरन्ते। न चायमित्थमित्थमित्येवं रूपेणोपनिषदो गमयन्त्यात्मानं शरीरिणं, येन स तद्विषयो बोभूयेत शब्दप्रमाणगोचरश्चाभ्युपगम्येत।सति च यस्मिन्नात्मनि प्रमाणानि प्रमेयानि च सर्वाणि सिद्धिमुपयन्ति, येन च शरीरमिव सर्वाणि तानि प्राणन्ति, सततं जीवन्ति, यश्च सर्वेषां तेषामन्तरात्मा, तं प्रमाणानि तानि कथं प्रमापयेयुः, केन प्रकारेण परिच्छिन्द्युः । नहि स्वात्मन्यपि कश्चित्कचिद् व्याप्रियते,, व्यापर्तुं वा क्षमते, नहि वह्निरात्मनं दहति, आपो वा कचित् कदाचिदात्मानं क्लेदयन्ति । तदिदं पश्यन् एवाह मैत्रयीं याज्ञवल्क्यः "येनेदं सर्वं विजानाति, तं केन विजानीयात । विज्ञातरमरे केन विजानीयात" (बृ० उ० २।४।१४) इति । चेदेनमात्मानं न जातुचित् प्रमाणानि प्रमापयन्ति,तदा सोऽप्रमेयः,इति निश्चयः।श्रूयते व "एकधैवानुद्रष्टव्यम्, एतदप्रमयं ध्रुवम्" (बृ० उ० ४।४।२०) इति। अप्रमयम्=अप्रमेयम् । नचाप्रमेयस्य नित्यस्य शरीरिणः सतो विनाशः केनचित् कदाचित् कर्तुं शक्यते। विनाशस्य प्रमेयमात्रनियतत्वत् । प्रमेयाश्च देहाः विनाशिनः प्रत्यक्षाः तद् यथाऽस्मिन्नात्मनि सति देहिनि शरीरनायके शोको न युज्यते, अविनाशित्वात्, तथाऽसत्सु देहेषु शरीरेष्वपि शोको नोपपद्यते, विनाशित्वात् । अतस्त्वं सर्वथा निजबन्धुविरहनिबन्धनं शोकं परिमुच्य युध्यस्व ॥१८॥

ननु युद्धे हि हिंसाजन्यं पापं स्यात । यतो युद्धं विवेकहरं कर्म।तस्मिन् वर्तमानेन नात्मा दृश्यते,न परात्मा,न ज्येष्ठो दृश्यते न श्रेष्ठः,किन्तर्हि ?

हन्तिरेवाभितो दरीदृश्यते। तत्र चेदहं वत्स्यामि, भीष्मादीन् स्वबन्धून् अवश्यं हनिष्यामि, परैर्वा कैश्चित् सह स्वबन्धुभिस्तैर्हतो भविष्यामि। हन्ता स्यां, हतो वा भवेम्, उभयथाऽपि पापहेतुर्हिंसादोषोदुर्वारः, इति कृतं युद्धेन ? तत्राह—

"य एनं वेत्ति हन्तारं, यश्चैनं मन्यते हतम्।
उभौ तौ न विजानीतो,नायं हन्ति न हन्यते"॥१९॥

अर्थः—यः=यः पुमान्, एनम्=एतमात्मानं देहिनं, हन्तारं=हननक्रियाकर्तारं,वेत्ति=हन्ताऽहमस्येति विजानाति,यश्च=यःपुनःपुमान्, एनम्=एतमात्मानं देहिनं, हतं=हननक्रियायाः कर्म, मन्यते= हतोऽहमिति बुध्यते। उभौ तौ=आत्मनो देहिनो हननक्रियायाः कर्तृत्वेन कर्मत्वेन च वेत्तारौ ज्ञातारौ तौ द्वौ, न विजानीतः=न विविच्य जानीतः, देहाद् विवेकेनात्मानं न वित्तः,किन्तर्हि ? देहधर्माध्यासेन तं सम्प्रतीतः, कस्मात् ? यस्माद् अयम्=एष,आत्मा देही, न हन्ति,=हननक्रियाकर्ता न भवति, न हन्यते=नापि हननक्रियाकर्म सम्पद्यते, देह एव हन्ति, देह एव हन्यते। स च स्वभावतो विशरारुरिति नास्त्यत्र हिंसाकृतस्य पापस्यावसर इत्यर्थः॥ १९॥

ननु देहे हन्यमाने देह्यात्माऽपि हन्यमानः स्यात् ?। न। हन्यमानताहेतोर्जन्यादेर्देहिनि तस्मिन् अभावात्। अतो देहे हन्यमानेऽपि नासौ कर्हिचिद् हन्यते, इत्याह—

"न जायते म्रियते वा कदाचित् नायं भूत्वा भविता वा न भूयः। अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" ॥२०॥

अर्थः—अयम् = एष आत्मा देही, कदाचित् = कस्मिन्नपि काले, न जायते = न जन्यते,जनिलक्षणां विक्रियां न भजते, नोत्पद्यते, वा = च, न म्रियते = न मृतिं विनाशमयते, विनाशलक्षणां विक्रियां न प्रपद्यते, वा = च, अयमात्मा देही, भूत्वा = सत्तामनुभूय, भूयः = पुनः, कदाचित् न भविता न = न सत्तामनुभविष्यति न, अनुभविष्यत्येव, यथा पूर्वं सन्, तथाऽग्रेऽपि सन्, कालत्रयेऽप्येष सन्नेव, न कदाचिदसन्।

यस्मात् न जायते, तस्मादजः = जन्मरहितः, यस्मात् न म्रियते, तस्मान्नित्यो ध्रुवोऽविनाशी, यस्मात् कालत्रयेऽपि सन्, तस्माच्छाश्वतः = शश्वद्भवः निरन्तरभवः सदैकरसः, अतएव पुराणः = देहादिनिखिलप्रपञ्चात् पुरा-भवः, स्थूलसूक्ष्मदेहादिनिखिलजगदाश्रयः, अतो हन्यमाने = हिंस्यमाने छिद्यमाने, शरीरे = देहे, देह्यात्मा, न हन्यते = न जातु हिंस्यते, इत्यर्थः ।

यथा हि घटे भिन्ने घटाकाशो न भिद्यते, लोहे वाऽवहन्यमाने वह्निर्नावहन्यते, तथा देहे हन्यमाने देह्यात्माऽपि न हन्यते, हननहेतोरभावाद्, असंगत्वाच्च । तथाच न हिंसाकृतपापावकाशः ॥ २० ॥

ननु युद्धे मा भूद् हिंसाकृतं पापं, हिंसा तु भवति । सा च स्वरूपेणैव पापं, कृतमन्येन पापेन ? तत्राह—

"वेदाविनाशिनं नित्यं, यः एनमजमव्ययम् ।
कथं स पुरुषः पार्थ ! कं घातयति हन्ति कम्" ॥२१॥

अर्थः—यः = यः पुरुषः, एनम् = एतमात्मानं देहिनम्, अजं = स्वतः परतो जन्मरहितं, परो देहादिः, अविनाशिनं=स्वतो विनाशवर्जितम्, अव्ययं = व्ययो विनाशः, स परतोऽपि यस्य न विद्यते, तं देहादिविनाशतो विनाशरहितम्, नित्यं = कूटस्थनित्यम्, अपरिणामिनं, वेद = जानाति, सः=असौ, पुरुषः=पुमान्, पार्थ=हे पृथापुत्र ! कथं= केन प्रकारेण, कं=कं पुरुषं, हन्ति=हिनस्ति, कं = कं पुरुषं, घातयति= हिंसयति, हन्तुं नियोजयति, किंशब्दः सर्वत्राक्षेपे, न कमपि हन्ति, न कमपि घातयति, न हिनस्ति न हिंसयतीत्यर्थः ।

यस्य ह्यहङ्कृतभावो विद्यते, यः खलु स्वात्मानं हन्तारं हन्यमानं चाभिमन्यते, यस्यैष दृढः प्रत्ययो 'हन्ति हन्यते चात्मेति, यः पुनरेनमात्मानं जन्मविनाशशून्यं नित्यं च न वेत्ति, स नूनं युद्धे वर्तमानो घ्नन् घातयँश्च लोकान्, हिंसापापेन संसृज्यते, तत्फलं चेहामुत्र नियमेनोपभुङ्क्ते । यस्य तु पुरुषसिंहस्य कालत्रयेऽप्यहङ्कृतभावो नास्ति, यः स्वप्नेऽपि स्वात्मानं हन्तारं हन्यमानं च नाभिमन्यते, यस्यैष गाढो निश्चयो नायमात्मा कदाचिद् हन्ति, न वा जातुचिद् हन्यते, यः पुनरेनं देहिनं पुरुषं जन्मविनाशवर्जितं नित्यमव्ययं च साक्षाद् विजानाति, स युद्धे वर्तमानो निखिलानपि लोकान् घ्नन् घातयँश्च, मानयाऽपि हिंसा-

दोषेण न लिप्यते। तल्लेपस्याहङ्कृतभावमूलत्वात्। अहङ्कृतभावश्च सर्वो निजस्वरूपाज्ञानमूलकः, इति वेदविदां निश्चयः। त्वं चात्मस्वरूपाभिज्ञोऽप्यनभिज्ञ इव भाषसे, अहङ्कृतभावेन मोमुह्यमानश्च हन्तारं हन्यमानं चात्मानं मन्यसे, इत्यहो आश्चर्यम् ॥२१॥

ननु युद्धे भीष्मादीनामात्मा जन्मविनाशशून्यत्वेन नित्यत्वाद् हतो माभूत्, तेषामुपात्तदेहत्यागस्तु मत्कृतो भविष्यति, तमेव वयं हिंसां मन्यामहे, सैव च मच्छोककारणम्? तत्राह—

"वासांसि जीर्णानि यथा विहाय, नवानि गृह्णाति नरोऽपराणि। तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही" ॥२२॥

अर्थः—यथा=यद्वत्, नरः=मनुष्यः, जीर्णानि=जर्जराणि, कार्यानर्हाणि, सर्वथाऽनुपयुक्तानि, वासांसि=वस्त्राणि, विहाय=परित्यज्य, अपराणि=अन्यानि, नवानि=नूतनानि, गृह्णाति=उपादत्ते, तथा=तद्वत्, देही=शरीरी देहवान् आत्मा, जीर्णानि=कृशानि दुर्बलतां गतानि, शरीराणि=गात्राणि, विहाय=परित्यज्य, अन्यानि=अपराणि, नवानि=नव्यानि, संयाति=संगच्छति, विना क्लेशं प्राप्नोतीत्यर्थः।

आत्मनो देहिनः शरीरग्रहणत्यागौ खलु स्वाभाविकौ, न कदाचित् कथञ्चिद् वारयितुं शक्येते। यदा त्वं युद्धे वर्तमानो नानाविधशस्त्रास्त्रप्रहारैः स्वधर्मनिष्ठानां भीष्मादीनां वयसा तपसा च जीर्णानि शरीराणि परिहापयिष्यसि, तदा ते पुण्यकर्माणस्त्वरितं दिव्यानि मङ्गलमयानि नवतराणि अन्यानि शरीराणि प्राप्स्यन्ति "अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा, गान्धर्वं वा, दैवं वा, प्राजापत्यं वा, ब्राह्मं वा, ऽन्येषां वा भूतानाम्" (बृ० उ० ४।४।४) इत्यादिश्रुतेः। तत्प्राप्तौ च त्वदुपकारं मन्यमानास्त्वामपि प्रचुरमुपकरिष्यन्ति सङ्कल्पमात्रेणावितथेन, ततस्ते ध्रुवं मंगलं कल्याणं भविष्यति, कृतममङ्गलेनेह तव शोकेन दुःखानुभवलक्षणेनेत्यर्थः ॥२२॥

ननु यथा खड्गादिना छिन्ने वाससि तच्छन्नो देहश्छिद्यते, वह्निना च दग्धे तस्मिन् दह्यते, तथा वासःस्थानीये देहे खड्गादिना छिन्ने सति देह्यात्माऽपि छिद्यतां, दग्धे चाग्निना तस्मिन् दह्यताम्? तत्राह—

"नैनं छिन्दन्ति शस्त्राणि, नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो, न शोषयति मारुतः" ॥२३॥

अर्थः—एनम् = एतमात्मानं देहिनं, शस्त्राणि = खड्गादीन्यायुधानि, न छिन्दन्ति = न द्वैधीकुर्वन्ति, पावकः = वह्निरेनं न दहति = न भस्मीकरोति । च = तथा, आपः = वारः, एनं न क्लेदयन्ति = नार्द्रीकुर्वन्ति, न शिथलयन्ति, मारुतः = पवनो वायुरेनं न शोषयति = न शुष्कीकरोति, न नीरसं विदधातीत्यर्थः ॥ २३ ॥

अथोक्तेऽर्थे हेतुमाह—

"अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः" ॥२४॥

अर्थः—यस्माद् अयम् = एष आत्मा, एव = निश्चयेन, अच्छेद्यः = छेत्तुमयोग्यः, तस्मादेनं शस्त्राणि न छिन्दन्ति, यस्मादयं निश्चयेनादाह्यः = दग्धुमयोग्यस्तस्मादेनं पावको न दहति, यस्मादयं निश्चयेनाक्लेद्यः = क्लेदयितुमयोग्यस्तस्मादेनमापो न क्लेदयन्ति, च = तथा यस्मादयं निश्चयेनाशोष्यः = शोषयितुमयोग्यस्तस्मादेनं मारुतो न शोषयति । कस्मादेषोऽच्छेद्योऽदाह्योऽक्लेद्योऽशोष्यः ? यस्माद् अयम् = एष, नित्यः = जन्मविनाशशून्यो निरवयवः, सर्वगतः = सर्वानुगतः, सर्वमनुप्राप्तः, मणिगणेषु सूत्रमिवानुस्यूतः, शस्त्रादीनां सर्वेषामन्तरात्मा, विभुरिति यावत्, स्थाणुः = ध्रुवः, परिणामरहितः, अचलः = निष्क्रियः, सनातनः = सदाभवः, अकादाचित्कः, अखण्डैकरसः, इत्यर्थः ॥ २४ ॥

किञ्च

"अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते !
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि" ॥२५॥

अर्थः—यस्मादयम् = एषोऽव्यक्तः = चक्षुरादिभिरिन्द्रियैर्योऽर्थो व्यज्यते, तद्भिन्नः, बाह्येन्द्रियाविषयः, यस्मादयमचिन्त्यः = ज्ञातिगुणक्रियाभिर्योऽर्थो मनसा चिन्तयितुं शक्यते, तद्भिन्नः, अन्तरिन्द्रियागोचरः, यस्मादयमविकार्यः = उत्पादविनाशिभिर्ज्ञानेच्छादिभिर्गुणैर्विकर्तुं विकारीकर्तुमयोग्यः, ज्ञानेच्छादिविकाररहितो निर्गुणः, अत एवानुमाना-

विषयः,नापि शब्दप्रमाणगोचरः,उच्यते=कथ्यते,तत्त्वविद्भिः। तस्मात्=यस्मादेष नित्यः, सर्वगतः, स्थाणुरचलः सनातनोऽव्यक्तोऽचिन्त्योऽविकार्यः, तस्माद्, एनम्,=एतमात्मानम्, एवम्=अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽयमशोष्योऽयमित्येवम्, अच्छेद्यत्वादिप्रकारेणेति यावद्, विदित्वा=ज्ञात्वा, नानुशोचितुमर्हसि=नानुतप्तुं योग्योऽसीत्यर्थः।

यः खल्वनित्यः सावयवः, असर्वगतः परिच्छिन्नः, अस्थाणुः परिणामी, चलः सक्रियः, असनातनः कादाचित्कः, व्यक्तो बाह्येन्द्रियगोचरः, चिन्त्योऽन्तरिन्द्रियविषयो, विकार्यः सगुणः,स एव शस्त्रादिना छेत्तुं दग्धुं क्लेदयितुं शोषयितुं च शक्यते। न च तथाऽस्त्ययमात्मा देही, तस्मादेषोऽच्छेद्योऽदाह्योऽक्लेद्योऽशोष्यः। यस्मादेवं, तस्माद् वस्त्रच्छेददाहादिना तदन्तर्वर्तिदेहस्येव देहच्छेददाहादिना तदन्तर्वर्त्यात्मनो न छेदादिकं भवितुमर्हति, विलक्षणत्वादिति बुद्ध्वा युध्यस्व,मयैते हन्यन्ते, हन्ताऽहमेतेषामिति चेतं चेतं मानुशुचः, मादुःखमनुभूः ॥ २५ ॥

अथ वेदपथेन शोकाकार्यतामुक्त्वा बाह्यपथेन शोकाकार्यतामाह–

"अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम्।
तथापि त्वं महाबाहो ! नैनं शोचितुमर्हसि" ॥२६॥

अर्थ :—अथ च=यदि च, एनम् = एतमात्मानं, नित्यजातं=नित्यं सदा, जातं-जाते देहे शरीरे जातं, जातमेव, नित्यं=सदा मृतं=मृते देहे शरीरे मृतं,मृतमेव,वा=च,मन्यसे=मनुषे,देहमेवात्मानं बुध्यसे। तथापि=तदाऽपि, महाबाहो=हे महाभुजबल ! त्वं=पार्थस्त्वम्, एनं=नित्यं जातं नित्यं मृतमेनं देहलक्षणमात्मानं,नानुशोचितुमर्हसि=शोचयितुं नार्हसीत्यर्थः।

यदि च त्वं जन्यमानं म्रियमाणं च देहमेव भीष्मादीनामात्मानं मन्यसे, ततो व्यतिरिक्तं तन्नायकं नित्यं सनातनं कञ्चिदात्मानं न जानीषे, तदापि ते तद्धिसानिमित्तः शोको न कर्तव्यः ॥२६॥

कस्मात् ? तत्राह—

"जातस्य हि ध्रुवो मृत्युः, ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे, न त्वं शोचितुमर्हसि" ॥२७॥

अर्थः—हि=यस्मात् , जातस्य=जन्म प्राप्तस्य, उत्पन्नस्य,ध्रुवः= निश्चितः, अवर्जनीयः, अपरिहार्यः, मृत्युः=अत्ययो विनाशः,च=तथा, मृतस्य=मृत्युं प्राप्तस्य, विनाशं गतस्य, ध्रुवं=निश्चितम्, अवर्जनीयम्, अपरिहार्य्यं,जन्म=जननम् ,उत्पदनम् । तस्मात्=अमुष्मात् कारणात्, एतस्माद्धेतोः, अपरिहार्ये=परिहर्तुं वर्जयितुमशक्ये, अर्थे=जन्ममरण-लक्षणेऽर्थे, न त्वं शोचितुमर्हसि=न त्वं क्लेशितुं योग्योऽसीत्यर्थः॥२७॥

ननु कुतो जातस्य ध्रुवो मृत्युः, कुतो वा मृतस्य ध्रुवं जन्म, कुतो वाऽ परिहार्येऽर्थे जन्मनि मृत्यौ च शोको नोचितः ? तत्राह—

**"अव्यक्तादीनि भूतानि, व्यक्तमध्यानि भारत ! ।**
**अव्यक्तनिधनान्येव, तत्र का परिदेवना" ॥२८॥**

अर्थः—भरत=हे भरतसन्तान ! भूतानि=कार्यकरणसङ्घातम-कानि पृथिव्यादिभूतमयानि शरीराणि, अव्यक्तादीनि = न व्यज्यते बाह्येन्द्रियैः,न गृह्यते न दृश्यते तैर्यत्,तद् बाह्येन्द्रियाविषयभूतमदृश्यम् आदिः=जन्मनः प्रागवस्थानं,येषां भूतानां, तानि जन्मनः पूर्वमदृश्यानि सन्ति,व्यक्तमध्यानि=व्यक्त-बाह्यकरणै र्व्यज्यमानं बाह्येन्द्रियविषयभूतं दृश्यं, मध्यं जन्मारभ्या मरणात्प्रागवस्थानं येषां,तानि जन्ममरणयोर्मध्ये व्यक्तानि दृश्यानि भवन्ति, एव=निश्चयेन पुनरव्यक्तनिधनानि= अव्यक्तमदृश्यं निधनं मरणं विनाशलक्षणावस्थानं येषां, तानि निधने मरणे विनाशे पुनरव्यक्तानि अदृश्यानि, तत्र = तेषु व्यक्ताव्यक्तस्वभावेषु भूतेषु देहेषु शरीरेषु का परिदेवना=को विलापः, कस्तद्वियोगनिमित्तः शोकः, किमाक्षेपे, न कोऽपीत्यर्थः ।

व्यक्ताव्यक्तस्वभावानि खलु सर्वाणि शरीराणि । तानि स्वभावादेव कदाचिद् व्यक्तीभवन्ति, स्वभावादेव च कदाचिद-व्यक्तीभवन्ति । यथा स्वभावदेव वह्निरुष्णः, पयः स्वभावादेवशीतलं,न ते तत्र स्वभावव्यतिरेकेण निमित्तान्तरं किञ्चिदपेक्षते,तथा शरीराण्यपि स्वव्यक्तावव्यक्तौ च स्वभावव्यतिरेकेण न निमित्तान्तरं किञ्चिदपेक्षन्ते। शरीराणां व्यक्तिर्जन्म, मरणं च तेषामव्यक्तिः । न च स्वभावज्ञः कश्चन मन्निमित्ताद् वह्निरुष्णः,मन्निमित्तात् पयः शीलमिति परिकल्प्य कालत्रयेऽपि शोचति, मन्निमित्तात् शरीराणां जन्म, मन्निमित्तात् शरीराणां मरणमिति वा परिकल्प्य कदाचिदात्मानं क्लिन्दाति तेषां

जन्ममरणयोरौष्ण्यशैत्ययोरिव स्वाभाविकत्वेनापरिहार्यत्वनिश्चयात्। भीष्मादिशरीराणां जन्मवन्मरणमपि स्वाभाविकत्वेन निमित्तान्तरानपेक्षात्वादपरिहार्य्यम्। न च यदपरिहार्यं, तत्र कथञ्चित् परिदेवनोपपद्यते, तत्कृते कर्हिचिद्वा शोको युज्यते। तस्मादर्जुनस्य तवापरिहार्ये तस्मिन् शोको नोचितः ॥२८॥

नन्वात्मा चेद् देहादतिरिच्यते,न जायते म्रियते च,नित्यत्वात्, तदा कस्मादसौ देहिभिः सर्वैर्न ज्ञायते? तत्राह—

"आश्चर्यवत् पश्यति कश्चिदेनमाश्चर्यवद् वदति तथैव चान्यः। आश्चर्यवच्चैनमन्यः शृणोति, श्रुत्वाऽप्येनं वेद न चैव कश्चित्" ॥२९॥

अर्थः—आश्चर्यवत्=आश्चर्यतुल्यः, अद्भुतसदृशः, अतिदुर्लभः सः, यः कश्चित्=कोऽपि मुमुक्षुरेनम्=एतमात्मानं,पश्यति=गुरुणोपदिष्टोऽनुभवति,तत्त्वतो जानाति,तथा-एव=तद्वदेव,आश्चर्यवत्=आश्चर्यतुल्योऽद्भुतनिभोऽतिदुर्लभोऽन्यः=परः कोऽपि तत्त्वविद् उपदेष्टा गुरुः, यश्च=यः पुनरेनम्=एतमात्मानं,वदति=ब्रवीति, यथाशास्त्रमुपसन्नाय शिष्याय तत्त्वतो निगदति, सम्यगुपादिशति। च=पुनराश्चर्यवत्=आश्चर्यतुल्योऽद्भुतसंकाशोऽतिदुर्लभःसः,योऽन्यः=अपरः कोऽपि जिज्ञासुरेनम्=आत्मानमेनं शृणोति=श्रोत्रियादात्मनिष्ठाद् गुरोः श्रवणविषयीकरोति, समाहितो भूत्वाऽऽकर्णयति, च=पुनः, कश्चित्=शमदमादिसाधनहीनत्वादसमाहितचित्तः कश्चिद्,एनम्=आत्मानमेनं,श्रुत्वाऽपि=गुरुसकाशादाकर्ण्यापि न=नो, एव=निश्चयेन वेद=वेत्ति, न वेत्त्येव, कदापि याथातथ्येन न जानातीत्यर्थः।

आत्मा हि सूक्ष्मत्वाद् दुर्विज्ञेयो,न सर्वैर्देहिभिर्ज्ञातुं शक्यते। यः कश्चिदेषामेनं जानाति, यः कश्चिदेषामेनमुपदिशति, यः कश्चिदेषामेनं शृणोति,स दुर्लभः,यः पुनरेनं श्रुत्वाऽपि न जानाति,स एवैकः सुलभः॥२९॥

अथ प्रकरणमुपसंहरन्नाह—

"देही नित्यमवध्योऽयं, देहे सर्वस्य भारत!।
तस्मात् सर्वाणि भूतानि, न त्वं शोचितुमर्हसि" ॥३०॥

अर्थः—भारत=हे भरतसन्तान ! सर्वस्य=समस्तस्य प्राणेजातस्य देहे=शरीरे वर्तमानो देही=शरीरी शरीरवान्, अयम्=एष आत्मा, नित्यं=सर्वदाऽवध्यः=वधानर्हो, हन्तुमशक्यो, विनाशरहितो यस्मात्,तस्मात् सर्वाणि भूतानि=भीष्मादीन् सर्वान् प्राणिनः,उद्दिश्य, न त्वं शोचितुमर्हसि=शोकयितुं योग्यो नासीत्यर्थः ॥३०॥

आत्मदृष्ट्या शोको निराकारि, धर्मदृष्ट्याऽथ निराक्रियते—

**"स्वधर्ममपि चावेक्ष्य, न विकम्पितुमर्हसि ।**
**धर्म्याद् हि युद्धाच्छ्रेयोऽन्यत्,क्षत्रियस्य न विद्यते" ।३१।**

अर्थः—च=किञ्च, स्वधर्ममपि=शरीरात्मनोर्विनश्वरत्वाविनश्वरत्ववत् स्वस्य क्षत्रियस्य धर्ममपि शास्त्रोक्तम्, अवेक्ष्य=अवलोक्य, तत्त्वतोऽवबुध्य,सम्यग् ज्ञात्वा न विकम्पितुं=न विचलितुं,नाधर्मधिया स्वधर्माद् युद्धाद् विनिवर्तितुमर्हसि=योग्योऽसि। हि=यस्माद्, धर्म्यात्=धर्मानपेतात् स्वधर्मभूताद्, युद्धात्=सङ्ग्रामाद्, अन्यत्=भिन्नं, श्रेयः=श्रेयःसाधनं, श्वोवसीयसम्, अतिप्रशस्तं कर्म, क्षत्रियस्य=क्षत्रियकुलसम्भूतस्य हिन्दुवीरस्य, न विद्यते=न वर्तते, नैवास्तीत्यर्थः ॥३०॥

इतश्च ते शोकं परित्यज्य योद्धव्यम्—

**"यदृच्छया चोपपन्नं, स्वर्गद्वारमपावृतम् ।**
**सुखिनः क्षत्रियाः पार्थ! लभन्ते युद्धमीदृशम्" ॥३२॥**

अर्थः—च=किञ्च,यदृच्छया=विनैवेच्छया,उपपन्नम्=उपस्थितं, प्राप्तम्, अपावृतम्=उद्घाटितकपाटं, स्वर्गद्वारं=स्वर्गस्य नाकस्य द्वारं वारम् । ईदृशम्=एतादृक्षं भीष्मादिक्षत्रियप्रवरप्रतियोगिकं, युद्धं=सङ्ग्रामं, पार्थ=हे पृथापुत्र ! सुखिनः=सुखहेतुपुण्यवन्तः, भाग्यवन्तः, क्षत्रियाः=क्षत्रियकुलसम्भवाः,लभन्ते=विन्दन्ते,प्राप्नुवन्तीत्यर्थः॥३२॥

अथ युद्धाकरणे दोषमाह—

**"अथ चेत् त्वमिमं धर्म्यं, संग्रामं न करिष्यसि ।**
**ततः स्वधर्मं कीर्तिं च, हित्वा पापमवाप्स्यसि" ॥३३॥**

अर्थः—अथ=इदानीं, मदुक्त्यनन्तरं, चेत्=यदि, त्वम्=अर्जुनस्त्वम्, इमम्=एतं भीष्मादिक्षत्रिप्रवरप्रतियोगिकं यदृच्छयो-

पपन्नं, धर्म्यं=धर्मादनपेतं, स्वधर्मभूतं, सङ्ग्रामं=युद्धं, न करिष्यसि=न विधास्यसि, न कुर्याः । ततः=तदनन्तरं, तदा, स्वधर्मं=स्वस्य क्षत्रियस्य धर्मं, शास्त्रविहितं युद्धाख्यं नित्यं कर्म, च=तथा, कीर्तिं=पूर्वार्चितां निजविक्रमहेतुकां 'शूरो वीरो युद्धापराङ्मुखः, इत्यादि-लक्षणकामात्मसमन्नां,शौर्यातिशयनिबन्धनां विश्वव्यापिनीं निजप्रसिद्धिं हित्वा=त्यक्त्वा, पापं=स्वधर्माकरणनिमित्तं प्रत्यवायं,नरकपातादि-कारणं पाप्मानम्, अवाप्स्यसि=प्राप्स्यसि, युद्धाकरणात् स्वधर्मं त्यक्ष्यसि, स्वकीर्तिं हास्यसि, नरकपातादिसाधनं प्रत्यवायाख्यं पापं च यास्यसि। नित्यकर्माननुष्ठाने नरकपातादिहेतोः प्रत्यवायस्य पाप-स्यावश्यम्भावादित्यर्थः ॥ ३२ ॥

ननु किमेतावदेव ? न—

**"अकीर्तिंचापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।**
**सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते" ॥३४॥**

अर्थः—च=किञ्च, भूतानि=सम्भाविताः असम्भाविताः सर्वे प्राणिनः, ते=तव, अव्ययाम्=अक्षयां, प्रलयान्ताम्, अकीर्तिं=कातरः पलायितः,इत्यादिलक्षणामवकीर्तिं,कथयिष्यन्ति=सभासमाजेषु सदा प्रवदिष्यन्ति । सम्भावितस्य="शूरो वीरो महायोद्धा" इत्येवं लक्षणां सम्भावनां प्राप्तस्य,शौर्यवीर्यपराक्रमादिभिर्बहुभिर्गुणैर्बहुमानितस्य,च=पुनरकीर्तिः=अपकीर्तिः, मरणात्=निधनादतिरिच्यते=अधिकायते, विशिष्यतेतरामित्यर्थः ॥३४॥

किञ्च—

**"भयाद् रणादुपरतं, मंस्यन्ते त्वां महारथाः ।**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम्" ॥३५॥**

अर्थः—भयात्=कर्णादेर्भयात्, कर्णादिभीत्या,रणाद्=युद्धाद्, उपरतं=विरतं परावृत्तं, त्वां=पार्थं त्वां, मंस्यन्ते=अवभोत्स्यन्ते, महारथाः=सात्यकिद्रुपदविराटादयो महायोद्धारः। च=तथा,येषां=भीष्मद्रोणप्रभृतीनां येषां, त्वम्=अर्जुनस्त्वं, बहुमतः=शौर्यवीर्यप्रा-क्रमादिभिरनन्यलभ्यैर्बहुभिर्गुणैर्गुरुः सम्मतः, तेषां समक्षे, भूत्वा=

पराङ्मुखा भूत्वा, लाघवं=लघुभावम्-अगुरुभावं, यास्यसि=प्राप्स्यसि, तेषामबहुमतो भविष्यसीत्यर्थः ॥३५॥

किञ्च—

"अवाच्यवादांश्च बहून्, वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं, ततो दुःखतरं नु किम् ॥३६॥

अर्थः—च=तथा, तव=तेऽहिताः=दुर्योधनकर्णविकर्णादयः शत्रवः, तव=ते, सामर्थ्यं=शौर्यं, निन्दन्तः=भीत्या पलायितस्य किं शौर्यमित्येवं कुत्सयन्तः, बहून्=बहुलान्, नानाविधान्, "षण्ढः स्त्रीहृदयो दुर्बलचेताः" इत्येवं लक्षणान् अवाच्यवादान्=वक्तुमयोग्यानपशब्दान्, वदिष्यन्ति=गदिष्यन्ति, ततः=तेभ्यः कर्णकटुभ्यो मर्मघातिभ्यो वक्तुमयोग्येभ्यः शब्देभ्यः, दुःखतरम्=अतिशयितं दुःखं, नु=निश्चयेन, किमस्ति=न किमप्यस्तीत्यर्थः ॥ ३६ ॥

ननु किं पुनरधुना कर्तव्यं ? तत्राह—

"हतो वा प्राप्स्यसि स्वर्गं, जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय!, युद्धाय कृतनिश्चयः" ॥३७॥

अर्थः-हतो वा=हतश्चेत्, कर्णादिभिः शत्रुभिर्निहतश्चेत्, स्वर्गं=नाकं, प्राप्स्यसि=यास्यसि, जित्वा वा=कर्णादीन् शत्रून् हत्वा च, विजित्य च, महीं=पृथिवीं, भोक्ष्यसे=उपभोक्ष्यसे, निष्कण्टकं पृथिवीराज्यं करिष्यसे, यथाकामं पूर्णं साम्राज्यसुखमुपलप्स्यसे, अनुबोभूयिष्यसे । तस्माद्=यस्मादुभयथा लाभस्तस्मात्, कौन्तेय=हे कुन्तीपुत्र ! युद्धाय=युद्धार्थं, कृतनिश्चयः=मारयिष्यामि शत्रून्, मरिष्यामि वा स्वयम्, इति कृतो विहितो निश्चयो निर्णयो येन, स तथाभूतो भवन्, उत्तिष्ठ=उत्थितो भव, सन्नद्ध एधीत्यर्थः ॥ ३७ ॥

ननु युद्धार्थमुत्थाने हिंसायाः अवश्यम्भावात् तज्जन्यं स्वर्गादिप्रतिबन्धकं पापं प्राप्नुयाम् ? तत्राह—

"सुखदुःखे समे कृत्वा, लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व, नैवं पापमवाप्स्यसि" ॥३८॥

अर्थः- सुखदुःखे=सुखं च दुःखं च, ते हर्षविषादरूपे द्वे, समे=तुल्ये, रागद्वेषशून्यत्वं तुल्यत्वं कृत्वा=विधाय, सुखे रागं, दुःखे द्वेषम्,

अकृत्वा, लाभालाभौ=राज्यादिप्राप्तिर्लाभः,तदप्राप्तिरलाभः, लाभश्चालाभश्च,तौ सुखदुःखहेतुभूतौ द्वौ,जयाजयौ = विजयो जयः, पराजयोऽजयः, जयश्चाजयश्च, तौ लाभालाभहेतुभूतौ स्वोत्कर्षानुत्कर्षौ द्वौ, समौ=तुल्यौ रागद्वेषवर्जितौ कृत्वा विधाय, ततः=तदनन्तरं,युद्धाय= सङ्ग्रामाय,युज्यस्व=उद्युज्यस्व,उद्योगं कुरुष्व,सर्वान् शत्रून् सम्प्रहरस्व, एवम्=अमुना प्रकारेण युद्धाय युज्यमानः, सुखदुःखादिद्वन्द्वत्रिकं समीकृत्य युद्धार्थं घटमानः,पापं=हिंसाजन्यं दुरितं,स्वर्गादिप्रतिबन्धकं पाप्मानं, नावाप्स्यसि=न प्राप्स्यसीत्यर्थः।

यः खलु सुखमनुरज्यति, दुःखमनुक्रुध्यति,लाभे नन्दति,अलाभे तपति, जयमाद्रियते, पराजयमवमन्यते, राज्यादिकामनया युध्यते, यशस्तृष्णया सम्प्रहरिष्यते, स नूनं हिंसापापेन लिप्यते,यस्तु न सुखं प्रेप्सति, न दुःखं जिहासति, न लाभे प्रसीदति, नालाभे विषीदति, न विजयं याचते, न पराजयं जुगुप्सते,यदाचरति,धर्मधियाऽऽचरति, यत् करोति, धर्मबुद्ध्या करोति, न क्वचिद् रागद्वेषाभ्यां प्रवर्तते, न कुतश्चिद् रागद्वेषाभ्यां निवर्तते, स युद्धं कुर्वाणः कथं हिंसापापेन लिप्येत। नहि स रागद्वेषादिवशीभूतो राज्यादिकामनया युद्धं कुरुते। किं तर्हि? धर्मो मे युद्धमिति धिषणया शत्रून् संप्रहरते। न च स्वधर्मं युद्धं यथाशास्त्रमनुतिष्ठन् कश्चित् क्षत्रियः कदाचित् पापेन संसृज्यते, किं पुनर्भवादृशो नित्यं धर्मपरायणःक्षत्रियप्रवरः। तस्मात् तूर्णमुत्थाय युद्धाय यतस्व, शत्रूँश्च यथायथं संप्रहरस्व॥३८॥

अथ कर्मयोगं प्रस्तोतुं ज्ञानयोगनामानमात्मज्ञानं धर्मज्ञानसहितमुपसंहरन्नाह—

**"एषा तेऽभिहिता सांख्ये, बुद्धियोगे त्विमां शृणु।**
**बुद्ध्या युक्तो यया पार्थ!, कर्मबन्धं प्रहास्यसि"॥३९॥**

अर्थः—एषा=इयं, ते="शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इत्येवं प्रार्थयमानाय ते तुभ्यम्, अभिहिता="अशोच्यानन्वशोचस्त्वम्" इत्यादिना कथिता शिष्टा,उपदिष्टा,सांख्ये=संख्या बुद्धिरन्तः करणं,सम्यक् ख्यायते दृश्यते,याथातथ्येन ज्ञायते वस्तुजातमनयेति तद्व्युत्पत्तेः, तया निष्पन्नं ज्ञानं सांख्यं, तस्मिन्, अधिकरणे सप्तमीयं विभक्तिः, अधिकरणमाधारः—आश्रयः, ज्ञानमत्रात्मज्ञानं, ज्ञानयोगः, तदाधारा, तदाश्रया, बुद्धिः=स्वकर्तव्यगोचरा करणीया बुद्धिः, आत्मज्ञानलक्षणं

ज्ञानयोगमाश्रित्य स्वकर्तव्यकर्मविषया कर्तव्या मतिस्ते तुभ्यमुपदिष्टेति पूर्वेण सम्बन्धः, योगे तु-इमां=योगोऽत्र कर्मयोगः, सप्तमी पूर्ववदधिकरणे, चार्थस्तुः, कर्मयोगाश्रयां च इमाम् एतामनन्तरोच्यमानां स्वकर्तव्य-विषयां निर्वर्तनीयां करणीयां बुद्धिं मतिं, शृणु=सावधानेन चेतसाऽऽ-कर्णय, निशामय । यया बुद्ध्या=मत्या, युक्तः=संयुक्तः, समन्वितः, कर्मबन्धं=कर्म कुर्वाणोऽपि कर्मकृतं बन्धनं, प्रहास्यसि=परित्यक्ष्यसि, कर्मलेपं न प्राप्स्यसि-कर्मणा न लेप्स्यसीत्यर्थः ॥ ३९ ॥

अथ कर्मयोगमाहात्म्यमाह—

"नेहाभिक्रमनाशोऽस्ति, प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य, त्रायते महतो भयात्" ॥४०॥

अर्थः—इह=अस्मिन् कर्मयोगे, अभिक्रमनाशः=अभिक्रमण-मभिक्रमः प्रारम्भः, तस्य नाशः=कृष्यादेरिव फलदानादृते विनाशो, नास्ति=न विद्यते, समाप्त्यभावेऽपि कृतः कर्मारम्भो न निष्फलायते, प्रत्यवायः=अङ्गसाकल्याभावहेतुको वा, मध्ये विच्छेदहेतुको वा पाप्मा, न विद्यते=न भवति । न चैतदेव, अपि चास्य=एतस्य कर्मकर्मयोगस्य, धर्मस्य=वेदोक्तधर्मस्य, स्वल्पमपि=अत्यल्पमपि कृतमनुष्ठानं, महतो भयात्=बृहतस्त्रासादैहिकामुष्मिकाद् दुर्गतिलक्षणात् साध्वसात्, त्रायते=रक्षां कुरुते, अत्रामुत्र रारक्ष्यते, इत्यर्थः ॥ ४० ॥

किञ्च—

"व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ! ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्" ॥४१॥

अर्थः—इह=अस्मिन् कर्मयोगे, व्यवसायात्मिका=व्यवसायो निश्चयः, तदात्मिका, तत्स्वरूपा, बुद्धिः="कर्तव्यं मम कर्म, कर्मण्येव ममाधिकारः" इत्येवंलक्षणा मतिश्चित्तवृत्तिः, एका=एकला एव भवति, कुरुनन्दन=कुरुसन्तानत्वात्पाण्डुः कुरुः, हे पाण्डुनन्दन !, च=पुनः, अव्यवसायिना=नास्ति व्यवसायो निश्चयः कर्मयोगे येषां, तेषाम-कर्मयोगिनां, बुद्धयः=बुद्धिवृत्तयोऽनन्ताः=काम्यपदार्थानन्त्यादन्त-रहिताः, असंख्याः, कस्मात्? हि=यस्मात्, बहुशाखाः=प्रत्येकं बहुस्कन्धाः, प्रचुरावान्तरभेदाः, काम्यपदार्थानन्तभेदभूयस्त्वादित्यर्थः ॥४१॥

नन्वव्यवसायिनामकर्मयोगिनां कामकामानामपि व्यवसायात्मिका बुद्धिः कुतो न भवति ? तत्राह त्रिभिः—

"यामिमां पुष्पितां वाचं, प्रवदन्त्यविपश्चितः ।
वेदवादरतः पार्थ! नान्यदस्तीति वादिनः" ॥४२॥
"कामात्मानः स्वर्गपराः, जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां, भोगैश्वर्यगतिं प्रति" ॥४३॥
"भोगैश्वर्यप्रसक्तानां, तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः, समाधौ न विधीयते" ॥४४॥

अर्थः—पार्थ=हे पृथापुत्र!,अविपश्चितः=अपण्डिताः,पण्डितमानिनोऽव्यवसायिनोऽकर्मयोगिनः, वेदवादरताः=वेदवादेषु "अपाम सोमममृताः अभूम" (ऋ० ८।४८।३) इत्यादिलक्षणेषु वेदवाक्येषु रताः निरताः,प्रीतिमन्तः,नान्यदस्तीति वादिनः=विषयसुखादैन्द्रियकादन्यन्नास्ति किञ्चित् सारभूतमिति वदनशीलाः ॥ ४२ ॥ कामात्मानः=काममयचेतसः, विषयसुखकामनाव्याप्तचित्ताः, स्वर्गपराः= स्वर्गसुखपरायणाः, विषयसुखाभिलाषुकाः, यामिमाम्=एतां, पुष्पितां= पुष्पितद्रुमवच्छोभमाना,श्रवणमात्ररमणीयां,जन्मकर्मफलप्रदां=जन्म च, कर्मफलं=विषयभोगमैश्वर्य्यं च त्रयं, प्रददाति प्रतिपादयति, तां, भोगैश्वर्यगतिप्रति=भोगो विषयभोगः,ऐश्वर्यं तत्साधनं विभूतिः,तयोर्गतिः प्राप्तिः, तां प्रति, तत्प्रतिनिधिं, तत्प्रतिमां, क्रियाविशेषबहुलां= क्रियाविशेषाः यज्ञादिलक्षणाः कर्मभेदाः, बहुलाः बहवः प्रतिपाद्यन्ते यया,तां-भोगैश्वर्यप्राप्तिसाधनभूतयज्ञादिकर्मकलापप्रतिपादिकां,वाचं= "यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्। ते ह नाकं महिमानःसचन्त, यत्र पूर्वे साध्याः सन्ति देवाः" (ऋ० १०।९०।१६) इत्यादिवाचं,प्रवदन्ति=प्रब्रुवन्ति,प्रहृष्टाः मुहुर्मुहुरुच्चारयन्तीत्यर्थः॥४३॥ तया=अमुया वेदवाचाऽपहृतचेतसाम्=आकृष्टान्तःकरणानां, भोगैश्वर्यप्रसक्तानां=भोगैश्वर्ययोरासक्तानाम्, अभिनिविष्टानामविपश्चितामकर्मयोगिनां,व्यवसायात्मिका=इदमस्माकं कर्तव्यमिति निश्चया-

त्मिका,बुद्धिः=मतिः,समाधौ=योगसमाधावपि,न विधीयते=न बोभूयते,नोपजायते,व्युत्थान काले तु किमुवक्तव्यं,क्षिप्तचेतस्त्वादित्यर्थः॥४४

नन्वस्माभिस्तर्हि कथं भाव्यम्? तत्राह—

"त्रैगुण्यविषया वेदाः, निस्त्रैगुण्यो भवार्जुन! ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्"॥४५॥

अर्थः—अर्जुन=हे अर्जुन!, वेदाः=यज्ञादिकर्मविशेषपराः वेदमन्त्राः, त्रैगुण्यविषयाः=आ ब्रह्मलोकाद् आ च पृथिवीलोकात् सर्वं जगत् त्रैगुण्यं, त्रिगुणप्रकृतिकार्यत्वात्, तदेव यज्ञादिकर्मविशेषाणां फलत्वेन विषयो येषां, ते त्रैगुण्यजगद्विषयाः, फलकामनयाऽनुष्ठीयमानानां यज्ञादिकर्मविशेषाणां फलं त्रैगुण्यं जगदित्येतस्यार्थस्य प्रकाशकाः, त्वं निस्त्रैगुण्यः=त्रैगुण्यात् जगतो निष्क्रान्तः, तत्कामनारहितः, सर्वदा सर्वथा निष्कामो भव=एधि। निर्द्वन्द्वः=परस्परविरुद्धं पदार्थयुग्मं द्वन्द्वं, तेभ्यः शीतोष्णक्षुत्पिपासासुखदुःखहानिलाभजयपराजयादिभ्यो द्वन्द्वेभ्यो निर्गतः, सोढव्यबुद्ध्या सर्वेषु तेषु समः, प्रतीकारासम्भवे समत्वेन तेषां सहनशीलो भवेति सम्बन्धः, नित्यसत्त्वस्थः=अवश्यमिदं साधयिष्यामीत्याग्रहलक्षणं बलं सत्त्वं, तत्र नित्यं स्थितः—सर्वदा सर्वथा सर्वत्रात्मनैर्बल्यवर्जितः, अनिशं शौर्योपेतः, निर्योगक्षेमः=अप्राप्तस्य प्राप्तिर्योगः, प्राप्तस्य रक्षणं क्षेमः,ताभ्यां निष्क्रान्तः, तत्रानाकुलः, तदुपायानुष्ठानमात्रपरः, आत्मवान्=आत्मवशः, वश्यकायेन्द्रियमनाः, अप्रमत्तः, सदाऽऽत्मनिष्ठो, भवेति पूर्ववत् सम्बन्धः ॥४५॥

ननु निस्त्रैगुण्येन सताऽपि मयाऽवश्यं स्वर्गादिफलाः यज्ञादिकर्मविशेषाः अनुष्ठीयेरन्, मा नामानुष्ठानाभावे तत्प्रतिपादकाः वेदमन्त्राः अनर्थकाः भूवन्? । न । प्रयोजनाभावादिति सदृष्टान्तमाह—

"यावानर्थ उदपाने, सर्वतः संप्लुतोदके ।
तावान् सर्वेषु वेदेषु, ब्राह्मणस्य विजानतः" ॥४६॥

अर्थः—सर्वतः=सर्वत्र, सम्प्लुतोदके=प्रसृतसलिले, अभितः प्रवृद्धे जलराशौ सति, उदपाने=उदमुदकं पीयतेऽस्मिन्, तस्मिन् कूपे वा,तडाके वा,वाप्यां वा, यावान्=यावत्परिमाणोऽर्थः=स्नानपानादि-

लक्षणोऽर्थः प्रयोजनं, स्नानपानाद्यर्थिनो लोकस्यावशिष्यते, तावान्=तावत्परिमाणोऽर्थः प्रयोजनं, विजानतः=वेदार्थं कर्मयोगं विशेषेण जानतोऽवबुध्यमानस्य, ब्राह्मणस्य=ब्रह्मपरायणस्य, ब्रह्म वेदः, तस्य स्वाध्यायबुद्ध्या प्रत्यहं नियमेनाध्ययनं कुर्वाणस्य मनुपुत्रस्य, सर्वेषु=निखिलेषु, वेदेषु=फलोपबन्धेन यज्ञादिकर्मविशेषप्रतिपादकेषु वेदमन्त्रेषु परिशिष्यते। यथा सर्वतः सम्प्लुतोदके सत्युदपाने स्नानपानाद्यर्थिनो लोकस्य कोऽप्यर्थो न विद्यते, जलस्य सर्वत्र सुलभत्वेन तदपेक्षाया एवाभावात्, तथा वेदार्थं कर्मयोगं विजानतो ब्राह्मणस्योदपानस्थानीयेषु फलोपबन्धेन यज्ञादिकर्मविशेषप्रतिपादकेषु वेदमन्त्रेषु कोऽप्यर्थो न वर्तते, तद्विज्ञानमाहात्म्येन फलापेक्षाया एवाभावादित्यर्थः। आत्मज्ञानपूर्वकं भक्तिप्रधानं जातिदेशात्मोन्नतिसाधनानां वेदोक्तकर्मणां यावदायुः कर्तव्यबुद्ध्याऽनुष्ठानं हि कर्मयोगः। स एव च सकलवेद पितृभूतस्य हिन्दुधर्मपुस्तकस्य भगवत"ऋग्वेदस्य"सिद्धान्तभूतोऽर्थः, "अप्नस्वती मम धीरस्तु शक्र!" ( ऋ० १०। ४२। ३ ) अप्नस्वतीमश्विना! वाचमस्मे, कृतं नो दस्रा! वृषणा! मनीषाम् " ( ऋ० १।११२। २४) इत्यादिमन्त्रवर्णेभ्यः। समाम्नायते चात्र याजुषोऽपि मन्त्रः " कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः " ( यजु० ४०। २ ) इत्यादिः। अस्यैव च वेदार्थस्य कर्मयोगस्य निवृत्तं कर्मेति स्मार्ती परिभाषा। यत्रैतदुदाहृतं भवति—

"प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम्" ॥८८॥
"इह चामुत्र वा काम्यं, प्रवृत्तं कर्म कीर्त्यते।
निष्कामं ज्ञानपूर्वं तु निवृत्तमुपदिश्यते" ॥८९॥
"प्रवृत्तं कर्म संसेव्य देवानामेति साम्यताम्।
निवृत्तं सेवमानस्तु भूतान्यत्येति पञ्च वै" ॥९०॥

( मनु० १२ ) इति। तमेतं भगवतो वेदस्य सिद्धान्तभूतमर्थं निवृत्तकर्मनामानं कर्मयोगं यो ब्राह्मणो ब्रह्मपरायणो मनुवंशजो मनुष्यपश्चास्यो विजानाति, तेन फलोपबन्धेन वेदमन्त्रप्रतिपाद्याः यज्ञादिकर्मविशेषाः न क्वचित् कर्हिचिदनुष्ठीयन्ते, अनुष्ठातुं वा कथञ्चिदुत्सहन्ते। प्रयोजनाभावात्। यस्तु वेदार्थं कर्मयोगं नावबुध्यते, अब्राह्मणत्वात्,

स कामोपप्लुतचेतस्त्वादवश्यं तान् तान् स्वर्गादिफलकान् यज्ञादिकर्म-विशेषान् अनुष्ठास्यति,नास्ति किञ्चित् संशयावकाशः । तस्मात् तं कामिनं प्रति सार्थकास्तत्प्रतिपादकाः सर्वे वेदमन्त्राः,नास्माभिरननुष्ठेयत्वे तेषां यज्ञादिकर्मविशेषाणामनर्थकास्ते स्युरिति स्वप्नेऽपि भ्रमितव्यम् ॥४६

ननु सार्थकाश्चेद् वेदमन्त्राः, तदा तत्प्रतिपाद्याः यज्ञादिकर्मविशेषाः फलिनःसन्तःकथमस्माभिरुपेक्ष्येरन्,तदुपेक्षायां च कर्मत्वाविशेषात्कथं नित्यनैमित्तिकानि सर्वाणि कर्माण्यपिनोपेक्ष्येरन् संन्यस्येरन् ? तत्राह—

"कर्मण्येवाधिकारस्ते, मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूः, मा ते सङ्गोऽस्त्वकर्मणि" ॥४७॥

अर्थः—ते=वेदार्थं कर्मयोगं जानतस्तव, कर्मणि=जातावेक-वचनम्, कर्मसु, एव=निश्चयेन, अधिकारः=स्वामित्वलक्षणः "ममेदं कर्तव्यम्"इत्येवमात्मकः सम्बन्धः, फलेषु=कर्मणां फलेषु, कदाचन=कस्मिन्नपि काले, नाधिकारः=नास्ति स्वामित्वलक्षणः "ममेदं भोक्त-व्यम्" इत्येवमात्मकः सम्बन्धः । कर्मफलहेतुः=कर्मणां फलं हेतुः प्रयोजकः प्रेरको यस्य, स त्वं कर्मफलप्रयोज्यो, मा भूः=मा स्याः,कर्म-फलैः प्रेरितः कर्माणि मा कुरु, ते=तव, अकर्मणि=कर्माकरणे, कर्म-त्यागे कर्मसंन्यासे, सङ्गः=सक्तिरभिनिवेशो, माऽस्तु=मा भूत्, याव-दायुः कर्तव्यबुद्धया कर्माणि कुर्याः इत्यर्थः ॥४७॥

ननु कर्मसु चेन्मेऽधिकारः, तदा तेषां सिद्धौ हर्षोऽसिद्धौ विषादश्च स्याताम् ? तत्राह—

"योगस्थः कुरु कर्माणि, सङ्गं त्यक्त्वा धनंजय! ।
सिद्ध्यसिद्ध्योः समोभूत्वा, समत्वं योग उच्यते" ॥४८

अर्थः—धनञ्जय=धनहेतुत्वात्संग्रामो धनं,हे संग्रामजित् !,हे धनानां जेतो वा,योगस्थः=योगे स्थितः, योगे स्थिरीभूय,कर्माणि=वेदो-क्तानि लोकसम्मतानि आत्मजातिदेशोन्नतिसाधनानि सर्वाणि कर्माणि कुरु=यथाशास्त्रमनुतिष्ठ सङ्गं=सक्तिं, कर्तृत्वाभिनिवेशं, त्यक्त्वा=हित्वा,तथा सिद्ध्यसिद्ध्योः=कर्मफलप्राप्तिः सिद्धिः,तदप्राप्तिरसिद्धिः, तयोः, समो भूत्वा =तुल्यो भूत्वा,वृत्त्वा,फलसिद्धौ हर्षे,तदसिद्धौ च

विषादमकृत्वा,कर्माणि कुरु, इति सम्बन्धः, समत्वं=कर्मफलसिद्ध्य-सिद्ध्योर्यत्समत्वं तुल्यत्वं, हर्षविषादशून्यत्वं, तदेव योगः="योगस्थः" इत्यत्रोक्तो योगः, उच्यते=कर्मयोगिभिः कथ्यते, इत्यर्थः ॥ ४८ ॥

ननु कस्मात् योगे स्थितः कर्म कुर्या, न फले स्थितः ? तत्राह—

**"दूरेण ह्यवरं कर्म, बुद्धियोगाद् धनञ्जय ! ।**
**बुद्धौ शरणमन्विच्छ, कृपणाः फलहेतवः" ॥४९॥**

अर्थः—धनञ्जय=हे धनजेतः ! कर्म=फलाभिलाषेण क्रियमाणं कर्म, बुद्धियोगात्=समत्वबुद्धियोगेन क्रियमाणात्कर्मणः सकाशात्, दूरेण=दूरतोऽतिविप्रकर्षेणावरम्=न वरम् अश्रेष्ठं निकृष्टं,हीनतमं,हि=यस्मात्,तस्मात् बुद्धौ=समत्वबुद्धौ,समत्वबुद्धिलक्षणे कर्मयोगे,शरणम्=आश्रयम्,अन्विच्छ=मार्गयस्व,समत्वबुद्धिलक्षणं योगमाश्रित्य,समत्व-बुद्धिलक्षणे योगे स्थितः, कर्म कुर्याः, कर्म निर्वर्तय, फलहेतवः=फलं हेतुः कर्मानुष्ठाने प्रयोजकः प्रेरको येषां, ते फलाभिलाषेण कर्म कुर्वाणाः, फले स्थिताः कर्मकर्तारः, कृपणाः=कृपणीयाः कृपाविषयाः, दीनाः, हर्षशोकाकुलचित्ताः, भवन्तीत्यर्थः ॥ ४९ ॥

किञ्च—

**"बुद्धियुक्तो जहातीह, उभे सुकृतदुष्कृते ।**
**तस्माद् योगाय युज्यस्व, योगः कर्मसु कौशलम्" ॥५०**

अर्थः—इह=अस्मिन् लोके,बुद्धियुक्तः=समत्वबुद्धियुक्तः,समत्व-बुद्धियोगाश्रयात् कर्म कुर्वाणः, सुकृतदुष्कृते=सुकृतं पुण्यं, दुष्कृतं पापं, सुकृतं च दुष्कृतं चोभे=द्वे,जहाति=त्यजति, कर्मजाभ्यामुभाभ्यां सुकृतदुष्कृताभ्यां पुण्यपापाभ्यां न संस्पृश्यते। तस्मात्=यस्मादेवं, तस्मात्,योगाय=समत्वबुद्धियोगार्थं,समत्वबुद्धियोगमाश्रयितुं, युज्यस्व=उद्युज्यस्व, घटस्व,प्रयतस्व, समत्वबुद्धियोगमाश्रित्य सर्वाणि कर्माणि विधत्स्व,योगः=समाश्रीयमानः समत्वबुद्धियोगः, कर्मसु=क्रियमाणेषु सर्वेषु लौकिकवैदिककर्मसु, कौशलम्=आदधातीति क्रियाशेषः,कुशलं, मङ्गलं, शस्तं, प्रशस्तमित्यनर्थान्तरम्, तस्य भावः कौशलं, कर्मजन्य-सुकृतदुष्कृतस्पर्शनिबन्धनबन्धकतानिवारणलक्षणं मांगल्यं, प्राशस्त्यं,

सुखदुःखहर्षशोकादिफलजननसामर्थ्यापाकरणरूपं कौशलम्, आदधाति, निधापयति, स्थापयतीत्यर्थः ॥ ५० ॥

ननु कृतानां कर्मणां फलस्यावश्यम्भावाद् अस्मिन् लोके फलाभावेऽपि परलोके फलं भविष्यति ? तत्राह—

**कर्मजं बुद्धियुक्ताः हि, फलं त्यक्त्वा मनीषिणः ।**
**जन्मबन्धविनिर्मुक्ताः, पदं गच्छन्त्यनामयम्" ॥५१॥**

अर्थ—बुद्धियुक्ताः=समत्वबुद्धिलक्षणेन योगेन युक्ताः संयुक्ताः, समत्वबुद्धिलक्षणं कर्मयोगमाश्रित्य कर्म कुर्वाणाः, मनीषिणः=पण्डिताः, हि=निश्चयेन, कर्मजं=कर्मजन्यं फलं=सुखदुःखहर्षशोकादिलक्षणं फलं, त्यक्त्वा=हित्वा, अस्मिन् लोके अननुभूय, जन्मबन्धविनिर्मुक्ताः=जन्मैव बन्धः, जन्मबन्धः, तेन विनिर्मुक्ताः विशिष्टम् आत्यन्तिकं निःशेषं मोकं मुक्तिं प्राप्ताः, जीवनमुक्ताः सन्तोऽनामयं परिणामापक्षयादिसर्वरोगरहितं निर्दुःखं पदं=मोक्षाख्यं परमं पदं, पदनीयं प्रापणीयं विष्णोः परमं स्वरूपं गच्छन्ति=प्राप्नुवन्तीत्यर्थः॥ ५ ॥

नन्वीदृङ्महिमानं योगमहं कदा प्राप्नुयाम् ? तत्राह द्वाभ्याम्—

**"यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं, श्रोतव्यस्य श्रुतस्य च" ॥५२॥**

अर्थः—यदा=यस्मिन् काले, समये, ते=तव, बुद्धिः=अन्तःकरणं, मोहकलिलम्=अहमिदं, ममेदम्, इत्यादिलक्षणोऽविवेको मोहः, स एव कलिलं गहनं कालुष्यं, मालिन्यं, तद् व्यतितरिष्यति=व्यतिक्रमिष्यति, निर्मला निर्मोहा बोभविष्यति, तदा=तस्मिन् काले, समये, श्रुतस्य=श्रुतिपथमागतस्य, च=तथा, श्रोतव्यस्य=श्रोतुं योग्यस्य श्रोष्यमाणस्य, कर्मफलस्य, सर्वस्यैहिकामुष्मिकस्य दृष्टानुश्रविकस्यार्थस्य वस्तुनो निर्वेदं=निर्वेदनं 'ममेदमस्तु, इत्येवं रूपायाः रागगर्भायाः लाभबुद्धेर भावम्, अलंप्रत्ययलक्षणं वैराग्यं, गन्तासि=प्राप्तासि, गमिष्यसीत्यर्थः॥

**"श्रुतिविप्रतिपन्ना ते, यदा स्थास्यति निश्चला ।**
**समाधावचला बुद्धिः, तदा योगमवाप्स्यसि" ॥५३॥**

अर्थः—यदा=यस्मिन् काले, ते=श्रुतेषु श्रोतव्येषु चैहिकामु-

ष्मिकेषु दृष्टानुश्रविकेषु कर्मफलेषु नानाविधपदार्थेषु निर्वेदं गतस्यालं-प्रत्ययं प्राप्तस्य तव, श्रुतिविप्रतिपन्ना = श्रुतिभिः कर्मफलानां दृष्टानुश्रविकाणां विविधपदार्थानां श्रवणैर्विप्रतिपन्ना विविधां प्रतिपत्तिं प्राप्ता, न सम्प्रतिपन्ना, विक्षिप्ता, बुद्धि=अन्तःकरणनाम्नी धीः, प्रज्ञा, समाधौ= योगसमाधौ सम्प्रज्ञातेऽचला=न चला, यस्मिन्नेकस्मिन् विषये वस्तुनि लग्ना, तस्मादेकस्माद् विषयाद् विषयान्तरंप्रति न चलति, न गच्छति, तत्रैव स्थिता भवति यथा, तथा निश्चला=ममेदं कर्तव्यमिति निश्चयात् चलनवर्जिता, स्थास्यति=स्थिरीभविष्यति, न कदाचिदपि चलिष्यति, व्यवसायात्मिका सम्पत्स्यते, तदा=तस्मिन् काले, योगं = समत्वबुद्धि-लक्षणं योगं, कर्मयोगम्, अवाप्स्यसि = प्राप्स्यसीत्यर्थः।

पातञ्जलयोगयोगी खलु समाधिवेलायामेव समाधिस्थः, समाधि-वेलायामेव स्थितधीः स्थितप्रज्ञो भवति, न व्युत्थानवेलायाम्। अत एव तस्य द्वौ कालौ, समाधिकालो व्युत्थानकालश्च। यत्रैतदुदाहृतं भवति "तदा द्रष्टुः स्वरूपेऽवस्थानम्" (यो० १।३) "वृत्तिसारूप्यमितरत्र" (यो० १।४) "ते समाधावुपसर्गाः व्युत्थाने सिद्धयः" (यो० ३ ३७) इत्यादि। यस्तु कर्मयोगी, स व्यवसायात्मिकबुद्धित्वात् सदैव निश्चल-मतिः, सदैव स्थितप्रज्ञः, सदैव समाधिस्थः, न स्वप्नेऽप्यस्ति तस्य व्युत्थान-कालः। तस्मादसौ पातञ्जलयोगयोगिनः सकाशात् प्रशस्यतमः, सदैव योगित्वात् श्रेयान् ॥ ५३ ॥

अत्रार्जुनः पृच्छति—

" अर्जुनः उवाच "।

**"स्थितप्रज्ञस्य का भाषा, समाधिस्थस्य केशव ! ।**
**स्थितधीः किं प्रभाषेत, किमासीत व्रजेत किम्" ॥५४॥**

अर्थः—केशव = हे प्रशस्तकेश !, स्थितप्रज्ञस्य = स्थिता निश्चला प्रज्ञा व्यवसायात्मिका बुद्धिर्यस्य, तस्य, समाधिस्थस्य=नित्यं समाधौ स्थितस्य, सर्वदैकाग्रचित्तस्य, तत्रभवतः कर्मयोगिनः, का भाषा = का परिभाषा, किं लक्षणम् १, स्थितधीः = स्थितप्रज्ञः समाधिस्थः कर्मयोगी, किं प्रभाषेत = शुभाशुभविषयप्राप्तौ किं प्रभाषते, किमाचष्टे, किं ब्रूते, कीदृशं हर्षविषादयोः प्रकाशनं कुरुते २, किमासीत = कथमास्ते, श्रोत्रा-

दीन्द्रियविषयेषु शब्दादिषु केन प्रकारेणोपवेविश्यते,कीदृशैरिन्द्रियैस्तै-स्तानुपभुङ्क्ते ३ किं व्रजेत=कथं व्रजति, लौकिकेषु वैदिकेषु च कर्मसु कथं चलति, केन प्रकारेण तानि कर्माण्याचरति ४ इत्यर्थः ।

कानि खलु लक्षणानि चिन्हानि, यैर्दृष्टिपथमागतैर्धूमेन वह्निरिव समाधिस्थः स्थितप्रज्ञः कर्मयोगी प्रतिपद्येतेति प्रथमः प्रश्नः । इष्टविषयप्राप्तौ चानिष्टविषयप्राप्तौ च,कथमस्य समाधिस्थस्य स्थितप्रज्ञस्य कर्मयोगिनो मनो भवति,हृष्टं वा भवति विषण्णं वा,तदुभयरहितं वेति द्वितीयः प्रश्नः । उपस्थितान् शब्दादिविषयान् कथमयमुपलभते, वश्येन्द्रियै र्वाऽवश्येन्द्रियैर्वेति तृतीयः प्रश्नः । लौकिकेषुच व्यवहारेषु कथमयमाचरति, सस्पृहो वा निःस्पृहो वेति चतुर्थः प्रश्नः ॥ ५४ ॥

अथैतेषां चतुर्णामर्जुनप्रश्नानां क्रमेणोत्तराण्याह भगवान् श्रीकृष्णः—

"श्रीभगवानुवाच" ।

"प्रजहाति यदा कामान् सर्वान् पार्थ ! मनोगतान् ।
आत्मन्येवात्मना तुष्टः, स्थितप्रज्ञस्तदोच्यते" ॥ ५५ ॥

अर्थः—पार्थ=हे पृथापुत्र!, यदा=यस्मिन् काले, मनोगतान्=मनसि चित्ते गतान् प्रविष्टान् ,मनसि स्थितान् ,चित्तं श्रितान्,सर्वान्=अखिलान्,अशेषान् ,कामान्=गर्द्धान् ,दृष्टानुश्रविकविषयाभिलाषान् , प्रजहाति=परित्यजति, आत्मन्येव=विषयव्यवच्छेदोऽवधारणार्थः,स्वात्मन्येव, न तु विषयेषु,आत्मना=स्वात्मना,स्वयं,न साधनान्तरेण केनचित्, तुष्टः=सन्तुष्टः,परितृप्तः,प्राप्तालंप्रत्ययः,भवति,सम्पद्यते,तदा=तस्मिन् काले स्थितप्रज्ञः=प्रतिष्ठितबुद्धिर्निश्चलमतिर्नित्यं समाहितमनाः,उच्यते=कथ्यते, वेदविद्भिः कर्मयोगिभिरित्यर्थः ॥ ५५ ॥

"दुःखेष्वनुद्विग्नमनाः, सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते" ॥५६॥

अर्थः—दुःखेषु=कष्टेषु प्राप्तेषु, अनुद्विग्नमनाः=नोद्विग्नं क्षुब्धं चाञ्चल्य प्राप्तमनवस्थानं गतमस्वस्थं जातं मनो हृदयं यस्य,सोऽव्याकुलहृदयः,स्वस्थान्तःकरणः,सुखेषु=आनन्देषु शर्मसु प्राप्तेषु,विगतस्पृहः=विगता विशेषेण निर्गता स्पृहा तृष्णा, तज्जातीयसुखगोचरोऽभिलाषो

यस्य, स विगतसुखतृष्णः, वीतरागभयक्रोधः=रागो रक्तिः सक्तिः, भयं भीतिः,क्रोधः कोपः,ते वीताः विशेषेण निर्गताः यस्मात्,स रागादि-वर्जितः अस्थिरताहेतुभी रागभयक्रोधैरपरामृष्टोऽसंस्पृष्टबुद्धिर्मुनिः= कर्मयोगी, स्थितधीः = स्थितप्रज्ञः स्थिरमतिरुच्यते = कथ्यते, मुनिभिः कर्मयोगिभिरित्यर्थः ॥ ५६ ॥

**"यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।**
**नाभिनन्दति न द्वेष्टि, तस्य प्रज्ञा प्रतिष्ठता" ॥५७॥**

अर्थः—यः=आत्मजातिदेशोन्नतिसाधनेषु वेदविहितेषु कर्मसु वर्त-मानो यः,सर्वत्र=सर्वेषु बाह्यान्तरेन्द्रियविषयेषु जड़चेतनेषु,अनभिस्नेहः= अभिस्नेहोऽतिप्रीतिरासक्तिः, तद्वर्जितः, तत्तत्=अदोऽदो जडं वा चेतनं वा, शुभाशुभं=सुखसाधनं शुभं,दुःखसाधनम् अशुभं,विषयं प्राप्य= अवाप्य, उपलभ्य, नाभिनन्दति = न प्रशंसति, सम्यक् सम्यगिति न वदति, न द्वेष्टि=न निन्दति, असम्यगसम्यगिति न गदति,शुभं विषयं प्राप्य न हृष्यति,तद्विपरीतमशुभं विषयं प्राप्य च न विषीदति,तस्य= कर्तव्यबुद्धया कर्मसु वर्तमानस्य कर्मयोगिनोऽमुष्य,प्रज्ञा=बुद्धिः,प्रति-ष्ठिता = प्रकर्षेण स्थिता निश्चला, स स्थितप्रज्ञः, इत्यर्थः ॥ ५७ ॥

अथार्जुनस्य तृतीयं प्रश्नं प्रतिवक्तुमुपक्रमते—

**"यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठता" ॥५८॥**

अर्थः—च = किञ्च, यदा = यस्मिन् काले,अयम्=एष कर्मयोगी, सर्वशः=सर्वाणि,इन्द्रियाणि=श्रोत्रादीनि करणानि,इन्द्रियार्थेभ्यः= इन्द्रियाणां श्रोत्रादिकरणानाम् अर्थाः शब्दादिविषयाः,तेभ्यः,संहरते= संहरति, प्रत्याहरति, निवर्तयति, विषयेभ्यस्तेषां निवर्तनं, विषयेषु तेषां प्रवर्तनं च, स्वेच्छया करोति, इव=यथा, कूर्मः=कमठोऽङ्गानि= करचरणादीनि स्वशरीराङ्गानि, संहरते=संहरति, प्रत्याहरति, बहिर्दे-शादन्तः प्रवेशयति,स्वेच्छया बहिश्च निःसारयति, तस्य=अमुष्य स्वा-धीनेन्द्रियस्य कर्मयोगिनः प्रज्ञा = बुद्धिः, प्रतिष्ठिता = प्रकर्षेण स्थिता, निश्चला विज्ञातव्येत्यर्थः ॥ ५८ ॥

ननु योऽहर्दिवमुपवासं कुरुते, तस्योपवासेन क्षीणशरीरेन्द्रियस्येन्द्रिय-संहाराभावेऽपि भोगशक्तेरभावात् स्वयमेव विषयाः विनिवर्तन्ते, कर्म-योगिनि तत्संहारनिबन्धनः को विशेषः ? तत्राह—

**"विषया विनिवर्तन्ते, निराहारस्य देहिनः ।**
**रसवर्जं रसोऽप्यस्य, परं दृष्ट्वा निवर्तते" ॥ ५९ ॥**

अर्थः—निराहारस्य=आहारो भोजनं, तमकुर्वाणस्य, नित्य-मुपवसतो, देहिनः=शरीरिणः पुरुषस्य, विषयाः=शब्दादयो विषयाः, रसवर्जं=रसो विषयरागः, तं वर्जयित्वा, तं विना, विनिवर्तन्ते=विनि-वृत्तिं निवृत्तिमयन्ते, भोगाभावं प्रपद्यन्ते, अस्य=एतस्य कर्मयोगिनस्तु रसोऽपि=विषयवद् विषयरागोऽपि, परं=विषयेभ्यश्चेन्द्रियेभ्यश्चो-भयेभ्यः कार्यकरणेभ्यः प्रकृतितत्कार्येभ्यः परत्वेन वर्तमानमात्मानं, दृष्ट्वा=तत्त्वतो ज्ञात्वा, निवृत्तिं विनिवृत्तिमयते, अभावमापद्यते, इत्यर्थः। यस्तावदात्मानं तत्त्वतो न प्रतिपद्यते, रात्रौ दिवा च विषयैश्चेक्लिश्य-मानः "एते विषयाः सम्प्रति ममेन्द्रियाणां मा विषयीभूवन्" इति बुद्ध्योपवासलक्षणं कष्टं तपस्तप्यते, तस्य कष्टं तपस्तप्यमानस्य कृशतनोः कृशेन्द्रियस्य भोगशक्तेरभावादवश्यं विषयाः विनिवर्तन्ते। तेषां रागस्तु न जातु विनिवर्तते, न वा किञ्चिदवक्षीयते । तस्यात्माज्ञानमूलकत्वेना-त्मन्येव तत्त्वतो ज्ञाते निवर्त्यमानत्वात् । नह्यात्मानं तत्त्वतो न जानाति, विषयेषु च न रज्यतीति क्वचिदवलोक्यते । रञ्जनीयाः खलु विषयाः, आत्मा तेषामपि रञ्जनीयतमः, स येन तत्त्वतो नावालोकि, कथमसौ रञ्जनीयेषु विषयेष्वपि न रज्येत् । स्मर्यते च रागस्यात्माज्ञानमूलकत्वं योगदर्शने "अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्" (यो० २।४) इति । कर्मयोगी तु याथातथ्येनात्मानं जानीते, जाना-नश्च तत्रैव रमते, तत्रैव मोदते, तत्रैव च तोतुष्यते । न चाधुना तस्यास्ति विषयेषु मात्रयाऽपि तुष्टिः, न चाधुना तस्यास्ति विषयेषु लेशतोऽपि रक्तिः। स विषयान् सर्वानुपभुञ्जानोऽपि स्वेच्छयैवोपभुङ्क्ते, न जात्विन्द्रियैः प्रयोजितः, वश्येन्द्रियत्वात् । न वा विषयैराकृष्टः, रागाभवात् । सोऽयं विषयाणां निवृत्त्यर्थं भोजनमभुञ्जानादकर्मयोगिनोऽज्ञात्, व्रतिनो वा, तपस्विनो वा, तत्रभवति कर्मयोगिनि विशेषः ॥ ५९ ॥

ननु निराहारस्य पुरुषस्याप्रयतमानतया विषयाः विनिवर्तन्ते, नेन्द्रियाणि, साहारस्य पुरुषस्येन्द्रियाणां विषयेभ्यो विनिवृत्त्यर्थं प्रयतमानस्येन्द्रियाण्यपि विनिवर्तिष्यन्ते, कृतं विषयरागविनिवृत्त्यै परस्यात्मनो दर्शनेन ? तत्राह—

"यततो ह्यपि कौन्तेय ! पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि, हरन्ति प्रसभं मनः" ॥६०॥

अर्थः—कौन्तेय=हे कुन्तीपुत्र ! हि=निश्चयेन, यततोऽपि=अयतमानस्येव यतमानस्यापि, पुरुषस्य = मनुष्यस्य, विपश्चितः=पण्डितस्य, मनः=चित्तं,प्रमाथीनि=प्रमथनशीलानि,प्रमथनं प्रक्षोभणं, व्याकुलीकरणं,तत्स्वभावानि,इन्द्रियाणि=श्रोत्रादीनि करणानि,प्रसभं=प्रसह्य, बलात्कारेण, हरन्ति =कर्षन्ति, विषयप्रवणीकुर्वन्तीत्यर्थः ।

विषयरसो हीन्द्रियाणां जीवितं, विषयरागो हीन्द्रियाणां बलम् । यावदसौ मनसि वरीवृत्यते, तावदिन्द्रियाणि जीवन्ति,तावत् करणानि प्रबलीभवन्ति । जीवितानां प्रबलानां च तेषां वशीकरणं शतेनापि प्रयत्नातिशयैः, सहस्रेणापि पुरुषायुषैः, सर्वशास्त्राभिज्ञस्यापि पण्डितस्याशक्यम् । अतएवोक्तं मनुना-"मात्रा स्वस्रा दुहित्रा वा, न विविक्तासनो भवेत् । बलवानिन्द्रियग्रामो, विद्वांसमपि कर्षति"(मनु०२।२१५) इति । विषयरागनिवृत्त्युपायश्चात्मनः परस्य तत्त्वतो दर्शनं, यथातथ्येन ज्ञानं, स एवेन्द्रियाणां परमो वशीकरणोपायः, अनात्मसु विषयेषु सर्वेषु नीरसत्वनिश्चयात्, नाहाराभावो,न वा साहारस्य विदुषः कोऽप्यात्म प्रयत्नः, इति निश्चितो वेदमार्गः ॥ ६० ॥

ननु कथं तर्हि पुरुषेण भवितव्यम् ? तत्राह—

"तानि सर्वाणि संयम्य, युक्तः आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि, तस्य प्रज्ञा प्रतिष्ठिता" ॥६१॥

अर्थः—तानि=अमूनि, विपश्चितोऽपि मनोऽपहारकाणि,सर्वाणि=विश्वानि श्रोत्रादीनि करणानि, संयम्य=यमनं वशीकरणं, सम्यग् यमनम् आत्मदर्शनपूर्वकं तेषां वशीकरणं,तत् कृत्वा,सम्यग् वशीकृत्य, आत्मदर्शनेन स्वाधीनीकृत्य, मत्परः=अहं सर्वान्तरात्मा वासुदेवः परः

उत्कृष्टो भक्तव्यो यस्य, स मदेकान्तभक्तो, मद्भक्तिपरो युक्तः = समत्वलक्षणेन योगेनान्वितः, आसीत=यावदायुरवतिष्ठेत, दृढीभूत्वा वेदलोकसम्मतेषु कर्मसु वर्तेत । यस्य=पण्डितस्यापण्डितस्य वा यस्य पुरुषस्य, इन्द्रियाणि=श्रोत्रादीनि करणानि, हि=निश्चयेन वशे=कान्तौ, इच्छायाम्, आज्ञायां, वर्तन्ते, तस्य=अमुष्य, प्रज्ञा=बुद्धिः, प्रतिष्ठिता= प्रकर्षेण स्थिता, निश्चला, वेदितव्येत्यर्थः ॥ ६१ ॥

ननु विषयरागे सति पुरुषो विषयान् चिन्तयिष्यति, चिन्तयतु नाम, को दोषः ? तत्राह द्वाभ्याम्—

"ध्यायतो विषयान् पुंसः, संगस्तेषूपजायते ।
संगात् सञ्जायते कामः, कामात् क्रोधोऽभिजायते"॥६२

अर्थः—विषयान् = शब्दादीन् विषयान्, ध्यायतः = चिन्तयतः, पुंसः = पुरुषस्य, तेषु = अमीषु शब्दादिविषयेषु, सङ्गः = विकारहेतुः सम्बन्धः, सक्ति रुपजायते=उत्पद्यते। संगात्=विकारहेतुसम्बन्धात् सक्तेः कामः=अभिलाषस्तृष्णा गर्द्धो लोभो रागः, सञ्जायते=समुत्पद्यते, कामात् =अभिलाषात् कुतश्चित्प्रतिहतात्, क्रोधो = मन्युर्जिघांसा प्रतिघो द्वेषोऽभिजायते=सञ्जायते,समुत्पद्यते, इत्यर्थः ॥६२॥

"क्रोधाद् भवति संमोहः, संमोहात् स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद् बुद्धिनाशो, बुद्धिनाशात् प्रणश्यति"॥६३

अर्थः–क्रोधात्=अभिज्वलनात्मकाद् द्वेषात्,संमोहः=कार्याकार्ययोरविवेको भवति=बोभोति, संमोहात्=कार्याकार्ययोरविवेकात्, स्मृतिविभ्रमः'='इदं कार्यम्, इदं न कार्यम्" इत्येवंरूपस्य शास्त्राचार्योपदेशस्यानुसन्धानलक्षणायाः स्मृतेर्विभ्रमो विभ्रंशोऽनुत्पादो भवति । स्मृतिभ्रंशात्=स्मृतेरनुत्पादाद् बुद्धिनाशः=बुद्धेरन्तःकरणस्य नाशः कार्याकार्यविवेकयोग्यतानाशः,कृत्याकृत्यविवेकसामर्थ्यविलोपः,बुद्धिनाशात्=बुद्धेः कर्तव्याकर्तव्यगोचरविवेकसामर्थ्याभावात् , प्रणश्यति= प्रकर्षेण नाशं पुरुषत्वाभावमेति, पुरुषत्वाद् भ्रश्यति, जीवन्नेव मृतः सम्पद्यते पुरुषार्थायोग्यो भवति, तावदेव हि पुरुषो,यावदस्य कार्याकार्यविषयविवेकयोग्या बुद्धिरित्यर्थः ॥ ६३ ॥

ननु विषयचिन्तने स्युरेते दोषाः, विषयोपभोगे कोऽसौ प्रकारः, येन विषयाः उपभुज्येरन्,बुद्धिश्च न नश्येत्, प्रत्युत प्रसासद्येत ? तत्राह—

"रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा, प्रसादमधिगच्छति" ॥६४॥

अर्थः—रागद्वेषवियुक्तैस्तु=न रागद्वेषयुक्तैरिति तोरर्थः, रागश्च द्वेषश्च, रागद्वेषौ, ताभ्यां वियुक्तैर्वर्जितैः, आत्मवश्यैः=आत्मनः स्वस्य वशवर्तिभिः स्वाधीनैरिन्द्रियैः=श्रोत्रादिभिः करणैर्विषयान्=शब्दादीन् विषयान्, चरन्=उपलभमानः, उपभुञ्जानो, विधेयात्मा=विधेयो विधातुं प्रवर्तयितुं योग्यः आत्मा मनो बुद्धिरन्तःकरणं चेतो यस्य, स वश्यात्मा, जितमनाः पुरुषः,प्रसादं=मनसो बुद्धेरन्तः करणस्य चेतसः प्रसन्नतां, निर्मलतां, स्वास्थ्यम्, अधिगच्छति=प्राप्नोतीत्यर्थ ॥ ६४ ॥

ननु प्रसादे सति किं स्यात् ? तत्राह—

"प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते" ॥६५॥

अर्थः—प्रसादे=चेतसो नैर्मल्ये, अस्य=एतस्य पुंसः, सर्वदुःखानां=काममूलानां सर्वेषामध्यात्मिकादिदुःखानां,हानिः=नाशो निवृत्तिरुपजायते=संजायते। प्रसन्नचेतसः=निर्मलान्तःकरणस्य,हि=निश्चयेन, बुद्धिः=स्वकर्तव्यकर्मगोचरा मतिः, आशु=शीघ्रं, पर्यवतिष्ठते=परितः समन्तात् स्थिरीबोभूयते, व्यवसायात्मिका सम्पद्यते, इत्यर्थः ॥ ६५ ॥

अथैतमेव श्लोकद्वयेनोक्तमर्थं व्यतिरेकमुखेन द्रढयन्नाह त्रिभिः—

"नास्ति बुद्धिरयुक्तस्य, नचायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम्" ॥६६॥

अर्थः—अयुक्तस्य=यः समत्वबुद्धिलक्षणेन कर्मयोगेन न युक्तः, सोऽयुक्तः, तस्याकर्मयोगिनो बुद्धिः=व्यवसायात्मिका बुद्धिर्नास्ति=न विद्यते,न भवति, न च=नैव चायुक्तस्य=अकर्मयोगिनो भावना=आत्मगोचरा विजातीयप्रत्ययानन्तरितसजातीप्रत्ययप्रवाहरूपा बुद्धेरन्तःकरणस्य स्थितिर्निष्ठाऽस्ति, विद्यते,भवति । न च=नैव चाभावयतः= आत्मभावनारहितस्यानात्मनिष्ठस्य शान्तिः=दुःखनिवृत्तिरस्ति भवति,

अशान्तस्य=दुःखनिवृत्तिरहितस्य सुखम्=आनन्दः, शर्म, कुतः=केन प्रकारेण स्यात्, न केनापि प्रकारेण भवतीत्यर्थः ॥ ६६ ॥

"इन्द्रियाणां हि चरतां, यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां, वायुर्नावमिवाम्भसि" ॥६७॥

अर्थः—चरतां=स्वस्वविषयेषु गच्छतां प्रवर्तमानानाम्, इन्द्रियाणां=श्रोत्रादीनां करणानां, हि=निश्चयेन, यत् मनः=अन्तःकरणम्, अनुविधीयते=कर्मकर्तरि लकारः, अनुप्रवर्तते, तत्=तन्मनः, इन्द्रियानुप्रवृत्तं मनः, अस्य=एतस्य पुरुषस्य, प्रज्ञां=बुद्धिं, हरति=कर्षति, विषयविषयां करोति, आत्मप्रवणतां हृत्वा विषयप्रवणां विदधाति, वायुः=पवनः, इव=यथाऽम्भसि=जले नद्यादौ, नावं=नौकां तरणिं, हरति, गन्तव्यान्मार्गादुद्धृत्योन्मार्गे कर्षति प्रवर्तयतीत्यर्थः ॥६७॥

"तस्माद् यस्य महाबाहो! निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता" ॥६८॥

अर्थः—तस्मात्=यस्मादेवं, तस्मात्, महाबाहो=हे महाभुज ! हे महापराक्रम !, यस्य=यस्य पुरुषस्य, इन्द्रियाणि=करणानि, सर्वशः= सर्वाणि, श्रोत्रादीनि, मनःसहितानि निखिलानीन्द्रियाणि, इन्द्रियार्थेभ्यः=इन्द्रियविषयेभ्यः शब्दादिभ्यो निगृहीतानि=निरुद्धानि, प्रत्याहृतानि, स्वेच्छानुवर्तीनि, भवन्ति, तस्य प्रज्ञा=बुद्धिः प्रतिष्ठिता= प्रकर्षेण स्थिता निश्चला भवतीत्यर्थः ॥ ६८ ॥

अथ कर्मयोग्यकर्मयोगिनोर्विशेषमाह—

"या निशा सर्वभूतानां, यस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि, सा निशा पश्यतो मुनेः" ॥६९

अर्थ—सर्वभूतानां=सर्वेषां भूतानां प्राणिनां, कामकामानामकर्मयोगिनां, या निशा=निशेव निशा, रात्रिरिव रात्रिः-समबुद्धिलक्षणो योगः, निष्कामकर्मयोगः, सत्यपि फले तद्दर्शनाभावात् निशा, तस्याम्=अमुष्यां निष्कामकर्मयोगरूपायां कामिमात्र निशायां, जागर्ति= जागर्यामिति, प्रबुध्यते, कर्तव्यबुद्ध्या सर्वकर्माण्यनुतिष्ठन्नास्ते, संयमी=

संयमनं संयमः, संयमनम् आत्मज्ञानपूर्वकं वशीकरणमिन्द्रियाणा, तद्वान्, वशीकृताखिलेन्द्रियः, निगृहीतसर्वकरणः, जितेन्द्रियमनाः, कर्मयोगी । यस्यां=यस्मिन् रात्रिकल्पे तमोमयसंसारकारणे काम्ये कर्मणि, जाग्रति=जागरणं यन्ति, प्रबुध्यन्ते, सावधानाः सन्तः प्रवरीवृत्त्यन्ते, भूतानि=सर्वे प्राणिनः कामकामिनोऽकर्मयोगिनः, सा निशा=रात्रिरिव रात्रिः, पश्यतः=सदाऽऽत्मानं पश्यतः प्रेक्षमाणस्य मद्भक्तिपरस्य मुनेः=कर्मयोगिनः, इत्यर्थः ॥ ६९ ॥

अथ विशेषान्तरमाह—

"आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् । तद्वत् कामाः यं प्रविशन्ति सर्वे, स शान्तिमाप्नोति न कामकामी" ॥७०॥

अर्थः—यद्वत्=यथा, येन प्रकारेण, आपूर्यमाणम्=आ समन्तात् स्वात्मभूताभिरद्भिः परिपूर्णम्, अचलप्रतिष्ठम्=अचला निश्चला निर्विकारा वृद्धिह्रासवर्जिता प्रतिष्ठा स्वमहिमप्रतिष्ठा स्वस्वरूपावस्थितिर्यस्य, तं समुद्रं=सागरम्, आपः=नादेयाः वारः, गङ्गाद्याः आपगाः, प्रविशन्ति=प्रवेशं लयं वहन्ति, समुद्रे प्रविलयं यन्ति । तद्वत्=तथा, तेन प्रकारेण, सर्वे=विश्वे, कामाः=विषयकामाः, शब्दादिविषयाभिलाषाः, यं=यमात्मानन्देन पूर्णम्, आत्मन्येवात्मना तुष्टिमन्तं, शुभाशुभविषयप्राप्तावपि हर्षविषादलक्षणं विकारमभजमानमसेवमानं, निश्चलात्मानं, पर्याप्तकामं, प्रविशन्ति=अपियन्ति, यस्मिन् अप्ययं गच्छन्ति, सर्वथा प्रविलीयन्ते, सः=असौ शान्तिं=दुःखानिवृत्तिलक्षणां परमां शान्तिं, जीवन्नेव मुक्तिम्, आप्नोति=प्राप्नोति, न, कामकामी=काम्यन्ते इति कामाः शब्दादयो विषयाः, तेषां कामोऽभिलाषोऽस्ति यस्य, स कामानांकामुकोऽकर्मयोगी न शान्तिं प्राप्नोतीत्यर्थः ॥ ७० ॥

अथार्जुनस्य चतुर्थं प्रश्नमुत्तरयति—

"विहाय कामान् यः सर्वान्, पुमाँश्चरति निःस्पृहः । निर्ममो निरहङ्कारः, स शान्तिमधिगच्छति" ॥७१॥

अर्थः—यः पुमान्=यः पुरुषः, सर्वान्=सकलान्, कामान्=

दृष्टानुश्रविकविषयाभिलाषान्,विहाय=विशेषेण हित्वा,सर्वथा परित्यज्य निःस्पृहः=निरिच्छः,निष्कामः,चरति=आचरति, लोकवेदागर्हितानि सर्वाणि कर्माणि कर्तव्यबुद्ध्या यथाविधानमनुतिष्ठति, निर्वर्तयति, निर्ममः=ममेदं कर्मेति ममतारहितः,निरहङ्कारः=अहमस्य कर्मणःकर्तेति कर्तृत्वाभिमानवर्जितः, सः=असौ स्थितप्रज्ञः, शान्तिम्=इहामुत्र सर्वत्र दुःखनिवृत्तिरूपां परमां शान्तिम्,अधिगच्छति=प्राप्नोतीत्यर्थः॥७१॥

अथोपसंहरन्नाह—

"एषा ब्राह्मी स्थितिः पार्थ ! नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि, ब्रह्मनिर्वाणमृच्छति" ७२

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ॥२॥

अर्थः—पार्थ=हे पृथापुत्र ! एषा=स्थितप्रज्ञलक्षणवचनैर्या कर्मयोगिनः स्थितप्रज्ञस्य स्वकर्मसु स्थितिरुक्ता, सैषा, ब्राह्मी स्थितिरुच्यते, ब्रह्मण इयं ब्राह्मी=ब्रह्मसम्बन्धिनी, स्थितिः=स्थितिरिव स्थितिः, ब्रह्मणः सर्वज्ञसर्वशक्तेरीश्वरस्य नित्यं स्वमहिम्नि वर्तमानस्याचलप्रतिष्ठस्यात्मन्येवात्मना तुष्टस्य,पर्याप्तकामस्य जगतो जन्मस्थितिभङ्गेषु स्वकर्मसु यादृशी निर्ममा निरहङ्कारा निःस्पृहा स्थितिः,तादृशी स्थितप्रज्ञस्य कर्मयोगिनः स्वकर्मसु लोकवेदसम्मतेषु देशजात्यात्मोन्नतिसाधनेषु स्थितिः, एनाम्=एतां,ब्राह्मीं,ब्रह्मणः सम्बन्धिनीं स्थितिमिव स्थितिं, प्राप्य=प्रकर्षेणाप्त्वा लब्ध्वा,न विमुह्यति="ममैते, अहमेतेषाम, मया ते हन्यन्ते, अहं तैर्हतः स्याम्" इत्येवं लक्षणं मोहं वैचित्यमविवेकं नोपैति । अन्तकालेऽपि=अन्ते चरमे काले वयस्यपि, प्रथमे वयसि तु किमु वक्तव्यमित्यपेरर्थः,अस्याम्=एतस्यां ब्राह्म्यां स्थित्यां ब्रह्मस्थितितुल्यास्थितौ स्थित्वा=प्रतिष्ठाय कर्म कुर्वाणः प्रारब्धान्ते ब्रह्मनिर्वाणं=ब्रह्मात्मकं ब्रह्मप्राप्तिरूपं निर्वाणं बन्धान्निर्गमनं मोक्षम्, ऋच्छति=प्राप्नोतीत्यर्थः ॥ ७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्ये द्वितीयोऽध्यायः ॥२॥

---

# "अथ तृतीयोऽध्यायः" ।

द्वितीयाध्यायेऽर्जुनस्य शोकमपनिनीषुर्भगवान्, पूर्वम् "अशोच्यानन्वशोचस्त्वम्" (गी०२।७) इत्यारभ्य विस्तरेणार्जुनं ज्ञानयोगम् उपदिदेश, पश्चात् "एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु" (गी० २।३९) इत्यादिना बहुप्रशंसापूर्वकं कर्मयोगं तमनुशशास। तदन्तरे च "रसोऽप्यस्य परं दृष्ट्वा निवर्तते" (गी० २ ५९) इति विषयरागनिवृत्तौ ज्ञानयोग एव परमोपायः, इति प्रणिजगाद। तत्र ज्ञानयोगकर्मयोगयोर्मिश्रीभावदर्शनादर्जुनः कतरो ज्यायान्, उपादेयो मेकतरः, इति विमर्शयन्नपि नैकतरं कञ्चिन्निश्चिच्ये, स्याद् ज्ञानयोगमेव भगवान् ज्यायांसं मन्येत, इति च सम्भावयन्, श्रीभगवन्तमभिदधे-

"अर्जुनः उवाच" ।

**"ज्यायसी चेत् कर्मणस्ते, मता बुद्धिर्जनार्दन ! ।**
**तत् किं कर्मणि घोरे मां, नियोजयसि केशव !" ॥१॥**

अर्थः-जनार्दन=हे दुष्टजनमर्दन ! चेत्=यदि ते=तव, कर्मणः= कर्मयोगात्, बुद्धिः=ज्ञानयोगनाम्नी ज्ञप्तिः, ज्यायसी=श्रेयसी, प्रशस्ततरा, अधिकतरा, मता=अभिमता, अभिप्रेता । तत्=तदा, तर्हि, किं=किमर्थं, केशव=हे प्रशस्तकेश ! माम्=अर्जुनं मां, घोरे=भयङ्करे, कर्मणि=युद्धे कर्मणि, नियोजयसि=प्रेरयासि, युद्ध्यस्व-उत्तिष्ठेत्येवं प्रवर्तयसीत्यर्थः॥१॥ ननु न वयं कर्मयोगाद् ज्ञानयोगं ज्यायांसं मन्यामहे, किं मुधा सम्भावयसे, किं वृथा मोहमापद्यसे, तत्राह--

**"व्यामिश्रेणेव वाक्येन, बुद्धिं मोहयसीव मे ।**
**तदेकं वद निश्चित्य, येन श्रेयोऽहमाप्नुयाम्" ॥२॥**

अर्थः—व्यामिश्रेण-इव=सङ्कीर्णेनेव सम्पृक्तेनेव मिलितेनेव, वाक्येन=कर्मयोगज्ञानयोगयोः प्रतिपादकेन पदनिचयेन, वाचकशब्दसमूहेन, मे=मम, बुद्धिं=मनोऽन्तःकरणं, मोहासि+इव=मोहो व्यामोहो भ्रमः, तं नयसि-प्रापयसीव । भ्रान्त्या योजयसीव। यद्यपि भगवान्

सदा विविक्तवचनो, न कदाचित् सङ्कीर्णं-व्यामिश्रितं वाक्यं वक्ति, नापि मद्बुद्धिमोहापनयनाय प्रवृत्तो मे बुद्धिं मोहयति, तथाप्यनवबोधात् मे व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति, ततो ब्रवीमि मोहसीव मे बुद्धिमिति । तद्=अदः, एकं=ज्ञानं वा कर्म वा किञ्चिदेकं,निश्चित्य=प्रविविच्य,वद=ब्रूयाः, येन=ज्ञानेन, ज्ञानयोगेन, कर्मणा कर्मयोगेन वा येन, अहम्=अर्जुनोऽहं, श्रेयः=शुभं मंगलं,कल्याणम्, इहामुत्र सुखम्, आप्नुयां=प्राप्नुयामित्यर्थः ॥२॥

अथार्जुनाभिधानमुपश्रुत्य ज्ञानयोगात् कर्मयोगं ज्यायांसमनुष्ठानार्हं च वक्तुकामो भगवान् प्रथमं तावत् पूर्वं वृत्तं स्मारयति—

"श्री भगवान् उवाच" ।

**"लोकेऽस्मिन् द्विविधा निष्ठा, पुरा प्रोक्ता मयाऽनघ ! ।**
**ज्ञानयोगेन सांख्यानां, कर्मयोगेन योगिनाम्" ॥३॥**

अर्थः–अनघ=हे निष्पाप ! अस्मिन्=इह, लोके=मनुष्यलोके, चिरात् प्रवृत्ता द्विविधा=द्विप्रकारा, निष्ठा=बुद्धेरन्तःकरणस्य निश्चिता धारणा—'अयमेव मोक्षमार्गः, इति निश्चयात्मिका स्थितिः, मया=कृष्णेन मया,पुरा=पूर्वं, द्वितीयाध्याये,प्रोक्ता=प्रविभज्योक्ता, कथिता । सांख्यानां=ज्ञानिनां कर्मसंन्यासिनां, ज्ञानयोगेन=ज्ञानमात्मज्ञानं, तदेव योगस्तेन, योगिनां=कर्मयोगिनां, कर्मयोगेन=समत्वबुद्धिलक्षणेन निष्कामकर्मयोगेन चेत्यर्थः ।

इह खलु धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु मोक्षस्तावत्परमपुरुषार्थः । स येनोपायेन, येन साधनेन लभ्यते, येन मार्गेण प्राप्यते, स इह भगवद्गीतायां निष्ठाशब्देनोच्यते । स च द्विविधः कर्मयोगो ज्ञानयोगश्च । तत्रात्मानं याथातथ्यतो ज्ञात्वा,यथाभूतस्यत्मनो ज्ञानं प्राप्य, सर्वाणि कर्माणि संन्यस्य परित्यज्य, भिक्षाचर्येण यावदायुर्जीवनं, जीवनयात्रानिर्वहणं, ज्ञानयोगमार्गः । सचौपनिषदः, सांख्याचार्येण महामुनिना कपिलेन प्रवर्तितः,भगवता बुद्धेन संवर्द्धितः,श्रीशङ्कराचार्यैरभ्युपगतः। यथाभूतमात्मानं विदित्वा,याथातथ्येनात्मनो ज्ञानमवाप्य, सर्वभूतान्तरात्मनि जगदीश्वरे भक्त्या परया निमज्जतो,लोकशास्त्रसम्मतानि निखिलानि कर्माणि कर्तव्यबुद्ध्या यथाविधानं सततमनुतिष्ठतो, गृहेऽप्यगृहवत् कुटुम्बेऽप्यकुटुम्बवन्निवसतः सुखेन जीवनयात्रायाः

समापनं कर्मयोगमार्गः । सोऽयं भगवद्गीतार्थः । स च वैदिकः, प्राचीनै-र्मन्त्रदर्शिभिर्ऋषिभिः प्रवर्तितः, जनकादिभीराजर्षिभिः प्रवर्द्धितः, श्रीगुरु-नानकादिभिराचार्यैरभ्युपगतः। अत एव चौपनिषदात् ज्ञानयोगादसौ बहु-ज्यायान् । ज्ञानयोगी हि कर्मसंन्यासित्वात् मङ्गलरूपोऽप्यमङ्गलरूप इव, विद्वानप्यविद्वानिव, लज्जावानपि निर्लज्ज इव, अदीनोऽपि दीन इव, बने वा नगरे वा, ग्रामे वा घोषे वा, तरौ तरौ, गृहे गृहे "देहि भिक्षां, देहि भिक्षाम् इति दैन्यया वाचा परिभ्रमन्, आतुर इव बन्धुभिः परित्यक्तो, मृत्युकालं प्रतीक्षमाणः, कदाचित् कथञ्चित् कचिद् दैवात् प्राप्ते मृत्युकाले यथा तथा देहादस्माद् विमुच्यामृतत्वं गच्छति, ब्रह्मनिर्वाणं प्राप्नोति । कर्मयोगी च ज्ञानयोगिवदात्मानं तत्त्वतो ज्ञात्वाऽपि न कर्माणि संन्य-स्यति, नापि सर्वशरीरेषु प्रत्यगात्मत्वेन वर्तमानस्य क्षेत्रज्ञस्य जगदी-श्वरस्य ज्ञानीभूत्वाऽपि भक्तेः किञ्चिद् विरज्यति । किन्तु ज्ञानयोगिवदात्म-ज्ञाने सत्यप्यसौ परमप्रेम्णा सर्वभूतान्तरात्मनो जगदीश्वरस्य भक्तौ, निमग्नः, विनैवैहिकामुष्मिकफलाकांक्षां, विनैव चेमानि कर्माणि ममेत्या-सक्तिं, मनुष्यस्य सतो मे यथाशक्ति कर्तव्यं सर्वदा सर्वं कर्मैति केवलकर्तव्य-बुद्ध्या, सर्वं कर्म यथा विधानमाचरति प्राप्तांश्च सर्वान् भोग्यान् पदार्थान् यथायथमुपभुङ्क्ते, शुभानुपभुञ्जानो न मोमुह्यते, अशुभानुपभुञ्जानो न रोरुद्यते । किं बहुना, स विद्वान् सन्नप्यविद्वान् इव लोकशास्त्रसम्मतानि सर्वाणि कर्माणि यथाविधानमातनोति, सुखेन लोकयात्रानिर्वाहार्थं विविधं धनं धान्यं च सञ्चिनोति, नानाविधं भोग्यं वस्तु च संगृह्णाति, मित्राण्यर्जयति, शत्रून् व्यापादयति, सहधर्मिणीं रमयति, पुत्रान् जनयति, शिष्टान् नमस्यति, पितॄन् वरिवस्यति । तान्येतानि सर्वाणि कर्माणि यथाविधि कुर्वतोऽप्यस्य नास्त्यात्मनि मात्रयाऽपि तेषां कर्मणां सङ्गः । अत एवासौ सर्वकर्मा भवन्नपि निष्कर्मैव नित्यं बोभूयते । सर्वमायुः सुखपूर्वकं परिसमाप्य प्रारब्धान्ते कायं स्वीयं, कञ्चुकमिव पन्नगः, सन्त्यजन् अमृतं ब्रह्माश्नुते, अत्यन्तं मोमुच्यते । सोऽयं तत्रभवतः कर्मयोगिणो, ज्ञानयोगिनः सकाशाद्, विशेषः, अतएवासौ कर्मयोगी यथा ज्यायान्, तथा ज्ञानयोगिनः सकाशाद् श्रेयान्, इति भगवतोऽन्तराशयः ॥३॥

ननु पूर्वस्मिन्नध्याये भगवान् यद् निष्ठाद्वयं प्रावोचत्, ज्ञानयोगेन सांख्यानां ज्ञानिनां ज्ञाननिष्ठां, कर्मयोगेण कर्मयोगिणां च कर्मनिष्ठाम्, तत्र कर्मनिष्ठामाश्रित्य कृतानां कर्मणां नैष्कर्म्यं फलाभावबुद्ध्या कर्म-

योगिभिः सम्पाद्यते, ज्ञाननिष्ठावतां सांख्यानां ज्ञानिनां च नैष्कर्म्यं कर्मणामनारम्भात् संन्यसनाद्वा स्वतःसिद्धं, न जातुचित् सम्पाद्यमिति कर्मनिष्ठातो ज्यायसी ज्ञाननिष्ठा स्फुटं विज्ञायते। तामेव निष्ठामाश्रित्याहं युद्धं कर्म नारभे, अनारभमाणश्चेह निष्कर्मा भवन्नमुत्र ब्रह्मप्राप्तिलक्षणां मुक्तिं प्राप्स्यामि, यथा कर्मसंन्यासिनः सांख्याः, किमर्थं मां मुहुर्मुहुर्घोरे युद्धे कर्मणि नियोजयसि, तत्राह—

"न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव, सिद्धिं समधिगच्छति" ॥४॥

अर्थः-कर्मणां=लोकशास्त्रसिद्धानां स्ववर्णोचितकर्मणाम्, अनारम्भात=अननुष्ठानात्, अकरणात् पुरुषः=कश्चिदपि मनुष्यः, नैष्कर्म्यं= निर्गतानि कर्माणि यस्मात्, तस्य निष्कर्मणो भावं, कर्मशून्यत्वं, कर्माभावं, नाश्नुते=नाप्नोति, न लभते, न निष्कर्मा जातुचित् सम्पद्यते। न च=नापि, संन्यसनादेव=संन्यसनं संन्यासस्त्यागः, तन्मात्रात्, लोकशास्त्रसिद्धानां स्ववर्णोचितकर्मणां संन्यासमात्रात् त्यागमात्रात्, कश्चित् पुरुषः, सिद्धिं = सिद्धिः प्राप्तिः, तां ब्रह्मप्राप्तिं, ब्रह्मप्राप्तिरूपां मुक्तिं, समधिगच्छति= सम्यगवाप्नोतीत्यर्थः ।

सांख्यः स्याद् अन्यो वा भवेत्, न कश्चिदपि कर्मणामनारम्भाद्, आरम्भाकरणात्, निष्कर्मा भवितुमर्हति, तेषां स्वभाविकत्वेनारम्भस्य वर्जयितुमशक्यत्वात्। नापि कश्चित् कर्मणां संन्यासमात्रेण, त्यागमात्रेण, अननुष्ठानमात्रेण, ब्रह्मस्वभावं मोक्षं समधिगन्तुं, समवाप्तुं, शक्यति, पारयति, सर्वकर्मसंन्यासस्याशक्यत्वेन, शक्यस्य चाभावत्वेन ब्रह्मरूपमोक्षप्राप्तिहेतुत्वानुपपत्तेः। चेदर्जुनस्त्वं स्वकं वर्णधर्मं युद्धं कर्म न करिष्यसि, तदा लोकेऽस्मिन्नभ्युदयं, परलोके च मोक्षं न प्राप्स्यसि। मोक्षाभ्युदयाभावे च व्यर्थमिदं मानुषं जन्म। तत्ते व्यर्थं मा भूद्, अतस्त्वां युद्धे कर्मणि पुनःपुनर्नियोजयामि । युद्धं च क्षत्रियस्य सतः स्वकं कर्मेति कृतं तद्धोराघोरचर्चया ॥४॥

ननु यः पुरुषः कर्माणि नारभते, स निष्कर्मा प्रत्यक्षः, कथमुच्यते "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते" इति?, तत्राह—

**"नहि कश्चित् क्षणमपि, जातु तिष्ठत्यकर्मकृत् ।**
**कार्यते ह्यवशः कर्म, सर्वः प्रकृतिजैर्गुणैः" ॥५॥**

अर्थः—कश्चित् = कोऽपि पुरुषः, क्षणमपि = क्षणमात्रमपि, जातु=कदाचित् ,अकर्मकृत्=न कर्मकृत्,कर्माण्यकुर्वाणो, हि=निश्चयेन, न तिष्ठति = न वर्वर्ति,हि = यस्मात्, प्रकृतिजैः = प्रकृतितो जायमानैरभिव्यक्तैर्गुणै = सत्त्वरजस्तमोभिर्गुणैः, रागद्वेषादिभीरूपैः परिणममानैः, स्वभावजैरवशः=न स्ववशः, परवशः सन्,सर्वः=कृत्स्नो जनः,निखिलो मनुष्यः, कर्म = स्वस्वप्रकृत्यनुरूपं तत्तत् लौकिकं वैदिकं कर्म, कार्यते= निर्वर्त्यते, कर्मणि बलात प्रवर्त्यते, नियुज्यते, इत्यर्थः ।

चेन्मनुष्यः कर्मसु स्वतन्त्रो विद्येत,तदाऽवश्यं कर्मणाम् अनारम्भादकरणान्निष्कर्मा सम्पद्येत, नैष्कर्म्यमश्नुवीत, तानि वा सर्वाणि यथाकामं संन्यस्य तूष्णीमासीत । नच स्वतन्त्रो विद्यते । किन्तर्हि ? प्रकृतिगुणतन्त्रः । नाहि प्रकृतिगुणतन्त्रस्यास्वतन्त्रस्य परतन्त्रस्य सतः पुंसः, सांख्यस्य वाऽन्यस्य वा कस्यचिदस्ति कर्मणां संन्यसने वाऽनारम्भणे वा किञ्चिदधिकारः । तस्माद् वार्तामात्रमेतद् यत्कर्मणां संन्यसनं, यच्च तेषामनारम्भणमिति विज्ञातव्यम् ॥ ५ ॥

ननु कर्मेन्द्रियाणि कर्मकारणानि, तानि यो निरुणद्धि,तस्यास्ति कर्मानारम्भः, सोऽस्त्यकर्मकृत् । तत्कथमुच्यते "नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृदिति ?, तत्राह—

**"कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।**
**इन्द्रियार्थान् विमूढात्मा, मिथ्याचारः स उच्यते" ॥६॥**

अर्थः—यः=यः कश्चिद्, विमूढात्मा=विशेषेण मूढः कार्याकार्यविवेकशून्यः आत्मा मनो यस्य, सोऽविवेकाक्रान्तचित्तो, मलिनान्तःकरणोऽविशुद्धमनाः, कर्मेन्द्रियाणि = कर्मसाधनानि करचरणादीनि करणानि, संयम्य = संरुध्य, संहृत्य, मनसा=चेतसाऽन्तःकरणेन, इन्द्रियार्थान्=इन्द्रियाणां श्रोत्रादिकरणानामर्थान् विषयान् शब्दादीन्, स्मरन्=चिन्तयन्, आस्ते=तेष्ठीयते, ध्यानापदेशेन हठादुपवेविश्यते, स =असौ,मिथ्याचारः=मृषाचारः,पापाचारः,कपटाचरणो दाम्भिकः, उच्यते=कथ्यते सद्भिरित्यर्थः ।

यः खलु पुरुषः कर्मेन्द्रियैः कर्म न कुरुते, मनसा च कुरुते, सोऽप्यस्ति कर्मकृत्, नास्ति तस्य कर्मानारम्भः । मनसो ज्ञानेन्द्रियत्ववत् कर्मेन्द्रियत्वस्याप्यभ्युपगमात् ॥ ६ ॥

ननु कर्मेन्द्रियाणि संयम्य मनसा कर्म कुर्वाणो यदि मिथ्याचारः, तदा ततो विशिष्टः सत्याचारः कोऽस्ति ? तत्राह—

**"यस्त्विन्द्रियाणि मनसा, नियम्यारभतेऽर्जुन ! ।**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते" ॥७॥**

अर्थः—अर्जुन=हे अर्जुन ! यस्तु=यश्च, इन्द्रियाणि=ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च सर्वाणि करणानि, मनसा चेतसाऽन्तःकरणेन सह, नियम्य=नियमे नियमने नियन्त्रणायां विधाय, स्वायत्तीकृत्य, वशीकृत्य, कर्मेन्द्रियैः = नियतैः स्वायत्तैर्वागादिभिः कर्मेन्द्रियैः, कर्मयोगं = कर्मैव योगस्तं, निष्कामकर्मयोगं, निष्कामं कर्म, असक्तः = न सक्तोऽनासक्तः, अहन्ताममताबुद्धिपूर्वकः सम्बन्धः सक्तिः, स एव सङ्गः, तद्रहितो भवन्, आरभते=प्रारभते, कुरुते, निर्वर्तयते, सः=असौ, विशिष्यते=अतिरिच्यते, सर्वस्मात् कर्मारभमाणादधिकायते, विश्वस्मादतिशय्यते, इत्यर्थः ॥७॥

ननु श्रेयोऽर्थिना मया किं कर्तव्यम् ? तत्राह—

**"नियतं कुरु कर्म त्वं, कर्म ज्यायो ह्यकर्मणः ।**
**शरीरयात्राऽपि च ते, न प्रसिध्येदकर्मणः" ॥८॥**

अर्थः—त्वं=पार्थस्त्वं, नियतं कर्म=यो यस्मिन् कर्मणि प्रकृत्या शास्त्रेण च नियम्यते, नियुज्यते, प्रवर्त्यते, तत् तस्य नियतं नित्यं कर्म, अवश्यकर्तव्यं कर्म, यथा प्रवचनादिकं ब्राह्मणप्रकृतेः, युद्धादिकं क्षत्रियप्रकृतेः, वाणिज्यादिकं वैश्यप्रकृतेः, शुश्रूषणं शिल्पं च नानाविधं शूद्रप्रकृतेः, सर्वेषां चाविशेषेण ब्रह्मचर्याश्रमप्रवेशः, यथाकालं गार्हस्थ्याश्रमस्वीकारश्च, तदेतत् नियतं नित्यं स्ववर्णोचितं कर्म, कुरु=विधत्स्व, यथाविधानमनुतिष्ठ, यथाविधि निर्वर्तय, हि=यस्माद्, अकर्मणः=न कर्मकरणात्, कर्मानारम्भणात्, कर्म = कर्मकरणं, कर्मारम्भणं, ज्यायः= प्रशस्यतरम्, अतिप्रशस्तम् । च=तथा, अकर्मणः=अविद्यमानकर्मणः, कर्माकुर्वतः, ते = तव, शरीयात्राऽपि=देहव्रज्याऽपि, देहस्थितिरपि, तव जीवितमपि, न प्रसिध्येत्=न प्रकर्षेण स्वधर्मवृत्त्या सिध्येत् निष्पद्येतेत्यर्थः।

ब्राह्मणादिवर्णानां यथाप्रकृति नियतं कर्माग्रेऽष्टादशे वक्ष्यते। ब्रह्मचर्याश्रमप्रवेशो गार्हस्थ्याश्रमस्वीकारश्च "ब्रह्मचारी चरति" (ऋ० १०। १०९। ५) "सूर्यां पत्ये शंसन्तीं मनसा सविताऽददात्" (ऋ० १०। ८५। ९) "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्" (अथर्व० ११। ७। १८) "स सद्य एति पूर्वस्मादुत्तरं समुद्रम्" (अथर्व० ११। ७। ६) इत्यादिवेदसिद्धो न विवरणं किञ्चिदपेक्षते। तत्र वैदिकसाहित्यमूर्धन्यथर्ववेदे पूर्वः समुद्रो ब्रह्मचर्याश्रमः, उत्तरः समुद्रो गार्हस्थ्याश्रमः ॥८॥

ननु कर्म नियतं स्यादनियतं वा भवेत्, सर्वं कर्म बन्धकं "कर्मणा बध्यते जन्तुः" (महाभारत शां० २४०। ७) इति स्मृतेः, तत्कृतं बन्धनं मा भूदिति कर्माकरणमेव ज्यायो न कर्म, तत्राह—

**"यज्ञार्थात् कर्मणोऽन्यत्र, लोकोऽयं कर्मबन्धनः।**
**तदर्थं कर्म कौन्तेय! मुक्तसङ्गः समाचर" ॥९॥**

अर्थः—अयम्=एष, लोकः=सर्वो लोकः, सर्वो मनुष्यः, यज्ञार्थात्=सृष्टियज्ञो यज्ञः, तद्ग्रहणेनात्र सृष्टियज्ञस्य सातत्येन प्रवृत्तिहेतुः पञ्चमहायज्ञाख्यः कर्मकलापो गृह्यते, सोऽयं यज्ञोऽर्थः प्रयोजनं यस्य कर्मणः, तत्कर्म यज्ञार्थं, तस्मात्-सृष्टियज्ञस्य नैरन्तर्येणोत्तरोत्तरप्रवृत्तिहेतुर्यः पञ्चमहायज्ञसंज्ञकः कर्मकलापस्तन्निर्वृत्तिप्रयोजनकात्, कर्मणः=प्रकृत्या शास्त्रेण च नियमितात् स्ववर्णोचितात् नियतकर्मणः, अन्यत्र=विना, ततो भिन्ने निजजठरभरणमात्रप्रयोजनके काम्ये कर्मणि वर्तमानः, कर्मबन्धनः=कर्म बन्धनं यस्य, स कर्मबन्धनः, कर्मकर्तृकबन्धनाश्रयः, यस्मादेवं, तस्मात् कौन्तेय=हे कुन्तीपुत्र! त्वं, तदर्थं=यज्ञार्थं, सृष्टिरूपयज्ञस्य नैरन्तर्येण यथावत् प्रवृत्तिकारणं यत् पञ्चमहायज्ञसंज्ञकं कर्मकलापं, तदर्थं, तन्निर्वृत्तिप्रयोजनकं, कर्म=नियतं नित्यं स्ववर्णोचितं कर्म, मुक्तसङ्गः=ममेदं कर्म, अस्य फलमहं भोक्ष्ये, इत्येवंलक्षणः सम्बन्धः सङ्गः, तस्मान्मुक्तः, त्यक्तो वा येन, स तथा-कर्मफलासङ्गवर्जितः, समाचर=सम्यगनुतिष्ठ, यथाविधानं निर्वर्तयेत्यर्थः।

वैदिकाः खलु विश्वसृष्टिमेव मुख्यं यज्ञमातिष्ठन्ते, यज्ञान्तराणि

च तदनुकरणमात्राणि, यथाऽग्निहोत्रं मुख्याग्निहोत्रस्य सूर्यस्यानुकरण-मात्रम् । यत्रैतच्छ्रुतं भवति "सूर्यो वा अग्निहोत्रम्" (शत० २।२४९) इत्यादि । तस्य सृष्टियज्ञस्य यजमानः सर्वाधिपतिः परमेश्वरः, सूर्यवाता-ग्न्यादयः प्रधानदेवाः ऋत्विजः, वसन्तादयः ऋतवो होतव्याः पदार्थाः । तदेतत् सर्वमृग्वेदे पुरुषसूक्ते (ऋ० १० । ९०) स्पष्टम् । अस्य सृष्टि-यज्ञस्य सातत्येन यथावत् प्रवर्तयितार उत्तरोत्तरप्रवृत्तिहेतवस्तदनु-करणभूताः पञ्च महायज्ञाः । तेषां यजमानो मनुष्यमात्रम् । ते मनुष्य-मात्रस्य नियमेन निर्वर्तयितव्याः पञ्चमहायज्ञाः अहर्हः प्रारभ्यन्ते, समा-प्यन्ते च । यत्रैतच्छ्रुतं भवति "पञ्च वै एते महायज्ञाः सतति प्रतायन्ते, सतति सन्तिष्ठन्ते-देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञः" (तै० आ० २'१०) इति । सतति=सततं, प्रत्यहं, प्रतायन्ते=प्रारभ्यन्ते, अनुष्ठीयन्ते, सन्तिष्ठन्ते=समाप्यन्ते । तत्र प्रातःसायं सन्ध्योपासनं देवयज्ञः, मातापित्रोर्नमस्कारादिना प्रजातन्त्वविच्छेदेन च प्रसादनं पितृयज्ञः, स्वीयेभ्यो गृहवर्तिभ्यो गोऽश्वमहिषीप्रभृतिभ्यो भूतेभ्यो यथाकालं घासोदकप्रदानं तत्स्थानस्य गोष्ठादेः संशोधनं च भूतयज्ञः, वेदविदां पण्डितानां संन्यासिनां च कर्मयोगिनामन्नवस्त्रादिना सत्कारो मनुष्ययज्ञः, स्वाध्यायो ब्रह्मयज्ञः । तेषां पञ्चानां सृष्टियज्ञस्योत्तरोत्तर-प्रवृत्तिहेतूना निर्वृत्त्यर्थं, तत्सिद्धिप्रयोजनकं, यत्कर्म, तद् यज्ञार्थं कर्म, तदेव नियतं कर्म ॥ ९ ॥

ननु यज्ञार्थं क्रियमाणं कर्म कस्माद् बन्धकं न भवति?, यज्ञस्येश्वराज्ञा-रूपत्वादित्याह—

"सहयज्ञाः प्रजाः सृष्ट्वा, पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वम्, एष वोऽस्त्विष्टकामधुक्" ॥१०

अर्थः—पुरा=पूर्वं सर्गादौ, प्रजापतिः=सर्वप्रजाधिपतिः पर-मेश्वरः, सहयज्ञाः=यज्ञेन—सृष्टियज्ञस्योत्तरोत्तरप्रवृत्तिहेतुना पञ्चविधेन महायज्ञेन सह वर्तन्ते इति सहयज्ञाः "वोपसर्जनस्य" (अष्टा०६ ३।८२) इति सहस्य सादेशाभावः, सृष्टियज्ञप्रवृत्तिहेतुना पञ्चविधेन महायज्ञेन सार्धं, प्रजाः=मानुषीः प्रजाः, सर्वाः विशाः, सृष्ट्वा=जनयित्वा, उवाच=

उवाद । हे प्रजाः ! हे मनुष्याः ! यूयम् अनेन = महायज्ञपञ्चकेन, प्रसविष्यध्वं = प्रसूयध्वं, प्रसवो वृद्धिः, ऐश्वर्येण सन्तत्या च प्रवर्धध्वम्, एष = पञ्चविधो महायज्ञो, वो = युष्माकम्, इष्टकामधुग् = इष्टाः अभीष्टाः अभिलषिताः वाञ्छिताः, कामाः पदार्थाः अभ्युदयनिःश्रेयसलक्षणाः, काम्यन्ते इति व्युत्पत्तेः, तेषां धुग् दोग्धा प्रपूरयिता, वाञ्छितयोरभ्युदयनिःश्रेयसयोः प्रदाताऽस्तु = भवत्वित्यर्थः ॥१०॥

किञ्च—

"देवान् भावयतानेन, ते देवाः भावयन्तु वः ।
परस्परं भावयन्तः, श्रेयः परमवाप्स्यथ" ॥११॥

अर्थः—अनेन = पञ्चविधेन महायज्ञेन, देवान् = ईश्वरमातापित्रादीन् देवान्, भावयत = वर्धयत, प्रसादयत, ते = अमी, देवाः = ईश्वरमातापित्रादयो देवाः, वः = युष्मान् भावयन्तु = वर्धयन्तु, प्रसादयन्तु, अभिध्यानमात्रेणानुगृह्णन्तु । एवं परस्परम् = अन्योऽन्यं, भावयन्तः = वर्धयन्तः, प्रसादयन्तः, परम् = उत्कृष्टं, श्रेयः = कल्याणं, सुखं, स्वाभीष्टम्, अवाप्स्यथ = प्राप्स्यथेत्यर्थः ।

यथा "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" ( श्वे० उ० ६ । ११ ) इत्यादिश्रुतेरीश्वरो देवः, तथा "मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव" ( तै०१।११।२) "पितरो देवाः" (अथर्व० ६ । १२३।३) "विद्वांसो देवाः"(शत०३।७। ३ । १० ) "श्रीर्वै पशवः" ( ताण्ड्यब्रा० १३ । २ । २ ) "प्राणाः पशवः" ( शत० ७५ । २ । ६ ) "पशवो वै महः" (शत०११।८।१। ३) "एष वाव सुवीरो यस्य पशवः" (ताण्ड०१३ । १ ।४) इत्यादिश्रुतिभ्यो मातापित्रादयोऽपि देवाः अवबोद्धव्याः ॥११॥

नन्वन्यत् किमुवाच प्रजापतिः ? तत्राह—

"इष्टान् भोगान् वो देवाः, दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो, यो भुंक्ते स्तेन एव सः" ॥१२॥

अर्थः—यज्ञभाविताः=यज्ञैः पञ्चभिर्महायज्ञैर्भाविताः प्रसादिताः, देवाः=ईश्वरमातापित्रादयो देवाः, वः=युष्मभ्यम, इष्टान्=अभीष्टान्, भोगान्=धनधान्यादिपदार्थान्, हि=निश्चयेन, दास्यन्ते=दास्यन्ति, वितरिष्यन्ति । तैः = अमीभिरीश्वरमातापित्रादिभिर्देवैर्दत्तान् = वितारितान् इष्टान् पदार्थान्, पदार्थभागान्, एभ्यः=एतेभ्यो देवेभ्योऽप्रदाय= न प्रकर्षेण सत्कारेण दत्त्वा, श्रद्धाभक्तिपुरस्सरं नार्पयित्वा, यो भुङ्क्ते= यः पुरुषः स्वयमेव ग्रसते, न वृद्धां मातरं पृच्छति, न वा वृद्धं पितरं, नातिथिमनुयुङ्क्ते नाप्यातुरं, न स्वाध्यायमधीते, नेश्वरमुपास्ते, नात्माश्रितान् प्राणिनो लोकते, स्तेनवदागत्य प्रातःसायमवलीढे, सः=असौ पुरुषः, स्तेन एव=चौर एव, तद्वदाचरणात्स्तेनश्चौर एवेत्यर्थः ॥१२॥

किंच—

"यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापाः, ये पचन्त्यात्मकारणात्" ॥१३॥

अर्थः—यज्ञशिष्टाशिनः=पञ्चविधो महायज्ञो यज्ञः, तद्देवताभ्यो मातापित्रादिभ्योऽन्नं प्रदाय, तान् विधिवद्भोजयित्वा, यदन्नं शिष्यते, तदन्नं यज्ञशिष्टं, तदशितुं शीलं येषां, ते यज्ञावशिष्टान्नभोजिनः, सन्तः= भवन्तो मनुष्याः, सर्वकिल्बिषैः=सर्वैः पापैः, मुच्यन्ते=त्यज्यन्ते, मुक्ताः त्यक्ताः बोभूयन्ते । तुरवधारणे भिन्नक्रमः, अघमित्यनेन सम्बध्यते । ते=अमी, पापाः=पापात्मानो दुष्कृतिनो मनुष्याः, अघमेव=पापमेव, केवलं दुरितं, भुञ्जते=खादन्ति, ये=ये मनुष्याः, आत्मकारणात्=आत्मनः स्वस्य हेतोः, स्वोदरपूर्तिमात्रार्थं, पचन्ति=पाकं निर्वर्तयन्तीत्यर्थः । अत्रैष मन्त्रो भवति "मोघमन्नं विन्दते अप्रचेताः, सत्यं ब्रवीमि वधः इव स तस्य । नार्यमणं पुष्यति नो सखायं केवलाघो भवति, केवलादी"(ऋ०१०।११७।६) इति । तदेतदन्यत् प्रजापतिरुवाच ॥१३॥

ननु कस्माद् यज्ञार्थं कर्म कर्तव्यम ? । यज्ञार्थं यत् कर्म, तदीश्वरार्थं कर्म, ईश्वरस्य यज्ञे प्रतिष्ठितत्वादित्याह द्वाभ्याम्--

"अन्नाद् भवन्ति भूतानि, पर्जन्यादन्नसम्भवः ।
यज्ञाद् भवति पर्जन्यो, यज्ञः कर्मसमुद्भवः" ॥१४॥

अर्थः-अन्नात्=प्रत्यहं सायंप्रातर्भुक्ताद् व्रीहियवगोधूमादिलक्षणाद् रेतोलोहितरूपेण परिणतादन्नाद्, भूतानि = प्राणिनो मनुष्याः,सजीवाः मनुष्यदेहाः, भवन्ति=जायन्ते, उत्पद्यन्ते, पर्जन्याद्=वृष्टेरन्नसम्भवः= सम्भवो जन्म,अन्नस्य सम्भवो जन्मोत्पत्तिः, अन्नमुत्पद्यते। यज्ञात्=पञ्च-विधात् महायज्ञाद् यथाविध्यनुष्ठितात् जातेनेश्वरमातापित्रादिदेवता-प्रसादेन, पर्जन्यः=वृष्टिः, भवति=जायते, यज्ञः=पञ्चविधो महायज्ञः, कर्मसमुद्भवः=नियतात् स्ववर्णोचितात् कर्मणः समुद्भवो जन्मोत्पत्तिः सिद्धिर्यस्य यज्ञस्य, स तथेत्यर्थः ॥ १४ ॥

"कर्म ब्रह्मोद्भवं विद्धि, ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म, नित्यं यज्ञे प्रतिष्ठितम्" ॥१५॥

अर्थः – कर्म=नियतं नित्यं स्ववर्णोचितं कर्म,ब्रह्मोद्भवं=ब्रह्मणो मन्त्राद् ऋग्वेदात् "ब्रह्म वै मन्त्रः" (शत० ७। १। १। ५) इति श्रुतेः, उद्भवो जन्म यस्य, तत् तथा, विद्धि=जानीहि, ब्रह्म=मन्त्रो वेदस्तम्, अक्षरसमुद्भवम्=अक्षरात् ब्रह्मणः परमेश्वरात् समुत्पन्नम् ऋषिभिर्म-न्त्रद्रष्टृभिरभिव्यक्तं, विद्धि=जानीहि। तस्मात्=यस्मादक्षराद् ब्रह्मणः परमेश्वराद् वेदः, वेदात् कर्म, कर्मणो यज्ञः, तस्मात् सर्वगतं = सर्वेषु पदार्थेषु कारणत्वेनान्तरात्मत्वेन गतं प्राप्तं सम्बद्धं, सर्वत्र परिपूर्णं ब्रह्म=परमात्माख्यमक्षरं ब्रह्म, नित्यं=सर्वदा, यज्ञे=पञ्चविधे महायज्ञे, प्रतिष्ठितम्=अन्तरात्मत्वेन, कर्माध्यक्षत्वेन साक्षित्वेन च प्रतिष्टभ्य स्थितमित्यर्थः ॥ १५ ॥

ननु यो यज्ञार्थं कर्म न करोति, तस्य किं स्यात् ? तत्राह—

"एवं प्रवर्तितं चक्रं, नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो, मोघं पार्थ! स जीवति" ॥१६॥

अर्थः—एवं = मनुष्याः कर्म कुर्वन्ति, कर्मणो यज्ञो निर्वर्तते, यज्ञाद् वृष्टिः संजायते, वृष्टेरन्नमुत्पद्यते, अन्नाद् मनुष्याः जायन्ते, मनु-ष्येभ्यः पुनः कर्म, कर्मणः पुनर्यज्ञः, यज्ञात् पुनर्वृष्टिः, वृष्टेः पुनरन्नम्, अन्नात् पुनर्मनुष्याः, पुनः कर्मेत्येवंप्रकारेण प्रवर्तितं=परमेश्वरेणाक्षरेण ब्रह्मणा वेदद्वारा सञ्चालितं प्रभ्रामितं, चक्रं=सृष्टियज्ञचक्रं, नानुवर्त-

यति=नानुकूलेन प्रवर्तयति, सञ्चालयति, प्रभ्रामयति, न यज्ञार्थं कर्मानुतिष्ठति, इह=अस्मिन् लोके मनुष्यजन्मनि, यः=यो मनुष्यः। सः=असौ मनुष्यः, अघायुः=अघं पापमायुर्जीवनं यस्य, स तथा सर्वथा पापजीवनः, इन्द्रियारामः=इन्द्रियै रारामः आरमणमाक्रीडणं विषयेषु यस्य, स तथा-इन्द्रियविषयलम्पटः, मोघं= व्यर्थं, पार्थ=हे पृथापुत्र! जीवति=प्राणान् धारयति, यथा दंशमशकादीनां जीवनं, तथा तस्य जीवनमित्यर्थः ॥१६॥

ननु यो मनुष्यः सम्यगात्मानं वेत्ति, तत्रैवानिशमारमति, तृप्यति, तुष्यति च, किं तस्याप्यस्ति कर्म कर्तव्यम्?। आत्मार्थं कर्तव्याभावेऽपि तस्यास्ति लोकसंग्रहार्थं कर्म कर्तव्यमित्याह द्वाभ्याम्—

**"यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**
**आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते" ॥१७॥**

अर्थः—यस्तु=मानवान्तरव्यावृत्तिस्तोरर्थः, यः पुन र्मानवः=मनुपुत्रः, एव=निश्चयेनात्मरतिः=आत्मन्येव रतिः क्रीडा विहारो यस्य, आत्मन्येवारमति क्रीडति विहरति, नानात्मनि कामिन्यादौ यः, स तथा, आत्ममात्ररमणः, स्यात्=भवेत्, च=तथा, आत्मतृप्तः=तृप्तिरलंबुद्धिः, तां प्राप्तस्तृप्तः, आत्मन्येव तृप्तः आत्मानन्देनैवानन्दितः, च=तथा, आत्मन्येव=अनात्मव्यवच्छेदोऽवधारणार्थः, स्वस्मिन्नेव न परस्मिन्ननात्मनि, सन्तुष्टः=प्राप्तप्राप्तव्यत्वात् समाप्ताखिलाभिलाषः, सर्वापेक्षावर्जितः, तस्य=अमुष्यात्मरतस्यात्मविदो मानवस्य, कार्यं=कर्तव्यं कर्म, न विद्यते=न वर्तते, नास्तीत्यर्थः ॥ १७ ॥

**"नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः" ॥१८॥**

अर्थः—तस्य=अमुष्यात्मरतस्यात्मविदो मानवस्य, इह=अस्मिन् लोके, कृतेन=कर्मणा, कश्चन=कश्चिदपि, अर्थः=ऐहिकामुष्मिकः जायापशुपुत्रादिलक्षणोऽर्थः प्रयोजनं लौकिकं पारलौकिकं वा, नैव=नैवास्ति, फलकामनया कर्माकरणात्, न=नैव, अकृतेन=कृतं कर्म, तद्भिन्नेन ज्ञानेन, ब्रह्मज्ञानेन कश्चन मोक्षलक्षणो वा ख्यातिलक्षणो वाऽर्थः प्रयोजनमस्ति, अर्थित्वाभावात् । च=तथा, न=नैव, अस्य=एतस्या-

त्मविदो मानवस्य, सर्वभूतेषु=सर्वेषु निखिलेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु, कश्चित्=कोऽपि प्राणिविशेषोऽर्थव्यपाश्रयः=अर्थस्य-प्रयोजनस्योपाश्रयः आश्रयः,लौकिकाय पारलौकिकाय वा कस्मैचिद्-र्थायोपाश्रयितव्यः आश्रयितव्यः शरणी कर्तव्योऽस्ति,अर्थाभावादित्यर्थः।

यस्तावदात्मविदात्मरतिः, तस्य कर्मणा वा ज्ञानेन वा प्राप्तव्यः कोऽप्यर्थो न विद्यते,कामनाया अभावात्।न ह्यसौ लौकिकं वा पारलौकिकं वा कश्चिदर्थमाशास्ते, मोक्षं वा कर्हिचित् कामयते।तस्य पर्याप्तकामत्वेन विलीनसर्वकामत्वात् । अत एव न स ब्रह्मादिस्थावरान्तेषु प्राणिषु कस्यापि प्राणिविशेषस्यैहिकाय वाऽमुष्मिकाय वा कस्मै चिदर्थाय दीनः। कामनया हि मनुष्यो दीनो बोभूयते,देहीति च वावच्यते। स एषोऽदीनः सर्वकामवर्जितः सम्प्रति यत् करोति,यदाचरति,तन्न तस्य स्वार्थम्, किन्तर्हि? लोकसङ्ग्रहार्थम। लोकानां मनुष्याणामज्ञानेन कर्म परित्यजतां तित्यजिषूणां चात्मदृष्टान्तेन कर्मणि सङ्ग्रहः सम्प्रवर्तनं लोकसङ्ग्रहः, तदर्थमात्मरतेरात्मविदो मनुपुत्रस्यास्य सर्वं कर्म। स हि पश्यति-चेदहं कर्म जह्यां,तदा मां दृष्ट्वा सर्वेऽपि लोकाः कर्म जह्युः। ऐश्वर्यं च लौकिकं सर्वं कर्मतन्त्रं,यस्तावत् कर्म कुरुते,स लभते, न जातु कर्महीनः । कर्मपरित्यागे निःसन्देहं तेऽनीश्वराः भवेयुः,दरिद्राः प्रादुःष्युः।अनीश्वराणां दरिद्राणामिह जीवितं नूनं मरणादविशिष्टं,जीविते च मरणे च तेषां नास्ति कश्चिद् विशेषः । अतएव मन्त्रद्रष्टार ऋषयः समाम्नासिषुः "मा भूम निष्ट्या इवेन्द्र!" (ऋ०८।१।१३) इति निष्ट्याः = नीचस्थितयः,नीचैर्भूताः। तदेतत् सर्वं जानति मयि मनुपुत्रे,मा नाम सर्वे तेऽनीश्वराः भूः, मा च जीवन्तोऽपि मृताः इव लोके जीविषुः । अतः स्वार्थाभावेऽपि, लोकानां सर्वेषां कर्मसु प्रवृत्त्यर्थं मम यावज्जीवं यथाविधानं स्ववर्णोचितं निखिलं कर्म कर्तव्यमिति। स एष तत्रभवान् आत्मविदात्मरतिः,स्वार्थाभावेऽपि, लोकसङ्ग्रहार्थं, स्ववर्णोचितं लोकवेदसम्मतं सर्वं कर्म कुर्वाणो महद्भिः सर्वदाऽऽदरणीयः,गृहमेधिभिः सर्वदाऽर्चनीयः। यत्कारणं प्राणोऽसौ सर्वेषां मनुपुत्राणां,यत्कारणं वरिष्ठोऽसौ सर्वेषां ब्रह्मविदाम्। यत्रैतच्छ्रुतं भवति

"प्राणो ह्येष यः सर्वभूतैर्विभाति,विजानन् विद्वान् भवते नातिवादी।
आत्मक्रीड आत्मरतिः क्रियावान् एष ब्रह्मविदां वरिष्ठः"(मुं०३०३।)

इति। अतिवादी=शास्त्रमर्यादामतिक्रम्य वदनशीलः । क्रियावान्=लोकवेदसम्मतकर्मकृत् ॥१८॥

नन्वात्मरतिरात्मवित् तथा भवतु, मयि पार्थे किमायातम् ?, तत्राह—

**"तस्मादसक्तः सततं, कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन् कर्म, परमाप्नोति पूरुषः" ॥१९॥**

अर्थः—तस्मात्=यस्मादात्मरतिरात्मवित् स्वार्थाभावेऽपि लोकवेदसम्मतं सर्वं नियतं कर्म सर्वथा सङ्गवर्जितः समाचरति, तस्मात् त्वमपि असक्तः=कर्मफलासङ्गवर्जितः, कार्यं=कर्तव्यं, नियतं, कर्म=स्ववर्णोचितं कर्म, समाचर=सम्यगाचर, निर्वर्तय । हि=यस्मादसक्तः=कर्मफलासङ्गवर्जितः, कर्म=स्ववर्णोचितं नियतं कर्म, आचरन्=समाचरन्, पूरुषः=पुरुषः, परं=प्रकृतितत्कार्येभ्यः परं परमात्मानम्, आप्नोति=प्राप्नोति, परब्रह्मप्राप्तिलक्षणं मोक्षं समधिगच्छतीत्यर्थः ॥ १९ ॥

ननु ब्राह्मणप्रकृतेरेष धर्मः, नो मम क्षत्रियप्रकृतेः ?, तत्राह—

**"कर्मणैव हि संसिद्धिम्, आस्थिताः जनकादयः ।**
**लोकसंग्रहमेवापि, संपश्यन् कर्तुमर्हसि" ॥२०॥**

अर्थः—हि=यस्मात्, जनकादयः=जनकाश्वपतिप्रभृतयो ब्रह्मज्ञानिनः क्षत्रियाः, कर्मणैव=एवकारेण कर्मत्यागं व्यवच्छिनत्ति, कर्मानुष्ठानेनैव, संसिद्धिं=ब्रह्मणः सम्यक्-पुनरावृत्तिरहितां सिद्धिं प्राप्तिं, मोक्षम्, आस्थिताः=आस्थिषत, आत्मज्ञानपूर्वककर्मानुष्ठानकर्मत्यागयोः कर्मानुष्ठानमेव संसिद्ध्युपायत्वेन दृढमभ्युपाजग्मुः, तस्मात्, लोकसङ्ग्रहमेवापि=समुच्चार्थोऽपिः, तेन जनकादीनामाचरणं समुच्चीयते, लोकानामुन्मार्गप्रवृत्तानां कर्ममार्गे सङ्ग्रहं प्रवर्तनं, जनकादीनां चात्मज्ञानिनां कर्मानुष्ठानलक्षणमाचरणं, तदुभयमेव, नान्यदित्यवधारणार्थः, संपश्यन्=समालोचयन्, कर्तुं=कर्म कर्तुं निर्वर्तयितुमर्हसि=योग्योऽसीत्यर्थः॥२०॥

ननु मयि कर्म कुर्वाणे कथं लोकसङ्ग्रहो भविष्यति ?, तत्राह—

**"यद् यदाचरति श्रेष्ठः, तत् तदेवेतरो जनः ।**
**स यत् प्रमाणं कुरुते, लोकस्तदनुवर्तते" ॥२१॥**

अर्थः—श्रेष्ठः=प्रशस्यतरः प्रमुखः, विद्यावित्तबन्धुवयोभिर्व्यस्तैर्वा समस्तैर्वा बहुमतः, प्रधानो मनुष्यः, यद् यदाचरति=यद् यत् कर्मानु-

तिष्ठति,निर्वर्तयति,करोति,तत् तदेव=कर्मान्तरव्यवच्छेदोऽवधारणार्थः, तत्तत्कर्मैव, इतरः=अन्यो, जनः=मनुष्यः,आचरति, करोति। सः= असौ श्रेष्ठः,प्रधानो मनुष्यो,यत्=यद् वाक्यं,लौकिकं वैदिकं वा वाक्यं, प्रमाणं कुरुते=प्रमाणं मन्यते,लोकः=ततो भिन्नः सर्वोऽपि लोको जनः, तद्=तदेव वाक्यम्, अनुवर्तते=अनुमन्यते, प्रमाणं कुरुते, इत्यर्थः।

त्वमर्जुनोऽपि श्रेष्ठः प्रधानो विद्याविक्तादिभिर्बहुमतः पुरुषो यत् करिष्यसे,तदेवान्यः सर्वो जनोऽनुवर्तिष्यते,अतःस्वभिन्नानां विश्वस्तानां लोकानां कर्मसु सङ्ग्रहं, पूर्वेषां जनकादीनामात्मज्ञानिनामाचरणं च वीक्षमाणः स्ववर्णोचितं कर्म विधत्स्व। कर्मणैव हि लोकाःरक्ष्यन्ते,न केवलेन ज्ञानेन, लोकरक्षणं च भवादृक्षस्य प्रधानपुरुषस्य परमं कर्तव्यम्॥२१॥

अथैतदात्मदृष्टान्तेनापि द्रढयन्नाह त्रिभिः—

**"न मे पार्थास्ति कर्तव्यं, त्रिषु लोकेषु किञ्चन।**
**नानवाप्तमवाप्तव्यं, वर्त एव च कर्मणि" ॥२२॥**

अर्थः—पार्थ=हे पृथापुत्र! मे=मम कृष्णस्य वासुदेवस्य, त्रिषु=त्रिसंख्याकेषु भूर्भुवःस्वराख्येषु,लोकेषु=भुवनेषु,किंचन=किमपि,कर्तव्यं= कर्मणा निर्वर्तयितव्यं सम्पादयितव्यं वस्तु, नास्ति = न विद्यते। कुतः? यतोऽनवाप्तम्=अप्राप्तं मे किञ्चन नास्ति,अवाप्तव्यं=प्राप्तव्यं,प्रापणीयं, प्राप्तजातीयं च मे किञ्चन नास्ति=न विद्यते, निखिलं प्राप्तमेव विद्यते, तथापि स्ववर्णोचिते नियते कर्मणि,च=निश्चयेनाहं,वर्त एव=प्रवर्ते एव, निःसन्देहं कर्म करोम्येवेत्यर्थः॥२२॥

ननु किंचिदपेक्षणीयं तव चेन्न विद्यते, मा कर्मणि वर्तिष्ट ?, तत्राह—

**"यदि ह्यहं न वर्तेय जातु कर्मण्यतन्द्रितः।**
**मम वर्त्मानुवर्तन्ते, मनुष्याः पार्थ! सर्वशः"॥२३॥**

अर्थः— यदि-हि-अहं=चार्थे हिः पक्षान्तरमाह, यदि चाहम्, अतन्द्रितः=अनिद्रितः, सावधानोऽनलसः सन्, कर्मणि=स्ववर्णोचिते कर्मणि,जातु=कदाचित् न वर्तेय=न प्रवर्तेय,न जातुचित् कर्म कुर्याम्, तदा,पार्थ=हे पृथापुत्र! सर्वशः=सर्वे,मनुष्याः=जनाः,मम=मे,मदीयं, वर्त्म=कर्माकरणलक्षणं मार्गम्, अनुवर्तन्ते=अनुवर्तेरन्, अनुरुन्धीरन्, कर्म न कुर्वीरन्नित्यर्थः॥२३॥

ननु तव वर्त्मानुवर्तन्ते चेद्, अनुवर्तन्तां, त्वं कर्म मा कुथाः ?, तत्राह--

**"उत्सीदेयुरिमे लोकाः, न कुर्यां कर्म चेदहम् ।**
**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः" ॥२४॥**

अर्थः- चेद्=यदि, अहं=कृष्णोऽहं, कर्म=स्ववर्णोचितं कर्म, न कुर्या=नानुतिष्ठेयं,तदा,इमे=एते,लोकाः=मनुष्या अखिलाः मनुपुत्राः, उत्सीदेयुः=उन्मूलेयुः,उन्मूलिताः भवेयुः,विनश्येयुः,ममवर्त्मानुवर्तनेन कर्माकरणादनैश्वर्यं दारिद्र्यं दुर्गतिं नीचस्थितिं,विनाशहेतुत्वाद् विनाशं, प्राप्नुयुः, लौकिकस्य सर्वस्यैश्वर्यस्य कर्मप्राप्यत्वनियमात् । च=पुनः सङ्करस्य=यस्मादनीश्वराणां धनबलबाहुबलविद्याबलहीनानां दरिद्राणां स्त्रियः पतिव्रताः सत्योऽपि नात्मसतीत्वं रक्षितुं पारयन्ति, तस्मात् तासु परैर्बलेनोत्पादितस्य सङ्करस्य मिश्रितवर्णस्यात्मजातिदेशाभिमान-शून्यस्य मनुजाकृतिमात्रस्य कर्ता=उत्पादयिता जनयिता स्याम्=अहं कृष्णो भवेयं,कर्माकरणेन विनाशहेतोरनैश्वर्यस्य प्रयोजकत्वात्, तेन च इमाः=एताः आत्मजातिदेशाभिमानिनीः शुद्धाः पूताः प्रजाः=सर्वाः मानवीः सन्ततीरुपहन्यां=मूलमुपेत्य हन्यां समूलं हिंस्यां,तदेतत् मम प्रजानामनुग्रहाय प्रवृत्तस्य नोचितम्, अतो मयका कृष्णेन स्वार्था-भावेऽपि लोकानां सङ्ग्रहाय कर्म कर्तव्यमित्यर्थः ।

मृतपतिकासु विधवासु पुनर्विवाहेन याः पुत्रीपुत्रलक्षणाः प्रजाः प्रजायन्ते, न तत्र सङ्करो दोषः । पुनर्विवाहेन विधवारक्षणस्य वेदाज्ञारूपत्वात् । यत्रैतदुदाहृतं भवति "युवं विधन्तं विधवामुरुष्यथः" (ऋ० १० । ४० । ८) इति । विधवां विधन्तमित्यन्वयः । युवं=युवां, विधवां विधन्तं=परिचरन्तं,रात्रिन्दिवं तत्प्रियं कुर्वन्तं,विवाहविधिना धारयन्तं "को वां शयुत्रा विधवेव देवरम्"( ऋ० १० । ४० २) इति पूर्वमन्त्रलिङ्गात्, उरुष्यथः=रक्षथः । "या पूर्वं पतिं वित्त्वाऽ-थान्यं विन्दते पतिम्" ( अथर्व० ९।५।२७ ) "समानलोको भवति पुनर्भुवाऽपरः पतिः" ( अथर्व० ९ । ५ । २८ ) "पत्नीनाशे यथा पुंसो भर्तृनाशे तथा स्त्रियः। पुनर्विवाहः कर्तव्यः कलावपि युगे तथा" ( व्याघ्रपादस्मृ० ) इति च पुनर्विवाहपराणि शास्त्रान्तरवचनानि ।

निदर्शनं चेह नागकन्यायाः विधवाया अलोपीनाम्न्यः पुनर्विवाहः पृथापुत्रेणार्जुनेनेति महाभारतादवगन्तव्यम्। प्रथमाध्याये खलु व्यामोहात् सङ्करं दोषं दुष्परिहरं मन्यमानोऽर्जुनो भगवन्तं श्रीकृष्णं "स्त्रीषु दुष्टासु वार्ष्णेय ! जायते वर्णसङ्करः। सङ्करो नरकायैव कुलघ्नानां कुलस्य च" (गी० १ । ४२) इत्यवोचत्। भगवाँश्च मृतपतिकानां विवाहकामानां स्त्रीणां पुनर्विवाहेन सङ्करं दोषं सुपरिहरं बुध्यमानस्तमुपैक्षिष्ट। जीवितपतिकासु पतिव्रतासु साध्वीषु स्त्रीषु परैर्बलेनोत्पादितायां प्रजायां च सङ्करो दोषो न सुपरिहरः। स ह्येष दोषो न तावत् कथञ्चित् परिहर्तुं पार्यते, यावदासां पतयो न परेषामीशते, धनबलेन बाहुबलेन बुद्धिबलेन च न परानतिशेरते। तदेतत्सर्वं जानद्भिरस्माभिः कथमिमे सर्वे लोकाः उपेक्ष्येरन्, कथञ्च स्ववर्णोचितकर्मभिरैश्वर्यहेतुभिरात्मानुवर्तिनो न विधीयेरन्। नहि कर्मानुष्ठानेनास्माकं किञ्चिद् हीयते, येन कर्म नानुतिष्ठेयम्॥ २४॥

अथ फलितमाह—

"सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत!।
कुर्याद् विद्वान् तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम्" ॥२५॥

अर्थः—भारत=हे भरतवंशोद्भव! अविद्वांसः=अनात्मज्ञाः, ये याथातथ्येनात्मनं न जानन्ति, तेऽनात्मविदः, कर्मणि=क्रियमाणे कर्मणि, सक्ताः=कर्तृत्वाभिमानेन फलाभिलाषेण चाभिनिविष्टाः, अहन्ताममताबुद्धिसमन्विताः, कुर्वन्ति=निर्वर्तयन्ति, कर्मानुतिष्ठन्ति, यथा=येन प्रकारेण, तथा=तथैव, तेनैव प्रकारेण, विद्वान्=आत्मविद्, असक्तः=कर्मफलासङ्गवर्जितः, कर्मणि फले चासक्तिरहितः, अनभिनिविष्टः, लोकसङ्ग्रहं=लोकानां मनुष्याणां कर्मणि सङ्ग्रहं प्रवर्तनं, चिकीर्षुः=कर्तुमिच्छुः, कुर्यात्=निर्वर्तयेत्, कर्मानुतिष्ठेदित्यर्थः॥ २५॥

किञ्च—

"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।
जोषयेत् सर्वकर्माणि, विद्वान् युक्तः समाचरन्" ॥२६

अर्थः—विद्वान्=आत्मवित्, कर्मसङ्गिनां=कर्माभिनिवेशिनां

श्रेयोमार्गोऽयमिति बुद्ध्या कर्ममार्गे प्रवृत्तिमताम्, अज्ञानाम् = अनात्मविदां, बुद्धिभेदं = कर्मगोचरायाः, श्रेयोमार्गोऽयमित्येवंलक्षणायाः, बुद्धेर्मतेर्भेदं भेदनं,चालनं, कर्मानुष्ठानाद् भ्रेषणं,न जनयेत्=नोत्पादयेत्, न विदध्यात् । अपि च स्वयं युक्तः=समत्वबुद्धियोगयुक्तः, सर्वकर्माणि आत्मजातिदेशोन्नतिसाधनानि, वेदलोकसम्मतानि, स्ववर्णोचितानि, निखिलानि कर्माणि, समाचरन् = सम्यगनुतिष्ठन्, जोषयेत्=तान् कर्मसङ्गिणोऽप्यज्ञान्,सेवयेत्, सम्यगनुष्ठापयेत् ,प्रीत्या कारयेदित्यर्थः । नन्वेवमात्मानात्मविदोः को विशेषः ?, तत्र विशेषमाह द्वाभ्याम्—

**"प्रकृतेः क्रियमाणानि, गुणैः कर्माणि सर्वशः ।**
**अहङ्कारविमूढात्मा, कर्ताऽहमिति मन्यते" ॥२७॥**

अर्थः—प्रकृतेः=सृष्टिनिर्माणशक्तेर्मायायाः, गुणैः=सत्त्वरजस्तमोभिर्देहेन्द्रियादिरूपेण परिणतैर्गुणैः,सर्वशः=सर्वाणि कर्माणि=लौकिकानि वैदिकानि च निखिलानि कर्माणि, क्रियमाणानि=विधीयमानानि, अहङ्कारविमूढात्मा = अनात्मनि देहादावात्मबुद्धिरहंकारः, तेन विमूढः-विमोहं विवेकज्ञानाभावं प्राप्तः आत्मा बुद्धिरन्तःकरणं यस्य, सोऽनात्मवित् ,पुरुषः,कर्ताऽहं=तृन्प्रत्ययः,अहमेव कर्ता,करोमि,इति= इत्येवं मन्यते=बुध्यते,तृचि प्रत्यये तु तेषां सर्वेषां कर्मणामहमेव कर्ता विधाताऽस्मीति मन्यते, बुध्यते, इत्यर्थः ॥२७॥

**"तत्त्ववित्तु महाबाहो ! गुणकर्मविभागयोः ।**
**गुणाः गुणेषु वर्तन्ते, इति मत्वा न सज्जते" ॥२८॥**

अर्थः—महाबाहो = हे महाभुजबल ! यस्तु = यः पुनर्गुणकर्मविभागयोः= आत्मनः सकाशाद् भेदेन गुणानां देहेन्द्रियादिरूपेण परिणतानां परस्परं विभागस्य,तत्कर्मणां च परस्परं विभागस्य,किमुक्तं ? परस्परं विभक्तानां देहेन्द्रियादिरूपेण परिणतानां गुणानां, परस्परं विभक्तानां तत्कर्मणां च,तत्त्ववित्=तत्त्वस्य विविक्तरूपस्य वेत्ता । स,आत्मवित्त्वात् गुणाः=इन्द्रियरूपेण परिणताः गुणाः, गुणेषु = विषयरूपेण परिणतेषु गुणेषु, वर्तन्ते = प्रवर्तन्ते,नात्मेति=इत्येतत् मत्वा = बुद्ध्वा, न सज्जते = न कर्तृत्वाभिनिवेशरूपां सक्तिं कुरुते, कर्ताऽहमिति न मन्यते, इत्यर्थः ।

अथात्मानात्मविदोर्विशेषं प्रदर्श्य "न बुद्धिभेदं जनयेदज्ञानाम्" इत्युक्तमेवार्थं पुनर्द्रढयन्नाह—

"प्रकृतेर्गुणसंमूढाः, सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्, कृत्स्नविन्न विचालयेत्" ॥२९

अर्थः—प्रकृतेः=सृष्टिनिर्माणशक्तेर्मायायाः, गुणसंमूढा=गुणैः सत्त्वादिभिर्देहेन्द्रियादिरूपेण परिणतैः संमूढाः=विविक्तात्मतत्त्वज्ञानाभावः संमोहः,तं प्राप्ताः, विविक्तात्मस्वरूपानभिज्ञाः सन्तो गुणकर्मसु=गुणानां कार्यकरणात्मकानां देहेन्द्रियरूपाणां कर्मसु व्यापारेषु सज्जन्ते=अभिनिविशान्ते, "वयमेतत् कर्म कुर्मः" इति कर्तृत्वाभिनिवेशः सक्तिः, अहन्ताममताबुद्धिः, तां ये प्रपद्यन्ते, तान्=अमून्, अकृत्स्नविदः=कृत्स्नं सर्वं विदन्तीति कृत्स्नविदः सर्वविदः,आत्मविदो ब्रह्मविदः," आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते, इदं सर्वं विदितम्" "इदं सर्वं, यदयमात्मा" (बृ०३०४।५ । ६-७) इत्यादिश्रुतिभ्यः, न कृत्स्नविदोऽकृत्स्नविदोऽनात्मविदः,तान्,मन्दान्=मन्दप्रज्ञान्,कृत्स्नवित्=सर्वविदात्मविद् ब्रह्मवित्, न विचालयेत्=कर्मभ्यो न प्रच्यावयेत्, अपि तु कर्मसु प्रवर्तयेदित्यर्थः ॥ २९ ॥

नन्वास्तां विद्वदविदुषोः कथा, सम्प्रति मया किं कर्तव्यम् ? तत्राह—

"मयि सर्वाणि कर्माणि, संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा, युध्यस्व विगतज्वरः" ॥३०॥

अर्थः—सर्वाणि=समस्तानि, कर्माणि=लौकिकवैदिककर्माणि, अध्यात्मचेतसा="आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितम् । आत्मा हि जनयत्येषां कर्मयोगं शरीरिणाम्" ( मनु० १२ । ११९ ) इति बुद्धिरध्यात्मचेतः, आत्मनि चेतः, इति तद्व्युत्पत्तेः, तेनात्मविषयेण चेतसा, अन्तरात्मना, निष्कपटभावेनेति वा, मयि=ईश्वरे मयि, संन्यस्य=निक्षिप्य, समर्प्य, निराशीः=आशीः कामः, ततो निर्गतः, निष्कामः, फलकामनाविरहितः, निर्ममः=निर्गतममभावः,ममेदं कर्मेति बुद्धिशून्यः विगतज्वरः=विगतसन्तापः, सर्वथा शोकवर्जितः, भूत्वा=सम्पद्य, युध्यस्व=संप्रहरस्व, विजयस्वेत्यर्थः ॥ ३० ॥

ननु युध्यमानस्य मे हिंसाकृतं पापं भविष्यति,युद्धस्य हिंसाकर्मत्वात्? तत्राह—

"ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः" ॥३१॥

अर्थः—ये, मानवाः=मनुष्याः, इदम्=एतत् कर्मानुष्ठानविषयं, कर्मयोगविषयं,मे=मम,मतम्=अनुशासनं, श्रद्धावन्तः=श्रद्दधानाः, अनसूयन्तः=गुणेषु दोषारोपोऽसूया,तां मयि कृष्णे वासुदेवेऽकुर्वाणाः सन्तो नित्यं=सर्वदा, अनुतिष्ठन्ति=अनुवर्तन्तेऽनुसरन्ति, तेऽपि=ते मानवाः अपि, कर्मभिः=आत्मजातिदेशोन्नतिहेतोः क्रियमाणैर्हिंसात्मकैरहिंसात्मकैर्वा स्ववर्णोचितैः कर्मभिः,मुच्यन्ते=त्यज्यन्ते,न संसृज्यन्ते,न जातु लिप्यन्ते, किं पुनस्त्वमर्जुनः स्वभावतोऽनुसूयुः श्रद्धावाँश्चेत्यर्थः ॥३१॥

अथ ये विपरीतास्तान् प्रत्याह—

"ये त्वेतदभ्यसूयन्तो, नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढाँस्तान्, विद्धि नष्टानचेतसः" ॥३२॥

अर्थः—ये तु=ये पुनर्मानवाः,एतद्=इदं कर्मानुष्ठानगोचरं,मे=मम,मतम्=अनुशासनम्,अभ्यसूयन्तः=दोषाभावेऽपि दोषानुद्भावयन्तो नानुतिष्ठन्ति=नानुवर्तन्ते । तान्=अमून्, सर्वज्ञानविमूढान्=सर्वेषु लौकिकवैदिकविषयेषु ज्ञानेषु विशेषतो मूढान् बालिशान्,नष्टान्=नष्टप्रायान्,जीवतोऽपि मृतकल्पान्, अचेतसः=अल्पचेतसोऽल्पमेधसो विद्धि=जानीहि, बुध्यस्वेत्यर्थः ॥ ३२ ॥

ननु मानवत्वाविशेषेऽपि मतानुष्ठानभेदः किंनिबन्धनः?, प्रकृतिनिबन्धनः, इत्याह—

"सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि, निग्रहः किं करिष्यति" ॥३३॥

अर्थः - ज्ञानवानपि=विद्वानपि, स्वस्याः=स्वीयायाः, प्रकृतेः=अनेकजन्मार्जितैर्मातापितृरजोवीर्याभ्यां समागतैर्नानाविधैः संस्काररूपेतायाः शरीरेन्द्रियात्मना परिणतायाः स्वभावभूतायाः प्रकृतेः,

सदृशम्=अनुरूपं, चेष्टते=ईहते, व्याप्रियते, मन्यते, कर्माणि कुरुते च, किं पुनरविद्वानित्यपेरर्थः। यस्माद् भूतानि=सर्वे प्राणिनो ज्ञानिनोऽज्ञानिनो वा, प्रकृतिं=स्वां स्वां प्रकृतिं यान्ति=गच्छन्ति, स्वंस्वं स्वभावमनुयन्ति, तस्मात् निग्रहः=निषेधलक्षणो निरोधः शास्त्रस्य वाऽन्यस्य वा कस्यचित् किं करिष्यति=किं विधास्यति, न किञ्चिदित्यर्थः॥३३॥ ननु ज्ञानवान् स्यात्, न वा ज्ञानवान् भवेत्, चेत् सर्वो जनः प्रकृतिवशगः, तदा पुरुषकारविषयानुपपत्तेः शास्त्रोपदेशो व्यर्थः? तत्राह—

"इन्द्रियस्येन्द्रियस्यार्थे, रागद्वेषौ व्यवस्थितौ।
तयोर्न वशमागच्छेत्, तौ ह्यस्य परिपन्थिनौ" ॥३४॥

अर्थः - इन्द्रियस्य=ज्ञानेन्द्रियस्य श्रोत्रादेः, इन्द्रियस्य=कर्मेन्द्रियस्य वागादेः, अर्थे=विषये, शब्दादौ वचनादौ च, रागद्वेषौ=इष्टे विषये रागः, अनिष्टे विषये द्वेषः, रागश्च द्वेषश्च, तौ कामक्रोधौ, व्यवस्थितौ=विशेषेणावधाय स्थितौ। तयोः=प्रतिविषयं व्यवस्थितयोरमुयोः रागद्वेषयोर्वशम्=अधीनत्वं, नागच्छेत्=नैयात्, तयोर्वशे कान्तौ, इच्छायामाज्ञायां न व्रजेत्, तदधीनो न भवेत्, हि=यस्मात्, तौ=अमू रागद्वेषौ, अस्य=एतस्य पुरुषस्य परिपन्थिनौ=श्रेयसः प्रच्याव्याश्रेयसि पन्थयितुं गमयितुं शीलौ, प्रतिपथप्रवर्तनस्वभावौ, प्रत्यर्थिनौ, प्रतिपक्षिणौ, वैरिणावित्यर्थः।

प्रकृतिर्हि पुरुषमेनमिन्द्रियाणां विषयेषु शब्दादिषु प्रवर्तयति, शास्त्रं च प्रतिविषयं रागद्वेषौ व्यवस्थितौ, विषयानुपभुञ्जानस्तयोर्नवशमागच्छेदिति पुरुषमेनमुपदिशति। क्रियायां च स्वप्रयत्नसाध्यायां सर्वदा स्वतन्त्रः पुरुषः, प्रतिविषयं व्यवस्थितयो रागद्वेषयोर्वशवर्ती भवन् विषयानुपभुञ्जीत, न वा तयोर्वशवर्ती सन् विषयाननुभवेत्, माध्यस्थ्येन चोपसेवेत, न तं कश्चित् प्रतिरोद्धुमर्हति, सोऽयं तत्पुरुषकारस्य विषयः। तथा च न पुरुषकारविषयानुपपत्तिर्नवा शास्त्रोपदेशो व्यर्थः।

प्रवर्तेत यथाकामं, निवर्तेत यथारुचि।
स्वतन्त्रः पुरुषस्तत्र, कस्तं रोद्धुमिहार्हति ॥ १ ॥
माध्यस्थ्येनोपभुञ्जीत, विषयान् निखिलान् सुधीः।
प्रकुर्वीत च कर्माणि, निष्काम इति शास्त्रगीः ॥ २ ॥ ३४॥

ननु ब्रह्मज्ञानपूर्वको भक्तिप्रधानः कर्मयोगो वैदिकानां धर्मः, ब्रह्मज्ञानपूर्वकः सर्वकर्मसंन्यासो भिक्षावृत्त्या च जीवनयात्रानिर्वाहः, इति सांख्यानामात्मज्ञानिनां धर्मः । तत्र सुकरत्वात् सांख्यधर्ममेवाचरितुमिच्छामि, न वैदिकं धर्मं, दुष्करत्वात् ?, तत्राह --

"श्रेयान् स्वधर्मो विगुणः, परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः, परधर्मो भयावहः" ॥३५॥

अर्थः-विगुणः=आचरणेऽनुष्ठाने सुकरत्वगुणविगतोऽपि स्वधर्मः=वेदोक्तः कर्मयोगाख्यः स्वो धर्मः,स्वनुष्ठितात्=सुखेनाचारितादाचरितव्यात् परधर्मात्=स्वधर्मात्परो भिन्नो धर्मः परधर्मः, तस्मात् भिक्षाचर्यादिलक्षणात् परधर्मात्, श्रेयान्=प्रशस्यतरः अतिशयेन शोभनः । स्वधर्मे=स्वे धर्मे निधनं=मरणम् ,मरणपर्यन्तं स्वधर्मानुष्ठानं, श्रेयः=प्रशस्यतरं, श्रेष्ठम्, परधर्मः = अनुष्ठेयत्वेनाभ्युपगतः परधर्मो, भयावहः = भयप्रापकः, भयमावहति प्रापयतीति तद्व्युत्पत्तेः,भयहेतुत्वाद् भयं पापं,तस्य प्रापको जनकः, परधर्मानुष्ठानं पापजनकम् ,इहामुत्राशुभकरमित्यर्थः ।

अथार्जुनः पृच्छति—

"अर्जुन उवाच" ।

"अथ केन प्रयुक्तोऽयं, पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय !, बलादिव नियोजितः" ॥३६॥

अर्थः—अथ=प्रश्नः, अथो, वार्ष्णेय=हे वृष्णिकुलोद्भव !, अयम्=एष, पूरुषः=पुरुषो मनुष्यः, केन = केन प्रयोजकेन हेतुभूतेन, प्रयुक्तः=प्रयोजितः प्रेरितः,अनिच्छन्नपि=अकामयमानोऽपि,बलादिव नियोजितः=बलात्कारेण नियोजित इव, नितरां योजितः इव, प्रवर्तित, इव, राज्ञा भृत्यवदाज्ञप्त इव, पापं=पापं कर्म, परधर्मानुष्ठानलक्षणं पापजनकं कर्म, चरति=आचरति, निर्वर्तयतीत्यर्थः ॥ ३६ ॥

अथार्जुनप्रश्नस्योत्तरमाह भगवान्—

"श्री भगवानुवाच" ।

"काम एष क्रोध एष, रजोगुणसमुद्भवः ।
महाशनो महापाप्मा, विद्ध्येनमिह वैरिणम्" ॥३७॥

अर्थः—एष=अयं पापाचरणे बलात् प्रयोजकः, कामः=प्रतिविषयं व्यवस्थितो रागः, एष = स एष कामः, क्रोधः=पापे कर्मणि प्रसह्य प्रवर्तकः प्रतिविषयं व्यवस्थितो द्वेषः, यदा स्वविषये कामः केनचित् प्रतिहन्यते, तदा स तत्रैव क्रोधात्मना परिणमते, कामः प्रकृतिः, क्रोधो विकृतिः, परिणामवादे प्रकृतिरेव विकृतिरित्यभ्युपगमादाह क्रोध एष, य एष कामः, स एवैष क्रोधः, क्रोधत्वेन परिणतः, रजोगुणसमुद्भवः= शरीरेन्द्रियरूपेण परिणतायाःमायायाःप्रकृते रजोगुणसकाशात् समुद्भवो जन्म यस्य कामस्य, स रजोगुणोत्पत्तिकः, महाशनः = महद् बृहदपारमनन्तमशनं भोजनं काम्यं वस्तु यस्य, सोऽनन्ताशनः "समुद्र इव हि कामः, नैव हि कामस्यान्तोऽस्ति" ( तै० ब्रा० २। २। ५ ) इत्यादिश्रुतेः, महापाप्मा=महान् पाप्मा पङ्को भवति यस्मात् क्रोधात्मना परिणतात् कामात्, स हिंसादिदुष्कृतकर्महेतुः "नानुपहत्य भूतानि उपभोगः सम्भवति" (यो० २। १५) इति योगभाष्यात्, एनम्=एतं महापाप्मानं महाशनं रजोगुणसमुद्भवं क्रोधापरात्मानं कामम्, इह=अस्मिन् संसारे, वैरिणं=श्रेयसोऽपकृष्याश्रेयसि पापे कर्माणि बलात् प्रवर्तकं परिपन्थिनं, विद्धि = जानीहीत्यर्थः।

"इन्द्रियस्येन्द्रियस्यार्थे" ( ३४ ) इत्यत्र यौ रागद्वेषौ कामक्रोधात्मकौ प्रतिविषयं व्यवस्थितौ, पुरुषस्य परिपन्थिनौ, भगवानभाषिष्ट, तयोः कामो रागो मुख्यः परिपन्थी, क्रोधो द्वेषो गौणः परिपन्थी। यत्कारणमसौ जाते जयन्ते, हते च तस्मिन् हन्यते। "गौणमुख्ययोश्च मुख्ये कृतो यत्नो गौणोऽपिकृतो भवति" इतिन्यायमाश्रित्येह काममेवैकाकिनं भगवान् परिपन्थित्वेनाकशासीत्, क्रोधं च व्यस्राक्षीत्, न पुनरकः काम कामे पन्थी, न क्रोधः, इति भावेन क्रोधमत्याक्षीत्। परिपन्थी वैरीति चानर्थान्तरम् ॥ ३७ ॥

अथोक्तं कामस्य वैरित्वं त्रिभिर्दृष्टान्तैर्निश्चाययति—

**"धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च।**
**यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतम्" ॥३८॥**

अर्थः—यथा=येन प्रकारेण, वह्निः=अग्निः, धूमेन=अग्निध्वजेन,

आव्रियते=आच्छाद्यते, यथाऽऽदर्शः=दर्पणो, मलेन=मालिन्येनाव्रियते, यथोल्वेन=गर्भवेष्टनेन जरायुणा, गर्भः=कुक्षिस्थो डिम्भः, आवृतः=आच्छादितः, तथा=तेन प्रकारेण, इदम्=एतद् वक्ष्यमाणमात्मानात्मगोचरं ज्ञानं, तेन=अमुना कामेनावृतम्=आच्छादितम्, आच्छाद्यते, इत्यर्थः ।

तत्रात्मज्ञानावरणे प्रथमो दृष्टान्तः, अनात्मज्ञानावरणे द्वितीयो दृष्टान्तः, आत्मानात्मज्ञानमात्रावरणे तृतीयो दृष्टान्त इति विवेकः ॥३८॥

ननु दार्ष्टान्तिके वह्न्यादिवदिदं शब्दवाच्यं किमस्ति, यत् कामेनाव्रियते, ज्ञानमित्याह—

**"आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।**
**कामरूपेण कौन्तेय ! दुष्पूरेणानलेन च" ॥३९॥**

अर्थः— कौन्तेय=हे कुन्तीपुत्र ! एतेन=एनेन, कामरूपेण=कामनामकेन, काम इच्छा तृष्णा, रूपं नाम, रूप्यते निरूप्यतेऽनेनेति तद्व्युत्पत्तेः, कामाख्येन, कामेन, ज्ञानिनः=विवेकिनः पण्डितस्य, नित्यवैरिणा=सर्वदा परिपन्थिना, दुष्पूरेण=दुःखेन पूरः पूरणं यस्य, तेन दुःखतः पूरयितव्येन, कामितैर्विषयैः पूरयितुमशक्येन, च=तथाऽनलेन=कामितविषयाप्राप्तावनलकल्पेन, वह्निरनलः, तद्वद् दाहकेन, सन्तापकरेण, ज्ञानम्=आत्मानात्मगोचरं बुद्धिवृत्त्यात्मकं, वेदनं पुरुषस्य सर्वस्यावृतम्=आच्छादितं विद्यते, इत्यर्थः ।

यः खलु पण्डितो बाह्याभ्यन्तरपदार्थान् विविच्य तत्त्वतो जानाति, तस्यैषा मतिर्भवति "कामात्मता न प्रशस्ता, न चैवेहास्त्यकामता । काम्यो हि वेदाधिगमः, कर्मयोगश्च वैदिकः" ( मनु० २ । २ ) इति । तस्मादसौ मर्यादामतिक्रम्य जायमानं कामं परिणामकालवत् स्थितिकालेऽपि दुःखहेतुमीक्षमाणो भूरिशो जुगुप्सते, तमभिभवितुं च निरन्तरं यथाबलं प्रयतते, यावदेष समूलघातं न हन्यते । तद्विपरीतः पदार्थस्वभावानभिज्ञः, कामे जाते, कामिते विषये सक्तः, परिणामकाले दुःखमनुभवन् दुःखहेतुं वैरिणं तं निश्चिनोति, नोत्पत्तिकाले, नापि स्थितिकाले । तदेतत् सूचयितुमेवोक्तं भगवता 'ज्ञानिनो नित्यवैरिणा" इति । उत्पत्तिस्थितिपरिणामकालो नित्यपदार्थः, सर्वदेति तत्पर्यायः ॥ ३९ ॥

ननु वैरिणः कामस्य किमधिष्ठानं, कथं चायं ज्ञानमावृत्य पुरुषं पापे

कर्मणि प्रवर्तयति ?, तत्राह— (सत्संवद)

"इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते।
एतैर्विमोहयत्येष, ज्ञानमावृत्य देहिनम्" ॥४०॥

अर्थः—इन्द्रियाणि=शब्दस्पर्शरूपरसगन्धग्राहकानि श्रोत्रादीनि, वचनादानगमनविसर्गानन्दजनकानि वागादीनि करणानि, मनः=सङ्कल्पधर्मकमन्तःकरणं, बुद्धिः=ज्ञानवृत्तिकमन्तःकरणम्, अस्य=एतस्य वैरिणः परिपन्थिनः कामस्याधिष्ठानम्=अधिकृतं स्थानमाश्रयः, उच्यते=कथ्यते वैदिकैः। एष=स एष कामः, एतैः=एभिः स्वाधिष्ठानभूतैः स्वस्वव्यापारं कुर्वद्भिर्मनोबुद्धिसहितैः श्रोत्रादिभिरिन्द्रियैर्ज्ञानम्=आत्मानात्मगोचरं बुद्धिवृत्त्यात्मकं ज्ञानमावृत्य=आच्छाद्य, तिरोभाव्य, देहिनं=शरीरिणं पुरुषं, विमोहयति=विशेषेण मोहयति, विपरीतं ज्ञानं मोहः, पापे कर्मणि पुण्यमिदं कर्मेति ज्ञानं जनयित्वा प्रवर्तयतीत्यर्थः।

मनोबुद्धिभेदादन्तःकरणं द्विविधम्। तत्र ज्ञानधर्मकं बुद्धिः, इन्द्रियैरर्पितेषु विषयेषु सम्यगसम्यक्कल्पकं सङ्कल्पविकल्पात्मकं मनः। तयोर्बुद्धिरिति विशेषनाम,मन इति च सामान्यनाम। चित्तं चेतो मनः, इत्यनर्थान्तरम्। तदेतन्मनो ज्ञानेन्द्रियं कर्मेन्द्रियं चोभयम्। तदेवोभयेन्द्रियं सर्वेन्द्रियनायकं मनोऽन्तःकरणं,कामोऽधितिष्ठति, विषयभेदेन चानेकधा बोभिदीति यत्रैतच्छ्रुतं भवति "मनसि वै सर्वे कामाः श्रिताः" (ऐ० आ० १ ३।२) "कामा येऽस्य हृदि श्रिताः" (कठो० ६। १४) इति। हृदि=मनसि "बहवः इमे अस्मिन् पुरुषे कामाः नानात्ययाः" (छां० उ० ४। १०। ३) इति। पुरुषे=पुरुषस्य मनसि, नानात्ययाः=नानाविषयाः। सोऽयं कामोऽन्तःकरणं मनोऽधितिष्ठन्नेव तन्नायकानि तदनुचराणि ज्ञानेन्द्रियाणि,कर्मेन्द्रियाणि,तद्विषयांश्च सर्वान् अध्यास्ते, ज्ञानवृत्तिं च बुद्धेरावृण्वन्, ज्ञानी स्यादज्ञानी वा भवेत्, पुरुषमात्रं मोहमापाद्य निरङ्कुशं पापे कर्मणि विनियुङ्क्ते, यत्रैष विनियुक्तः पूर्तिमलभमानो मोषकेण मुषित इव भृशं चोक्रुश्यते "न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव, भूय एवाभिवर्धते" (मनु० २। ९४) इति ॥ ४० ॥

ननु यस्याधिष्ठानमिन्द्रियाणि, मनो, बुद्धिश्च, स एष वैरी कामो मया कथं हन्तव्यः ? तत्राह—

"तस्मात् त्वमिन्द्रियाण्यादौ, नियम्य भरतर्षभ ! ।
पाप्मानं प्रजहि ह्येनं, ज्ञानविज्ञाननाशनम्" ॥४१॥

अर्थः—भरतर्षभ=हे भरतश्रेष्ठ ! तस्मात्=यस्मादेष, इन्द्रियाणि मनो बुद्धिं चाधिष्ठाय पुरुषमेनं पापे कर्मणि प्रवर्तयति, तस्मात्, त्वम्=अर्जुनस्त्वम्, आदौ=पूर्वम्, इन्द्रियाणि=श्रोत्रादीनि करणानि, पश्चात् मनो बुद्धिं च, नियम्य=निरुध्य, निगृह्य, वशीकृत्य, हि=निश्चयेन, एनम्=एतं पाप्मानं=पापं, पापे कर्मणि प्रवर्तकत्वात् महापापिनं, ज्ञानविज्ञाननाशनं=विविधपदार्थानां प्रकृतितत्कार्याणां ज्ञानं विज्ञानं, तद्भिन्नस्यात्मनो ज्ञानं ज्ञानं, तयोर्ज्ञानविज्ञानयोर्नाशनम् अदर्शनं यस्मात्, तं ज्ञानविज्ञानावरकं, प्रजहि=प्रकर्षेण घातय मारयेत्यर्थः ॥४१॥

ननु ज्ञानमावृत्य यं देहिनं विमोहयति कामः, स को देही ?, तत्राह—

"इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः" ॥४२॥

अर्थः—इन्द्रियाणि=श्रोत्रादीनि करणानि, पराणि=देहादिभ्यः स्वविषयेभ्यः प्रकृष्टानि श्रेष्ठानि, सूक्ष्मत्वादर्थप्रकाशकत्वाच्च, इन्द्रियेभ्यः=श्रोत्रादिकरणेभ्यः परं=प्रकृष्टं श्रेष्ठं, तत्प्रवर्तकत्वात् सूक्ष्मत्वाच्च, मनः=सङ्कल्पविकल्पधर्मकं चित्तम् । मनसस्तु=मनसश्च सङ्कल्पविकल्पधर्मकादन्तःकरणात्, परा=प्रकृष्टा श्रेष्ठा, निश्चयरूपत्वात् सूक्ष्मत्वाच्च, बुद्धिः=निश्चयरूपज्ञानवृत्तिकमन्तःकरणं, यस्तु=यश्च, बुद्धेः=अध्यवसायलक्षणात् ज्ञानवृत्तिकादन्तःकरणात्, परतः=परः प्रकृष्टः श्रेष्ठस्तत्साक्षी सर्वभूतान्तरात्मा क्षेत्रज्ञः, सः=असौ देही पुरुष इत्यर्थः ॥४२॥

अथोपसंहरति—

"एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो ! कामरूपं दुरासदम्" ॥४३॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मयोगो नाम तृतीयोऽध्यायः ॥३॥

अर्थः—एवम् = अमुना प्रकारेण, बुद्धेः=ज्ञानवृत्तिकादन्तःकरणात् परं = प्रकृष्टं श्रेष्ठं सर्वसाक्षिणं चेतनं प्रत्यगात्मानं पुरुषं क्षेत्रज्ञं,बुद्ध्वा = ज्ञात्वा, अवगत्य, आत्मना = मनसा, आत्मानं=मनः,संस्तभ्य = सम्यक् स्तम्भयित्वा, सुसमाधाय, सर्वथा वशीकृत्य, महाबाहो=हे महाभुज ! कामरूपं=कामनामानं दुरासदं = दुःखेनासदः आसादनं प्राप्तिर्यस्य,तं दुष्प्रापं, दुर्जयं, शत्रुं=वैरिणं,जहि=हिन्धि-हिंसय, विध्वंसयेत्यर्थः ॥४३॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णात-पण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिक-भाष्ये तृतीयोऽध्यायः ॥३॥

---

# "अथ चतुर्थोऽध्यायः"।

आत्मज्ञानपूर्वकं भक्तिप्रधानमात्मजातिदेशोन्नतिसाधनानां कर्मणां कर्तव्यबुद्ध्या यावज्जीवमनुष्ठानं कर्मयोगः। स च कर्मसंन्यासपूर्वकात् ज्ञानयोगात् श्रेयान्। अभ्युदयनिःश्रेयसहेतुत्वात्। तं सोपपत्तिकं तृतीयाध्याये भगवानर्जुनं विविक्तमशिषत्। सोऽयं कर्मयोगो वेदप्रतिपाद्यत्वात् पुरातनोऽपि सन् रणभूमौ शिष्टत्वेनाधुनिकः, इति मा नाम कदाचिदर्जुनः शङ्किष्ट, तदर्थं सम्प्रदायकथनेन कर्मयोगस्य तस्य पुरातनत्वं व्यक्तीकरोति त्रिभिः—

"श्री भगवानुवाच"।

**"इमं विवस्वते योगं, प्रोक्तवानहमव्ययम्।**
**विवस्वान् मनवे प्राह, मनुरिक्ष्वाकवेऽब्रवीत्" ॥१॥**

अर्थः—इमम्=एतमध्यायद्वयेन शिष्टम्, अव्ययं=न फलदानेन विना व्येति विनश्यति, न फलं व्यभिचरति यः, तं सफलं, फलाव्यभिचारिणं,योगं=कर्मयोगम्,अहं=वासुदेवोऽहं,विवस्वते=विवस्वान् सूर्यः, तस्मै सूर्याय,प्रोक्तवान्=प्रावोचम। विवस्वान्=सूर्यो, मनवे= मनुनाम्ने स्वपुत्राय प्राह=प्रोवाच, मनुः=वैवस्वतो मनुरिक्ष्वाकवे= इक्ष्वाकुनाम्ने स्वसूनवेऽब्रवीत्=अवादीदित्यर्थः ॥ १ ॥

**"एवं परम्पराप्राप्तमिमं राजर्षयो विदुः।**
**स कालेनेह महता, योगो नष्टः परन्तप!" ॥२॥**

अर्थः—एवम्=अमुना प्रकारेण, परंपराप्राप्तं=प्रवचनपारम्पर्येणागतम्, उपदेशक्रमेण लब्धम्, इमम्=एतं कर्मयोगं, राजर्षयः=राजानश्च ते ऋषयश्च, राजर्षयः क्षत्रियप्रवराः, भीष्ममुख्याः, विदुः=जानन्ति, न सर्वे क्षत्रियाः। यस्मात्-सः=असौ, योगः=कर्मयोगः, परन्तप=हे शत्रुतापन! महता=बृहता कालेन=समयेन, दीर्घकालात्, इह=अस्मिन् लोके, नष्टः=नाशम् अदर्शनं गतः, प्रचाराभावाद् विरलः संवृत्तः सञ्जातः, इत्यर्थः ॥२॥

**"स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः।**
**भक्तोऽसि मे सखा चेति, रहस्यं ह्येतदुत्तमम्" ॥३॥**

अर्थः—स एव=असावेव, नान्यः इत्यवधारणार्थः, पुरातनः=चिरन्तनोऽयम्=एष वेदोक्तो योगः=कर्मयोगः,मया=वासुदेवेन मया, अद्य=अस्मिन् दिवसे रणभूमौ, ते=तभ्यं, प्रोक्तः=अध्यायद्वये प्रावाचि, प्राख्यायि। इति=यस्मात्,त्वं, मे=मम, भक्तः=सेवकः शिष्यः,च=तथा, सखा=समानवयाः, सुहृद्, मित्रम् असि=भवसि,एतद्=विधेयापेक्षया नपुंसकम्, एष कर्मयोगः, हि=निश्चयेन,उत्तमम्=उत्कृष्टतमं रहस्यं=सारभूतोऽभ्युदयनिःश्रेयसहेतुत्वादुत्कृष्टतमः श्रेष्ठतमो वेदार्थः,इत्यर्थः।

ऐहिकामुष्मिकफलकामनया क्रियमाणो यज्ञादिकर्मकलापो ज्ञानहीनकृतात् कर्मत्यागादुत्कृष्टः श्रेष्ठः। तदपेक्षया कर्मसंन्यासपूर्वको ज्ञानयोगो मोक्षाख्यनित्यफलकत्वादुत्कृष्टतरः श्रेष्ठतरः, तदपेक्षया चाभ्युदयनिःश्रेयसफलकत्वादुत्कृष्टतमः श्रेष्ठतमः कर्मयोगः। स एव निखिलवेदस्य सारभूतोऽर्थः तदेव तस्योत्तमं रहस्यम्। तदेतद् हृदि निधायैव छन्दोगाः उपसंहरन्ति 'स खल्वेवं वर्तयन् यावदायुषं, ब्रह्मलोकमभिसम्पद्यते, न च पुनरावर्तते न च पुनरावर्तते" (छां० उ० ८।१५।१) इति ॥३॥

अथ "इमं विवस्वते योगम्" इति भगवदुक्तेऽर्जुनः प्रश्नयति —

"अर्जुनः उवाच"।

**"अपरं भवतो जन्म, परं जन्म विवस्वतः।**
**कथमेतद् विजानीयां, त्वमादौ प्रोक्तवानिति" ॥४॥**

अर्थः—भवतः=तत्रभवतो वासुदेवस्य, जन्म=जननम्, अपरं=न दूरम्, अर्वाचीनम् ,इदानीन्तनं, विवस्वतः=सूर्यस्य,जन्म=जननं,परं=दूरं,प्राचीनं,तदानीन्तनम् । त्वं=वासुदेवस्त्वम्, आदौ=आरम्भे, प्राक्, प्रोक्तवान्=विवस्वन्तं कर्मयोगं प्रावोचः,इति-एतद्=इतीदं तावकं वचः, कथं =केन प्रकारेण विजानीयां=विशिष्टं विश्वसनीयं जानीयां, विद्यां, श्रद्दध्यामित्यर्थः ॥४॥

अथोत्तरमाह भगवान्—

"श्री भगवानुवाच" ।

**"बहूनि मे व्यतीतानि, जन्मानि तव चार्जुन! ।**
**तान्यहं वेद सर्वाणि, न त्वं वेत्थ परन्तप !" ॥५॥**

अर्थः—अर्जुन=हे अर्जुन! मे=मम, मदीयं,च=तथा,ते=तव,त्वदीयं, जन्मानि=जननानि, बहूनि=अनेकानि, व्यतीतानि=व्यतिक्रान्तानि, व्यतिगतानि, व्यतिगमिषत । परन्तप=हे शत्रुतापन ! तानि=अमूनि, सर्वाणि=विश्वानि, अहं=वासुदेवोऽहं, वेद=वेद्मि, जानामि, त्वम्=अर्जुनस्त्वं न वेत्थ=न वेत्सि, न जानासीत्यर्थः ॥५॥

ननु जन्ममरणरहितस्य ते सर्वेश्वरस्य कथं जन्म ?, तत्राह—

**"अजोऽपि सन्नव्ययात्मा, भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय, सम्भवाम्यात्ममायया" ॥६॥**

अर्थः—अजोऽपि=न जायमानोऽपि,स्वतः परतो जन्मरहितोऽपि, सन्=भवन्,अव्ययात्माऽपि सन्=व्ययो विनाशो मरणं,तद्रहित आत्मा=स्वरूपं यस्य, स स्वतःपरतो मरणरहितस्वरूपोऽपि भवन्, भूतानां=प्राणिनामप्राणिनां च सर्वेषामीश्वरः=ईशनशीलो नियन्ताऽधिपतिरपि सन्=भवन्, स्वां=स्वकीयां, प्रकृतिं=सृष्टिनिर्माणशक्तिं दैवीं मायाम् , अधिष्ठाय=स्ववशे विधाय,वशीकृत्य,आत्ममायया=तयैवात्मनो मामयाऽघटनघटनापटीयस्या प्रकृत्या,सम्भवामि=सम्यग्-अप्रच्युतज्ञानक्रिया-शक्त्या भवामि, उद्भवामि, प्रादुर्भवामीत्यर्थः ।

यः खलु जीवात्मा, स स्वतो जन्ममरणरहितोऽपि, शरीरसम्बन्धाज्जायते म्रियते च, नाहं परमात्मा, जन्ममरणहेतुशुभाशुभकर्मा-

भावात् । जीवात्मा कर्मतन्त्रत्वान्नेश्वरः,अहं च कर्माध्यक्षत्वात्सर्वेश्वरः, जीवात्मा प्रकृतिवशो भूत्वा कर्मफलोपभोगार्थं जन्म गृह्णाति न स्वेच्छया, अहं तु प्रकृतिमधिष्ठाय स्वेच्छया सम्भवामि, न जातु परवशः सन्निति जीवात्मजन्मानि मम जन्मनि च महदन्तरं, न जीवात्मसमकक्षं मम जन्म, हे परन्तप ! ॥ ६ ॥

नन्वीदृशं ते जन्म कदा भवति, किमर्थं च भवति ? तत्राह-द्वाभ्याम्—

"यदा यदा हि धर्मस्य, ग्लानिर्भवति भारत ! ।
अभ्युत्थानमधर्मस्य, तदाऽऽत्मानं सृजाम्यहम्" ॥७॥

अर्थः—भारत=हे भरतवंशोद्भव ! यदा यदा=यर्हि यर्हि,हि=निश्चयेन,धर्मस्य=अभ्युदयनिःश्रेयससाधनस्य वैदिकस्य कर्मयोगाख्यस्य धर्मस्य, ग्लानिः=म्लानिः,हानिः, नैर्बल्यं, भवति=जायते, अधर्मस्य=धर्मविपरीतस्यावैदिकस्य कर्मकलापस्य चाभ्युत्थानम्=अभितः सर्वतः उत्थानमुद्यानं, वृद्धिः, प्राबल्यं,भवति,जायते,तदा=तर्हि, आत्मानं=स्वं, सृजामि = जनयामि, पुरुषविशेषरूपेणाविर्भावयामीत्यर्थः ॥७॥

"परित्राणाय साधूनां, विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय,सम्भवामि युगे युगे" ॥८॥

अर्थः—साधूनां=सुष्ठुकर्मणां,वेदोक्तानि लोकसम्मतानि यान्यभ्युदयनिःश्रेयससाधनानि स्वजातिदेशोन्नतिकारणानि कर्माणि, तेषां कार्यबुद्धया लोकसङ्ग्रहबुद्ध्या चानुष्ठातॄणां कर्मयोगिनां, साध्नुवन्ति, यथाविधि कुर्वन्ति,परमुत्कृष्टं श्रेष्ठं कार्यं कर्मेति तद्व्युत्पत्तेः,परित्राणाय। परितः सर्वतो रक्षणाय,च=तथा,दुष्कृतां=दुष्टुकर्मणां,दुष्टं कर्म कुर्वन्ति ये, ते दुष्कृतः,पापाः, तेषामिति तद्व्युत्पत्तेः, लोकवेदोभयनिषिद्धकर्मानुष्ठातॄणां जातिदेशात्मद्रोहिणां पापकर्मणां विनाशाय=विध्वंसनाय । धर्मसंस्थापनार्थाय=धर्मस्याभ्युदयनिःश्रेयससाधनस्य वेदोक्तस्य कर्मयोगाख्यस्य यत् संस्थापनं सम्यक्स्थापनं, यथाशास्त्रमनुष्ठापनं, तदर्थाय, तस्मै प्रयोजनाय, युगे युगे=कालविशेषे कालविशेषे,धर्मग्लानेरधर्माभ्युत्थानस्य च काले काले, सम्भवामि = उद्भवामि, पुरुषविशेषरूपेणाविर्भवामीत्यर्थः ॥८॥

अथात्मजन्मकर्मणोस्तत्त्वतो वेदने फलमाह—

**"जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्वतः ।**
**त्यक्त्वा देहं पुनर्जन्म, नैति मामेति सोऽर्जुन!" ॥९॥**

अर्थः—अर्जुन=हे अर्जुन! यः=यो मनुष्यः, एवं=यथोक्तं तथा, मे=मम, दिव्यं=लोकविलक्षणम्, अलौकिकं, दिवि भवं, न लोके भवमिति-तद्व्युत्पत्तेः, जन्म=वेदोक्तस्य कर्मयोगाख्यस्य धर्मस्य संस्थापनार्थं, प्रवचनार्थं, कालविशेषे कालविशेषे स्वेच्छया जन्म, च=तथा, कर्म=दुष्टुसुष्ठुपुरुषनिग्रहानुग्रहलक्षणं कर्म तत्त्वतः=तत्त्वेन यदभिप्रायं जन्म च कर्म च, तेनैवाभिप्रायेण, वेत्ति=वेदोक्तः कर्मयोगाख्यो धर्मो मयाऽनुष्ठातव्यो, भगवदभिप्रेतत्वादिति जानाति, यथावदनुतिष्ठति, सः=असौ मनुष्यो, देहं=वर्तमानं कायं, त्यक्त्वा=हित्वा, मृत्वा, पुनर्जन्म=पुनर्जननं, पुनरुत्पत्तिं, नैति=न प्राप्नोति, संसारे पुनर्न जायते, किन्तु माम्=ईश्वरं मां प्राप्नोति, मच्यते, इत्यर्थः ॥ ९ ॥

ननु कथमेतावन्मात्रवेदनेन त्वत्प्राप्तिः स्यात्? इत्याकांक्षायां स्वोक्तं विवृण्वन्नेवात्मप्राप्तिप्रकारमाह—

**"वीतरागभयक्रोधाः, मन्मयाः मामुपाश्रिताः ।**
**बहवो ज्ञानतपसा, पूताः मद्भावमागताः" ॥ १० ॥**

अर्थः—वीतरागभयक्रोधाः=रागोऽभिलाषः कामः, भयं त्रासः, क्रोधो द्वेषः, रागश्च भयं च क्रोधश्च, ते वीताः विगताः येभ्यः ते रागभयक्रोधवर्जिताः, मन्मयाः=मत्प्रधानाः-अहं वासुदेवः प्रधानो मुख्यः श्रेष्ठो लौकिकवैदिककर्मस्वनुवर्तनीयो येषां, ते तथा, अहमिव कर्तव्याभावेऽपि लोकसङ्ग्रहबुद्ध्या लौकिकवैदिकनिखिलकर्मकर्तारः, माम्=मामेकमीश्वरम्, उपाश्रिताः=उपास्यत्वेन भक्तव्यत्वेन च, आ समन्तात् श्रिताः, शरणीकृताः, मदेकशरणाः, एकेश्वरभक्ताः, ज्ञानतपसा=ज्ञानं परमात्मविषय, तदेव तपः, तेन पूताः=शुद्धाः क्षीणद्वैतमलाः, सर्वात्मदर्शिनः, सर्वत्र ब्रह्मबुद्धयः सन्तो बहवः=अनेके विवस्वत्प्रभृतयो, मद्भावम्=ईश्वरभावं, ब्रह्मभावम्, आगताः=आयाताः, मोक्षं प्राप्ता इत्यर्थः ॥१०॥

किं बहुना—

"ये यथा मां प्रपद्यन्ते, तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते, मनुष्याः पार्थ ! सर्वशः" ॥११॥

अर्थः—पार्थ=हे पृथापुत्र!, ये=ये मनुष्याः, यथा=येन प्रकारेण, निष्कामकर्मयोगेन वा, स्वर्गकामेन वा, लौकिकार्थाभिलाषेण वा, माम्=ईश्वरं मां, प्रपद्यन्ते=प्रकर्षेण भक्तिभावेनायन्ते, भजन्ते, तान्=अमून्, तथैव=तेनैव प्रकारेण तत्तत्कामनानुरूपफलप्रदानरूपेणैव प्रकारेण, निष्कामकर्मयोगिनां मोक्षप्रदानेन, स्वर्गार्थिनां स्वर्गप्रदानेन, धनपुत्रादिलौकिकार्थाभिलाषिणां धनादिलौकिकार्थप्रदानेनेत्येवं तान्. अहम्=ईश्वरोऽहं, भजामि=भजे, ममैते, इति मत्वा सर्वान् ताननुगृह्णे, यत्कारणं, सकामाः स्युरकामा वा भवेयुरखिलाः मनुष्याः=जनाः, सर्वशः=सर्वैः प्रकारैर्मद्भक्ताः, फलदातृत्वेन मामेव भजमानाःसेवमानाः सन्तो मम=मामकं, वर्त्म=कर्ममार्गम्, अनुवर्तन्ते=अनुरुन्धते, अनुसरन्ति, मदभिप्रेतं कर्मानुतिष्ठन्तीत्यर्थः ॥ ११ ॥

ननु ये यथा त्वां प्रपद्यन्ते, तांस्तथैव चेद् भजसि, तर्हि किमर्थं ते त्वां परित्यज्यान्याः देवताः यजन्ते ?, तत्राह—

"कांक्षन्तः कर्मणां सिद्धिं यजन्ते इह देवताः ।
क्षिप्रं हि मानुषे लोके, सिद्धिर्भवति कर्मजा" ॥१२॥

अर्थः—इह=अस्मिन् मनुष्यलोके, कर्मणां=स्वीयकर्मणां, सिद्धिं=फलप्राप्तिं, कांक्षन्तः=क्षिप्रं वांच्छन्तो मनुष्याः, देवताः=कर्मणि द्वितीया, अन्याः देवताः, यजन्ते=पूजयन्ति, पूजनेन कांक्षितं फलं याचन्ते। हि=यस्मात् मानुषे लोके = अस्मिन् मनुष्यलोके, कर्मजा=देवतायजनकर्मणो जायमाना, सिद्धिः=फलप्राप्तिः, क्षिप्रं = शीघ्रं, भवति = बोभोति, इत्यभिमन्यन्ते, तस्मादन्याः देवताः यजन्ते इत्यर्थः ॥१२॥

ननु मनुष्येषु चातुर्वर्ण्यवदऽन्यदेवतायजनकर्मापि जन्मजं, न फलप्राप्तिक्षिप्राक्षिप्रत्वनिमित्तं ?, तत्राह—

"चातुर्वर्ण्यं मया सृष्टं, गुणकर्मविभागशः ।
तस्य कर्तारमपि मां, विद्धयकर्तारमव्ययम्" ॥१३॥

अर्थः—मया=ईश्वरेण मयका,चातुर्वर्ण्यं=स्वार्थे ष्यञ्, ब्राह्मण-क्षत्रियविट्शूद्राख्यं वर्णचतुष्टयं, गुणकर्मविभागशः=गुणकर्मणोर्विभागेन, विभागो भेदः, स्वभावप्रभवसत्त्वादिगुणभेदेन, तदनुगुणशमदमादिकर्मभेदेन च,सृष्टम्=उत्पादितं,न जन्मना। ननु तथापि ते जीवात्मतुल्यः कर्मलेपहेतुः कर्तृत्वाभिनिवेशः प्राप्तः?, न, तस्य=अमुष्य चातुर्वर्ण्यस्य, कर्तारमपि=गुणकर्मविभागशः स्रष्टारं सन्तमपि, अव्ययम्=अविनाशिनं, माम्=ईश्वरं माम्, अकर्तारम्=अस्रष्टारं, स्रष्टृत्वं कर्तृत्वं, तद्वर्जितं, विद्धि=विजानीहीत्यर्थः ॥१३॥

ननु कथमहं कर्तारं सन्तं त्वामकर्तारं विद्याम्, यावत्,"चातुर्वर्ण्यं मया सृष्टम्" इति ब्रूषे, किं चैवं वेदनेन स्यात्? तत्राह—

"न मां कर्माणि लिम्पन्ति, न मे कर्मफले स्पृहा।
इति मां योऽभिजानाति, कर्मभिर्न स बध्यते" ॥१४॥

अर्थः—कर्माणि=सृष्टिकर्म स्याद्,रक्षाकर्म वा भवेत्, संहारकर्म वा विद्येत,कान्यपि कर्माणि,माम्=ईश्वरं मां,न।लिम्पन्ति=न स्पृशन्ति, न बध्नन्ति,कर्तारं सन्तमपि मां कर्तारं न विदधाति, कुर्वन्ति, यस्मात् मे=मम,कर्मफले=कस्यापि कर्मणः फले,स्पृहा=कांक्षा, वाञ्छा, कामो, गर्द्धो रागो, न=न विद्यते, कर्मफलस्पृहानिबन्धनो हि लोके निखिलः कर्मलेपस्तद्धेतुश्च कर्तृत्वाभिनिवेशः। इति=इत्येवं,कर्माणि कुर्वन्तमपि, कर्मफलस्पृहाभावेन क्रियमाणैः कर्मभिर्लेपरहितं माम्=ईश्वरं माम्, यः=यो मनुष्योऽभिजानाति=अभितः सर्वतोऽनुकरणीयं प्रत्येति, वेत्ति, सः=असौ मनुष्यः, क्रूराणि वाऽक्रूराणि वा,स्ववर्णोचितानि, वेदलोकानिषिद्धानि कर्माणि,फलस्पृहाभावेन केवलकर्तव्यबुद्ध्या कुर्वन्नपि,कर्मभिः=क्रियमाणैस्तैस्तैः कर्मभिः,नबध्यते=न लिप्यते,तेषां कर्ता सन्नपि कर्ता न सम्पद्यते इत्यर्थः ॥१४॥

अथार्जुनमभिमुखीकृत्याह--

"एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।
कुरु कर्मैव तस्मात् त्वं, पूर्वैः पूर्वतरं कृतम्" ॥१५॥

अर्थः-एवं=यथोक्तप्रकारेण, फलस्पृहां विना केवलकर्तव्यबुद्ध्या कर्माणि वेदलोकानिषिद्धानि स्ववर्णोचितानि कुर्वन्तोऽपि मनुष्याः

क्रियमाणैस्तैस्तैः कर्मभिर्नबध्यन्ते, यथेश्वरो वासुदेवः श्रीकृष्णः, इत्येवं प्रकारेण, ज्ञात्वा = बुद्ध्वा, पूर्वैरपि = प्राक्तनैरपि, मुमुक्षुभिः = ऐहिकामुष्मिकदुःखादात्मनो मुक्तिमिच्छद्भिर्जनकादिभिः, कर्म = स्ववर्णोचितं, लोकवेदसम्मतम्, अभ्युदयनिःश्रेयससाधनं, कर्म, कृतं = विहितं, फलस्पृहामन्तरेण केवलकर्तव्यबुद्ध्या निर्वर्तितम्, तस्मात् = यस्मात् पूर्वैः कृतं, तस्मात्, त्वम् = अर्जुनोऽपि त्वं, कर्मैव = स्ववर्णोचितं कर्मैव, न कर्मसंन्यासमित्यवधारणार्थः कुरु = फलेच्छामन्तरेण केवलकर्तव्यबुद्ध्या निर्वर्तय, यत्कारणं, पूर्वैः = प्राक्तनैः पूर्वजैर्जनकादिभिरपि पूर्वतरं = पूर्वेभ्यः प्राक्तनेभ्यः स्वपूर्वजेभ्यो मन्वादिभ्यः प्राप्तं कर्म, कृतं विहितं, निर्वर्तितमित्यर्थः ॥ १५ ॥

ननु यावत् कर्म न विज्ञायते, यावदकर्म नावबुध्यते, तावत् पूर्वैः पूर्वतरं कृतमपि कर्म, मया कर्तुं न शक्यते, तस्मादादौ कर्मादिस्वरूपं वक्तव्यम्, अस्मादृशां तत्र गतेरभावात् ?, सत्यमित्याह—

**"किं कर्म किमकर्मेति, कवयोऽप्यत्र मोहिताः ।**
**तत् ते कर्म प्रवक्ष्यामि, यद् ज्ञात्वा मोक्ष्यसेऽशुभात्" १६**

अर्थः—किं कर्म = कर्म किमुच्यते, किमकर्मेति = अकर्मेति च किमुच्यते, कर्मणः किं स्वरूपम्, अकर्मणः किं स्वरूपम्, अत्र = अस्मिन् कर्माकर्मस्वरूपविषये, कवयोऽपि = वेदविदः पण्डिता अपि, किमुतावेदविद, पण्डिताः इत्यपेरर्थः, मोहिताः = अविवेको विवेकेन ज्ञानाभावो मोहः, तं प्राप्ताः, प्रविविच्य ज्ञातुमशक्ताः। यस्मादेवं तस्मात् ते = तुभ्यं, तत् = अदः, कर्म = अकर्मेत्यपि द्रष्टव्यं, कर्माकर्मोभयं, प्रवक्ष्यामि = प्रविविच्याख्यास्यामि, कथयिष्यामि, यद् ज्ञात्वा = यत्कर्माकर्म, स्वरूपतो बुद्ध्वा, अशुभात् = कर्मकरणे प्रतिबन्धकत्वेनाशुभरूपादमङ्गलात्मकात् कर्माकर्माज्ञानप्रभवात् कर्मकृतबन्धनभयात्, मोक्ष्यसे = मुच्यसे, इत्यर्थः ॥१६॥

ननु कर्माकर्माभ्यामन्यद् यत् स्वरूपतो मया विज्ञातव्यं, तदपि वक्तव्यम् ? तत्राह—

**"कर्मणो ह्यपि बोद्धव्यं, बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं, गहना कर्मणो गतिः" ॥१७॥**

अर्थः—भिन्नक्रमोऽपिः, हि = निश्चयेन, कर्मणः=वेदविहित-स्यानुष्ठातुं योग्यस्य,स्ववर्णोचितस्य कर्मणः स्वरूपमिति शेषः,बोद्धव्यं= त्वयाऽवगन्तव्यं,च=तथा,विकर्मणः = विपरीतकर्मणः,वेदलोकनिषिद्ध-स्यानुष्ठातुमयोग्यस्य कर्मणः स्वरूपमपि, बोद्धव्यं = त्वया विज्ञातव्यम्। च=तथाऽकर्मणः=कर्मत्वेऽपि न कर्मणः,कर्म भवदपि यत् कर्म न भवति, कर्मकार्याकरणात्,तस्य स्वरूपमपि बोद्धव्यम्=अधिगन्त म्, कर्मणः= अकर्मण इत्यपिद्रष्टव्यम्,"किं कर्म किमकर्म"इति कर्माकर्मणोर्द्वयोर्गते-र्गहनत्वोक्तेः,कर्माकर्मविकर्मसु कर्मणोऽकर्मणश्च, गतिः=अवगतिः बुद्धि-र्ज्ञप्तिर्गहना=दुष्प्रापा,बह्वायासेन सम्प्रतिपत्तव्या, न विकर्मणः,कर्माकर्म-गतौ सत्यां तद्विलक्षणत्वेन तद्गतेः सुसम्प्रतिपत्तव्यत्वादित्यर्थः।

यत् खलु कर्म भगवता वेदेन कर्तव्यतयोपदिश्यते सदाचार-परम्परया च सम्प्राप्यते, लोकैश्च दूरदर्शिभिः सर्वैरनुमन्यते, अभ्यु-दयनिःश्रेयसहेतुतां चोपडोढौक्यते, स्ववर्णोचितं च, तत् सकलमिह कर्माभिप्रेयते। यच्च कर्म भवदपि कर्तृत्वाभिनिवेशेन, फलाभिनिवेशेन, फलाभिलाषेण च तुषेण विना, लोकसङ्ग्रहबुद्ध्या वा कर्तव्यबुद्ध्या वा, करणात् धान्यमिव वितुषीभूतं भाविजन्माङ्कुरजननसामर्थ्याभावेन न जातु कर्तारं लिम्पति, न कदाचिद् बध्नाति, तद् अकर्म, कर्म सदपि न कर्म, तदेव नैष्कर्म्यं, स एव कर्माभावः। तदेतत् कर्माकर्म चोभय-मनुपदं वक्ष्यते; यत् खलु कर्म, वेदेन निषिध्यते, लोकैश्च नेनिन्द्यते, देशजात्यात्मावनतिहेतुतां च नातिशेते, यथा देशद्रोहो, जातिद्रोहः, देशस्य जातेश्चोन्नतिहेतूनामभ्युदयनिःश्रेयससाधनानां लौकिकवैदिक-कर्मणामज्ञानाद्वा, प्रमादाद्वा,कृतकृत्यताभ्रमाद्वा, परित्यागः संन्यासः, ब्रह्मज्ञानपृष्ठभावेन सर्वस्वनाशहेतोरकर्मण्यताया उपदेशः,जात्यधोगति-हेतुभूतस्योच्चावचभावस्य सर्वथाऽज्ञानमूलकस्य प्रसारः, जगन्मिथ्या, जगद् दुःखमित्यादिदार्शनिकसिद्धन्तानां दर्शनकृद्बुद्धिमात्राविलसि-तानां वेदबाह्यानां सर्वासु प्रजासु साधारण्येन प्रचारः, नितान्तावश्य-कस्य जातिसङ्घस्य स्वार्थवशेन व्यापादः, शास्त्रप्रतिषिद्धस्य लोकनि-न्दितस्य भिक्षुसन्तानस्यान्धपरम्परावशेनोत्पादः, इत्यादिसर्वं कर्म, विकर्मनाम्नाऽत्राभिधित्स्यते। कर्माकर्मद्वयं विस्तरेणाग्रे प्रवक्ष्यते, ताभ्यां विलक्षणं यत्कर्म, तद् विकर्मेति स्वयमूह्यम्॥ १७॥

अथ यथाप्रतिज्ञं कर्माकर्मणी प्रवक्तुमुपक्रमते—

"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
"स बुद्धिमान् मनुष्येषु, स युक्तः कृत्स्नकर्मकृत्" ॥१८॥

अर्थः—कर्मणि = वेदविहिते लोकसम्मतेऽभ्युदयनिःश्रेयससाधने स्ववर्णोचिते कर्मणि, अकर्म = फलस्पृहामन्तरेण लोकसङ्ग्रहबुद्ध्या क्रियमाणतया बन्धकाभावादकर्म, न कर्म, अबन्धकत्वात्कर्माभावमिति यः=यो मनुष्यः, पश्येत्=पश्यति, चक्षुषा मनसा लोकयति, वेत्ति, च = तथा, अकर्मणि = फलस्पृहामन्तरेण लोकसङ्ग्रहबुद्ध्या क्रियमाणतया कर्तरि फलाजननात् कर्मत्वेऽपि न कर्मणि, कर्माभावे, कर्म = लोकानां प्रवृत्तिहेतुत्वेनाभ्युदयनिःश्रेयसयोर्जनकत्वात् कर्मेति यः = यो मनुष्यः पश्येत् = पश्यति, चक्षुषा मनसा लोचयति, जानाति । स = असौ, मनुष्येषु = सर्वेषु जनेषु, बुद्धिमान् = प्रेक्षावान्, पण्डितः, सः = असौ, कृत्स्नकर्मकृत् = स्ववर्णोचितक्रूराक्रूरसर्वकर्मकर्ताऽपि, युक्तः = कर्मयोगयुक्तः, कर्मयोगी, सर्वदा समाहितचित्तः, सर्वदा स्थितप्रज्ञः इत्यर्थः।

यत् कर्म विना फलगर्द्धेन केवललोकसङ्ग्रहबुद्ध्या क्रियते, तत् कर्तारं न बध्नाति, लोकांश्चाभ्युदयानि श्रेयससाधने कर्मणि प्रवर्तयति तस्मात् कर्तृदृष्ट्या तदकर्म भवदपि लोकदृष्ट्या भवति कर्म । तदेतदेकस्मिन् कर्मणि कर्माकर्मोभयदर्शनम् ॥१८॥

नन्वेवमेकस्मिन् कर्मणि कर्माकर्मोभयं पश्यन्तं के बुद्धिमन्तमाहुः?, तत्राह—

"यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं, तमाहुः पण्डितं बुधाः" ॥१९॥

अर्थः—यस्य = यस्य मनुष्याग्रेसरस्य यथोक्तदर्शिनः, सर्वे = सर्वाणि क्रूराक्रूराणि, समारम्भाः = कर्माणि, सम्यगारभ्यन्ते, यथाविधानं प्रारभ्यन्ते इति तद्व्युत्पत्तेः, कामसङ्कल्पवर्जिताः=कामो विषयः फलं, काम्यते इति तद्व्युत्पत्तेः, तस्य सङ्कल्पो गर्द्धः, तद्वर्जिताः, फलस्पृहारहितानि यस्य, तम् = अमुं, ज्ञानाग्निदग्धकर्माणं=ज्ञानं कर्माकर्मदर्शनं, तदेवाग्निः तेन दग्धानि दग्धबीजानि कर्माणि कर्मधान्यानि यस्य, तं कर्माकर्मदर्शनानलभर्जितकर्मबीजं, बुधाः = पण्डिताः कवयः, पण्डितं= बुद्धिमन्तं, दूरदर्शिनमाहुः = कथयन्तीत्यर्थः ॥१९॥

किञ्च--

"त्यक्त्वा कर्मफलासङ्गं, नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि, नैव किञ्चित् करोति सः" ॥२०॥

अर्थः—कर्मफलासङ्गं = कर्मणि तत्फले चासङ्गम्-आसक्तिं, कर्तृत्वभोक्तृत्वाभिमानम्, अहन्ताममताबुद्धिं, त्यक्त्वा=हित्वा, मुक्त्वा, नित्यतृप्तः=सर्वदाऽलंबुद्धिर्निराकांक्षः, निराश्रयः=आश्रयोऽवलम्बः, ततो निर्गतः, आश्रयितव्यवर्जितः, स्वावलम्बनो यः, सः=असौ, कर्मणि= वेदोक्ते लोकसम्मतेऽभ्युदयनिःश्रेयससाधने, स्ववर्णोचिते, क्रूरे वाऽक्रूरे वा कर्मणि, कर्मपूगे, अभिप्रवृत्तोऽपि=अभितः सर्वतः कर्तव्यबुद्ध्या वा, लोकसङ्ग्रहबुद्ध्या वा प्रकर्षेण तत्परत्वेन वर्तमानोऽपि, नैव=न च, किञ्चित्= किमपि कर्म, करोति=निर्वर्तयति, कर्तृत्वाभिमानाभावात्, फलाभिलाषाभावाच्च, सर्वं तत्कर्म परमार्थतोऽकर्मैव, न कर्मेत्यर्थः ॥ २० ॥

किञ्च—

"निराशीर्यतचित्तात्मा, त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म, कुर्वन्नाप्नोति किल्बिषम्" ॥२१॥

अर्थः—निराशीः=निर्गताः आशिषः इच्छाः कामाः यस्मात्, स निरिच्छो निष्कामो, निवृत्तसर्वैषणः, यतचित्तात्मा=चित्तं मन, आत्मा कार्यकरणसङ्घातः सेन्द्रियो देहः, चित्तं चात्मा च, तौ यतौ संयतौ निगृहीतौ वशीकृतौ यस्य, स वशीकृतशरीरेन्द्रियमनाः, त्यक्तसर्वपरिग्रहः= त्यक्तोऽभिष्वङ्गहीनो निखिलः परिग्रहः पुत्रदारगृहादिर्यस्य, सत्यपि सर्वस्मिन् परिग्रहे यस्य तत्राभिष्वङ्गो लाम्पट्यं नास्ति, न विद्यते, स सर्वेषु परिग्रहेषु पुत्रदारगृहादिष्वभिष्वङ्गरहितो, न लम्पटो, न तत्र सक्तो, यो मनुष्यः, सः, शारीरं=शरीरेण निर्वर्त्यं, केवलं=कर्तृत्वाभिमानवर्जितम्, अहन्ताममतासम्बन्धशून्यं, कर्म=वेदोक्तं स्ववर्णोचितं क्रूरं वाऽक्रूरं वा निखिलं कर्म, कुर्वन्नपि=निर्वर्तयन्नपि, किल्बिषं=कर्मजन्यं पापं, कर्मकृतबन्धनं, जन्ममरणसंसारं, नाप्नोति=न प्राप्नोति, कर्मत्वेऽपि सर्वं तस्य तत् कर्माकर्म सम्पद्यते, इत्यर्थः ॥ २१ ॥

किं बहुना—

**"यदृच्छालाभसन्तुष्टो, द्वन्द्वातीतो विमत्सरः ।**
**समः सिद्धावसिद्धौ च, कृत्वाऽपि न निबध्यते" ॥२२॥**

अर्थः—यदृच्छालाभसन्तुष्टः = यदृच्छया विनैवेच्छया, प्रार्थनया विनैव, योऽर्थानां लाभः प्राप्तिः, तेन सन्तुष्टः समाप्ताखिलाभिलाषः, संजातालंप्रत्ययः, द्वन्द्वातीतः = शीतोष्णक्षुत्पिपासासुखदुःखहानिलाभजयपराजयादीनि यानि द्वन्द्वानि युग्मानि, तानि सर्वाण्यतिक्रान्तः, द्वन्द्वैरुपहन्यमानोऽप्यक्षुभितचित्तः, स्वस्थमनाः, विमत्सरः = परोत्कर्षं दृष्ट्वा जायमानः सन्तापो मत्सरः, स विगतो वीतो यस्य, स परोत्कर्षदर्शनजन्यसन्तापविरहितः, सिद्धौ = कर्मफलस्य प्राप्तौ, च = तथा, असिद्धौ = कर्मफलस्याप्राप्तौ, समः = तुल्यः, प्राप्तौ न हृष्यति, अप्राप्तौ च न विषीदति, न हृष्टो न विषण्णो हर्षविषादवर्जितो यो मनुष्यः, स कृत्वाऽपि = स्ववर्णोचितानि कर्माणि कृत्वाऽपि, न निबध्यते = न सम्बध्यते, न लिप्यते, न कर्मकृतबन्धनतामश्नुते, इत्यर्थः ॥ २२ ॥

अथोक्तमेवार्थं विवृण्वन्नाह—

**"गतसंगस्य मुक्तस्य, ज्ञानावस्थितचेतसः ।**
**यज्ञायाचरतः कर्म, समग्रं प्रविलीयते" ॥२३॥**

अर्थः—गतसङ्गस्य = आसक्तिः सङ्गः, स गतो विगतो निवृत्तो यस्य, तस्य कर्तृत्वभोक्तृत्वाभिनिवेशशून्यस्य, मुक्तस्य = रागद्वेषादिभिः परित्यक्तस्य, रागद्वेषादिनिखिलद्वन्द्वहीनस्य, ज्ञानावस्थितचेतसः = आत्मनो ब्रह्मणो ज्ञानं ज्ञानं, तस्मिन्नवस्थितं निश्चलं चेतो मनो यस्य, तस्य ब्रह्मज्ञाने सुस्थिरचित्तस्य, यज्ञाय = यज्ञार्थं, पञ्चमहायज्ञनिर्वृत्त्यर्थं, सृष्टियज्ञस्योत्तरोत्तरविवृद्धिहेतोर्महायज्ञपञ्चकस्य यथाविधि नियमेनानुष्ठानार्थम्, आचरतः = निर्वर्तयतः, कुर्वतः, कर्म = वेदोक्तं स्ववर्णोचितं सर्वं कर्म, समग्रं = समस्तं, निःशेषं, प्रविलीयते = प्रकर्षेणात्यन्तं विलीयते, कर्मभावाद्धीयते, कर्मभावं परित्यज्याकर्मभावमश्नुते, अकर्मसम्पनीपद्यते, इत्यर्थः ॥
ननु ज्ञानावस्थितचेताः पुरुषः कथं कर्माचरति, येन यज्ञार्थं तस्याचर्यमाणं सर्वं कर्म, समग्रं प्रविलीयते, इत्याकाङ्क्षायामग्निहोत्रकर्ममुखेन तस्य कर्माचरणं स्पष्टीकरोति—

**"ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।**
**ब्रह्मैव तेन गन्तव्यं, ब्रह्मकर्मसमाधिना" ॥२४॥**

अर्थः—अर्पणं = भावे ल्युट्, समर्पणं, समर्पः, स्वाहाकारेण मन्त्रेणाग्नौ हविषः प्रक्षेपो हवनं, ब्रह्म = "सुसमिद्धाय शोचिषे घृतं तीव्रं जुहोतन" (ऋ० ५। ५। १) इत्यादिश्रुतेरीश्वरेण ब्रह्मणाऽऽज्ञाप्यत्वाद्, ब्रह्माज्ञारूपत्वाद् ब्रह्म, हविः = होतव्यं घृतादि वस्तु, यत् स्वाहाकारेण मन्त्रेणाग्नौ हूयते समर्प्यते, तद्, ब्रह्म = ब्रह्मोत्पाद्यत्वाद् ब्रह्म, ब्रह्माग्नौ = "यस्याग्निः शरीरम्" (बृ०उ० ३।७ ५') इत्यादिश्रुतेरीश्वरस्य ब्रह्मणः शरीरत्वादग्निर्ब्रह्म, तस्मिन्नग्नौ ब्रह्मरूपे हव्यवाहने, ब्रह्मणा = ब्रह्मरूपेण हवनकर्त्रा, हुतं = होमितं, प्रक्षिप्तं, समर्पितम्। तेन = अमुना ब्रह्मरूपेण होत्रा हवनकर्त्रा, प्रक्षेप्त्रा, गन्तव्यं = प्राप्तव्यं फलं, ब्रह्मैव = ब्रह्मस्वरूपमेव, "ब्रह्मैव सन् ब्रह्माप्येति" (बृ० उ० ४। ४। ६) इति श्रुतेः, तेन केन? ब्रह्मकर्मसमाधिना = ब्रह्मरूपे कर्मणि मया कार्यमित्यध्यवसायात्मको मनसश्चित्तस्यैकाग्रचलक्षणः समाधिर्यस्य, तेनेत्यर्थः।

ईश्वरस्यापरं नाम ब्रह्म, यथाऽपरं नाम परमात्मा, स च सर्वेषां भूतानामन्तरात्मा। तस्य द्वे शक्ती-भोग्यशक्तिर्भोक्तृशक्तिश्च। त्रिगुणात्मिका मायानाम्नी प्रकृतिर्भोग्यशक्तिः, चेतनो जीवात्मा क्षेत्रज्ञः पुरुषो भोक्तृशक्तिः। ते उभे सृष्टिवेलायां सृष्टिसङ्कल्पेन ब्रह्मणः सकाशाद् जायेते, प्रलयवेलायां च ब्रह्मण्येव तस्मिन् पुनः प्रविलीयेते। सप्तमाध्याये च गीतायां भोग्यशक्तिरपरप्रकृतिनाम्ना, भोक्तृशक्तिश्च परप्रकृतिनाम्ना परिभाषयिष्यते। प्रश्नोपनिषदि च भोक्तृशक्तिः प्राणनाम्ना, भोग्यशक्तिश्च रयिनाम्ना व्यपदिश्यते। यत्रैतदुदाहृतं भवति "प्रजाकामो वै प्रजापतिः, स तपो अतप्यत, स तपस्तप्त्वा, मिथुनमुत्पादयते रयिं च प्राणं चेति। एतौ मे बहुधा प्रजाः करिष्यत इति" (प्रश्नो० १।४) इति। हिन्दुधर्मपुस्तके भगवति ऋग्वेदे तु भोग्यशक्तिः प्रकृतिः स्वधासंज्ञया, भोक्तृशक्तिश्चेतनो जीवात्मा च प्रयतिसंज्ञया समाम्नायते "तिरश्चीनो विततो रश्मिरेषामधः स्विदासीदुपरि स्विदासीत्। रेतोधा आसन् महिमानः आसन्, स्वधा अवस्तात् प्रयतिः परस्तात्" (ऋ०१०।१२९।५)

इति । तिरश्चीनः=अन्तर्हितः । रश्मिः=ब्रह्मरूपस्तन्तुः । एषां = सृज्यमानानां दृश्यपदार्थानाम् । रेतोधाः=जीवात्मानः । महिमानः=भोग्याः पदार्थाः । स्वधा = भोग्यशक्तिः प्रकृतिर्माया । प्रयतिः = भोक्तृशक्तिः क्षेत्रज्ञो जीवात्मा । अवस्तात् = निकृष्टा । परस्तात् = उत्कृष्टा । तस्याः एतस्याः ब्रह्मणो जायमानायाः प्रादुर्भूतायाः द्वय्यः शक्तेः किल विस्तारः सर्वं चराचरं जगत् । तस्मादेतत् सर्वं ब्रह्मैव, नान्यत् किञ्चित् । यत्कारणं शक्तिक्रमेण ब्रह्मण एवैतज्जायते, ब्रह्मण्येव चैतत् प्रविलीयते । श्रुतिश्च सर्वं चराचरं जगद् यस्माद् ब्रह्मणो जायते, ब्रह्मण्येव च यस्मात् प्रविलीयते, तस्माद् ब्रह्मेति साक्षात् प्रतिपादयति "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्तः उपासीत" ( छां० उ० ३१ । १४ । १ ) इति । "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद् विजिज्ञासस्व, तद् ब्रह्म" (तै० उ० ३।१) इति च । मन्त्रवर्णेऽपि च भूतं भवद् भविष्यत् सर्वं जगदीश्वरः एव, पुरुष एवेति स्पष्टमाम्नायते "पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम्" (ऋ० १० । ९० । २ ) इति । तदेतत् श्रुत्या प्रतिपादितं, मन्त्रेण चाम्नातं सर्वं ब्रह्मेति योऽवगच्छति, यस्याभ्यासपरिपाकवशेन, भगवतो ब्रह्मणोऽनुग्रहेण च, चित्तं ब्रह्मज्ञाने ऽस्मिन् निराकुलं पर्यवतिष्ठते, स तत्रभवान् ज्ञानावस्थितचेताः कर्मयोगि "ब्रह्मैवेदममृतं पुरस्ताद्, ब्रह्म पश्चाद्, ब्रह्म दक्षिणतश्चोत्तरेण । अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" ( मुं० उ० २ । ११ ) इति सर्वदा प्रेक्षमाणो, भक्त्या परया समन्वितो निजार्थाभावेऽपि लोकसङ्ग्रहार्थं यज्ञाय लौकिकं वैदिकं क्रूरमक्रूरं सर्वं कर्म ब्रह्मबुद्ध्या यावज्जीवमाचरति, प्रारब्धकर्मावसाने च परं ब्रह्माप्येति, मोक्षं प्राप्नोति । तस्य लोकसङ्ग्रहार्थं यज्ञायाचर्यमाणं सर्वं कर्म, ज्ञानयोगमाहात्म्येन निःशेषं प्रविलीयते, कर्मभावं हित्वाऽकर्मभावमापद्यते, स एष तस्य सर्वस्य कर्मणः प्रविलयः ॥ २४ ॥

अथोक्तस्य ज्ञानरूपयज्ञस्य सर्वेभ्यो यज्ञेभ्यः श्रैष्ठ्यं वक्तुकामो यज्ञायाचरतः कर्मेत्युपस्थितान् सर्वान् यज्ञान् पर्यायेण दर्शयति—

"दैवमेवापरे यज्ञं, योगिनः पर्य्युपासते ।
ब्रह्माग्नावपरे यज्ञं, यज्ञेनैवोपजुह्वति" ॥ २५ ॥

अर्थः—अपरे = निष्कामकर्मयोगिभ्योऽन्ये, योगिनः=सकाम-कर्मयोगिनः, फलकामनया कर्मानुष्ठायिनो, दैवमेव यज्ञं = ज्ञानयज्ञ-व्यवच्छेदोऽवधारणार्थः, देवाः इन्द्राग्न्यादयः इज्यन्ते येन, स दैवः, तं यज्ञं=दर्शपूर्णमासज्योतिष्टोमादिनामकं यज्ञं, यागं, पर्युपासते=परितः सर्वतः श्रद्धादिसर्वाङ्गयोगतः कुर्वते, निर्वर्तयन्ति । अपरे = सकामकर्म-योगिभ्योऽन्ये ज्ञानयोगिनो, ब्रह्माग्नौ=ब्रह्मैवाग्निर्ब्रह्माग्निस्तस्मिन् ब्रह्माख्ये जातवेदसि, यज्ञं=स्ववर्णोचितं यज्ञनामानं कर्मकलापं, यज्ञेनैव= सहार्थे तृतीया, यज्ञसाधनेन पुत्रकुलत्रादिना सहैव, उपजुह्वति = उप-रम्य होमयन्ति, प्रक्षिपन्ति, लौकिकं वैदिकं च स्ववर्णोचितं यज्ञप्रभृति सर्वं कर्म तत्साधनेन पुत्रकलत्रादिना सार्धं संन्यस्य ब्रह्मज्ञानमेवैकं शश्वदभ्यस्यन्ति, ब्रह्मरूपे हुताशने स्वाधिकारकं निखिलं कर्म निःशेषं भस्मीकर्तुं फूत्कारस्थानीयं ब्रह्मज्ञानमेव केवलं रात्रिन्दिवं घोषयन्तीत्यर्थः।

पूर्वार्धे ज्ञानशून्यानां कामकामिनां कर्मयोगिनाम्, उत्तरार्धे च कर्मत्यागिनां ब्रह्मज्ञानिनां यज्ञोऽदर्शि। तेषां मध्ये ज्ञानहीनानां कर्मिणां द्रव्यदेवतामयः कर्मयज्ञः, कर्मशून्यानां ब्रह्मज्ञानिनां च ब्रह्मज्ञानमयो ज्ञानयज्ञ इति विवेकः ॥ २५ ॥

## "श्रोत्रादीनीन्द्रियाणि, संयमाग्निषु जुह्वति ।
## शब्दादीन् विषयानन्ये, इन्द्रियाग्निषु जुह्वति" ॥२६॥

अर्थः—अन्ये = संयमपराः अपरे योगिनः, श्रोत्रादीनि = श्रोत्र-मादिर्येषां, तानि कर्णप्रभृतीनि, इन्द्रियाणि=ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि च वागादीनि, संयमाग्निषु=संयमो निरोधो, निग्रहो, विषयेभ्यो निवर्तन-मिन्द्रियाणाम्, इन्द्रियबहुत्वात् संयमाः बहवः, ते एवाग्नयः, तेषु संयमा-ग्निषु जुह्वति=होमयन्ति, प्रक्षिपन्ति, दृष्टेषु चानुश्रविकेषु च दिव्या-दिव्येषु शब्दादिविषयेषु श्रोत्रादीनीन्द्रियाणि मा नाम प्रवर्तिष्टेति तेषां संयमयने निग्रहणे सततमीहन्ते, सर्वदा श्रोत्रादीन्द्रियसंयमप्रधानाः वर्तन्ते । अन्ये=ततोऽन्ये, अपरे, शब्दादीन् = शब्दआदिर्येषां स्पर्शादीनां, तान्, विषयान्=ग्राह्यान् शास्त्राप्रतिषिद्धान् लोकाविरुद्धान् अर्थान्, इन्द्रियाग्निषु=इन्द्रियाणि श्रोत्रादीनि, तान्येवाग्नयः, तेषु जुह्वति=होम-यन्ति, प्रक्षिपन्ति, श्रोत्रादीनामिन्द्रियाणां गोचरीकुर्वन्ति, श्रोत्रादिभिरि-न्द्रियैर्लोकशास्त्राविरुद्धानां विषयाणां ग्रहणं होमं मन्यन्ते, इत्यर्थः॥२६॥

"सर्वाणीन्द्रियकर्माणि, प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ, जुह्वति ज्ञानदीपिते" ॥ २७ ॥

अर्थः—अपरे=अन्ये योगिनः, इन्द्रियकर्माणि=इन्द्रियाणां ज्ञानेन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां, कर्मेन्द्रियाणां वाक्पाणिपादपायूपस्थाभिधानां च, कर्माणि शब्दस्पर्शरूपरसगन्धग्रहणात्मकानि वचनादानविहरणोत्सर्गानन्दाख्यानि च व्यापारनामानि, च=तथा, प्राणकर्माणि=प्राणो वायुराध्यात्मिकः शरीरान्तःसंचारी, तस्याकुञ्चनप्रसारणादीनि कर्माणि, न तु श्वासप्रश्वासरूपाणि, तन्निरोधोपायस्य प्राणायामस्याभिधास्यमानत्वात्, तान्येतानि सर्वाणि=निखलानि प्राणेन्द्रियकर्माणि, ज्ञानदीपिते=ज्ञानं विषयेषु दोषदर्शनं, तेन विषयदोषदर्शनेन ज्ञानेन दीपिते प्रज्वलिते सुसमिद्धे, आत्मसंयमयोगाग्नौ=आत्मा मनः, तस्यात्मनो मनसोऽन्तःकरणस्य संयमो निरोधो वशीकारः, स एव योगः, स एवाग्निः, तस्मिन् मनोनिरोधयोगाख्ये हव्यवाहने, जुह्वति=होमयन्ति, प्रक्षिपन्ति, मनोनिरोधेन निरुद्धानि तानि कुर्वन्ति, मनसो निरोधेन वशीकारेण प्राणस्येन्द्रियाणां च निरोधं वशीकारं होमं जानन्ति, मनोऽधीनामिन्द्रियाणां प्राणस्य च स्वस्वविषयेषु प्रवृत्तिं, ततो वा निवृत्तिं, होमं मन्यन्ते इत्यर्थः ॥ २७ ॥

"द्रव्ययज्ञास्तपोयज्ञाः, योगयज्ञास्तथाऽपरे ।
स्वाध्यायज्ञानयज्ञाश्च, यतयः संशितव्रताः" ॥२८॥

अर्थः—तथा=किञ्च, अपरे=अन्ये केचन, संशितव्रताः=संशितं निशतं, नितान्तं तीक्ष्णम्, अतिशयदृढं व्रतं नियमो येषां, ते संशितव्रताः, अतिदृढनियमाः, यतयः=देशस्य जातेश्चाभ्युदयार्थं यत्नशीलाः, द्रव्ययज्ञाः=द्रव्यं धनं, तस्य देशजात्यभ्युदयार्थं दानं यज्ञो येषां, ते द्रव्ययज्ञाः, देशजात्युन्नत्यै यज्ञबुद्ध्या द्रव्यस्यात्मधनस्य दातारः, केचन संशितव्रताः यतयस्तपोयज्ञाः = शीतोष्णसुखदुःखक्षुत्पिपासादिद्वन्द्वसहनं तपः, जातेर्देशस्य चोद्धारार्थं तपो यज्ञो येषां, ते तपोयज्ञाः, जातिदेशयोरुन्नयनार्थं यज्ञबुद्ध्याऽतप्यं तपस्तन्वानाः, केचन संशितव्रताः यतयो योगयज्ञाः=योगोऽत्रोद्योगोऽनेकविधशिल्पगोचरः प्रयत्नः, अष्टाङ्गयोगयज्ञस्य प्राणायामपूर्वकतया प्राणायामयज्ञेनैव गतार्थत्वात्, स एव यज्ञो येषां,

ते योगयज्ञाः, जातिदेशयोर्धनसमृद्ध्यर्थं यज्ञबुद्ध्या नानाविधशिल्पविषयमुद्योगं कुर्वाणाः, च=तथा, केचन संशितव्रताः यतयः स्वाध्यायज्ञानयज्ञाः=वेदस्येतिहासस्यार्थशास्त्रस्य मिश्रामिश्रविविधवस्तुनिर्माणतन्त्रस्य शिल्पशास्त्रस्यायुर्वेदस्य चान्यतमस्य प्रत्यहं नियमेन पाठः स्वाध्यायः, तेन प्रवृद्धं ज्ञानं स्वाध्यायज्ञानं,तदेव यज्ञो येषां,ते स्वाध्यायज्ञानयज्ञाः, वेदादीनां स्वाध्यायेन यज्ञबुद्ध्या प्रतिदिनमुत्तरोत्तरवृद्धिकरं ज्ञानं सम्पादयन्तो वर्तन्ते "बुद्धिवृद्धिकराण्याशु धन्यानि हितानि च। नित्यं शास्त्राण्यवेक्षेत, निगमांश्चैव वैदिकान्" (मनु॰ ४।१९ ) इत्यादिस्मृतेरित्यर्थः । धन्यानि=धनाय हितानि, हितानि=इष्टोपकारकाणि, नित्यं=प्रतिदिनं,निगमाः मन्त्राः "अग्निमीले पुरोहितम्" इत्यादयः, वेदस्येमे वैदिकाः, तांश्चावेक्षेत=अधीयीत,इति स्मृतिपदानामर्थाः ॥२८॥

अथ दशमं प्राणायामाख्यं यज्ञमाह—

## "अपाने जुह्वति प्राणं, प्राणेऽपानं तथाऽपरे ।
## प्राणापानगती रुद्ध्वा, प्राणायामपरायणाः ॥२९॥

अर्थः-अपरे=पूर्वोक्तेभ्योऽन्ये,प्राणायामपरायणाः=आ समन्तादन्तर्बहिः सर्वतो यमनं नियमनम्-आयामो निरोधः,प्राणस्य प्राणापानस्यायामः प्राणायामः,स एव परमयनं परा गतिर्येषां,ते प्राणायामपरायणाः प्राणायामतत्पराः, प्राणं=प्रश्वासम् , उच्छ्वासं, कोष्ठ्यस्य वायोर्बहिर्निःसारणं प्राणवृत्तिनामानम्, अपाने=श्वासे, निश्वासे, बाह्यस्य वायोराचमनेऽपानवृत्तौ, जुह्वति=प्रक्षिपन्ति, बाह्यं वायुमाचम्यान्तर्धारयन्ति-पूरकाख्यं प्राणायामं कुर्वन्ति, तथाऽपानं=श्वासं,निश्वासम्, अपानवृत्त्याख्यं बाह्यस्य वायोराचमनं, प्राणे=प्राणवृत्तौ, जुह्वति= प्रक्षिपन्ति कोष्ठ्यं वायुं निःसार्य बहिर्धारयन्ति, रेचकाख्यं प्राणायामं कुर्वन्ति । प्राणापानगती=मुखनासिकाभ्यामान्तरस्य वायोर्बहिर्निःसरणं प्राणस्य गतिरुच्छ्वासः प्रश्वासः, तद्विपर्ययेण बहिर्निःसृतस्यान्तः प्रवेशोऽपानस्य गतिर्निश्वासः, श्वासः, ते एते उच्छ्वासनिश्वासाख्ये प्राणापानगती द्वे रुद्ध्वा, सकृत्प्रयत्नेन निरुध्य, कुम्भकाख्यं

प्राणायामं कुर्वन्तीत्यर्थः ।

प्राणायामः खलु त्रेधा-रेचकः पूरकः कुम्भकश्च । तत्र रेचकः पूर्वं क्रियते, पश्चात् पूरकस्ततोऽनु कुम्भकः, इति सम्प्रदायः । श्लोकव्याख्यानं तु पाठक्रममाश्रित्य, नानुष्ठानक्रममिति वेदितव्यम् । यदा कोष्ठ्यो वायुर्विरेच्य वहिर्धार्यते, तदा रेचकः, किमुक्तं शरीरान्तर्गतस्य वायो-रुच्छ्वासेन बहिर्गतस्य बहिरेव धारणं रेचकः, यदा बाह्यो वायुरापूर्य्यान्त-र्धार्यते, तदा पूरकः, किमुक्तं ? बाह्यस्य वायोर्निश्वासेनान्तर्गतस्यान्तरेव धारणं पूरकः । यदा न कोष्ठ्यो वायुरुच्छ्वासेन विरेच्यते, न वा बाह्यो वायुर्निश्वासेनापूर्यते, किन्तु शरीरान्तरेव शरीरान्तरगतो वायुः सकृच्छि-धारकप्रयत्नादुदकवत् कुम्भे धार्यते, तदा कुम्भकः । किमुक्तं ? यत्र श्वासस्य निश्वासस्यापानवृत्तेरभावः, स रेचकः । यत्रोच्छ्वासस्य प्रश्वास्य प्राणवृत्तेरभावः, स पूरकः । यत्रोच्छ्वासनिश्वासयोः प्राणापानयोः, प्राणापानवृत्त्योरुभयोरभावः, स कुम्भकः प्राणायाम इति । स एषोऽ-ष्टाङ्गयोगाङ्गभूतः प्राणायामः सत्यासनजये यमनियमवतां योगमारु-रुक्षूणां योगिनां निष्पद्यते, प्रत्याहारधारणाध्यानसमाधिक्रमेण च सम्प्रज्ञातासम्प्रज्ञातरूपतामापद्यते । तद्विशेषो योगदर्शने वैदिक-वृत्तौ द्रष्टव्यः ॥ २९ ॥

अथापरं यज्ञमुपक्षिपन्नाह—

**"अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।**
**सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः" ॥३०॥**

अर्थः—अपरे = अन्ये प्रकृतितत्त्वाभिज्ञाः क्रान्तदर्शिनो, नियता-हाराः = नियतो नियमितो नियमबद्धः परिमितः, आहारो भोजनं जेमनं येषां, ते सायंप्रातर्हितमितमेध्यभोजिनः " सायंप्रातराश्येव स्यात्, स यो हैवं विद्वान् सायंप्रातराशी भवति, सर्वं हैवायुरेति" ( शत० २ । ४ । २ । ६ ) इत्यादिश्रुतेः, प्राणान् = आहारलोलुपान् प्राणान्, आध्यात्मिकान् वायुभेदान्, प्राणेषु = प्राणाग्निषु "प्राणाग्नय एवैतस्मिन् पुरे जाग्रति, गार्हपत्यो ह वा एषोऽपानः, व्यानोऽन्वाहार्थपचनः, यद् गार्हपत्यात् प्रणीयते, प्रणयनादाहवनीयः प्राणः" ( प्रश्नो० ४ । ३ ) इतिश्रुतेः, जुह्वति = होमयन्ति, प्रक्षिपन्ति, प्रविलापयन्ति, प्राणानामाहारलोलुपतायाः प्राणेष्वेवाग्निषु प्रविलापनं होमं पश्यन्ति ।

एते=इमे,सर्वेऽपि=न कश्चिदेक इति समुच्चयार्थेनापिना लभ्यते,समस्ताः सकलाअपि,यज्ञविदः=लाभकर्मा विन्दतिः, यज्ञानां लब्धारः, यज्ञानां कर्तारः, यज्ञक्षपितकल्मषाः=यज्ञैर्यथोक्तैः क्षपितं नाशितं कल्मषं पापं दुरितं येषां, ते यज्ञैरुक्तैःक्षपयितव्येभ्यस्तत्तद्यज्ञनाश्येभ्यः कल्मषेभ्यः पापेभ्यः फलप्राप्तौ प्रतिबन्धकेभ्यो दुरितेभ्यो विनिर्मुक्ताः,दूरीकृतदुरित-प्रतिबन्धा इत्यर्थः ॥३०॥

अथोक्तानामेकादशानां यज्ञानांमध्ये यः कमपि यज्ञं न करोति, तं प्रत्याह-

"यज्ञशिष्टामृतभुजो यान्ति ब्रह्मसनातनम्।
नायं लोकोऽस्त्ययज्ञस्य, कुतोऽन्यः कुरुसत्तम!"॥३१॥

अर्थः—कुरुसत्तम=हेकुरुश्रेष्ठ!, यज्ञशिष्टामृतभुजः=यज्ञानां, यथोक्ता-नामेकादशानां यज्ञानां, शिष्टं शास्त्रानुशिष्टममृतकल्पं फलं ये भुञ्जते,ते तत्तद्यज्ञोचितं पीयूषवत्स्वादुतमं कांक्षितं वाञ्छितं फल भुंजानाः, कदा-चित् निष्कामकर्मयोगिनो भूत्वा,सनातनं=नित्यं,ब्रह्म=परमात्मानमीश्वरं, यान्ति=प्राप्नुवन्ति। यस्यायज्ञस्य=उक्तानां यज्ञानामेकोऽपि यज्ञो यस्य न विद्यते,तस्य, अयं लोकः=एष मनुष्यलोको, नास्ति=सुखकरो न भवति, अन्यः=मनुष्यलोकादस्मादन्यः परलोकः,कुतः=किमाक्षेपे,कुतः सुखकरो भवेत्, कदापि न भवेत्, सनातनब्रह्मप्राप्तिस्तु बहुदूरमित्यर्थः ॥३१॥

अथोक्तानां यज्ञानां सद्भावे प्रमाणं दर्शयन् स्वाभिसन्धिं प्रकटयति—

"एवं बहुविधाः यज्ञाः वितताः ब्रह्मणो मुखे।
कर्मजान् विद्धि तान् सर्वान्,एवं ज्ञात्वा विमोक्ष्यसे" ॥३२

अर्थः—एवं=यथोक्तं तथा, बहुविधाः=अनेकप्रकाराः,यज्ञाः= यज्ञनामानः कर्मभेदाः, ब्रह्मणः=वेदस्य, मुखे=द्वारे,द्वारीभूते ब्राह्मणे चोपनिषदि च,वितताः=विस्तारं गताः प्राप्ताः, विस्तरेण प्रतिपाद्यन्ते। तान्=अमून्,यथोक्तान् सर्वान्=सर्वप्रकारान् यज्ञान्,कर्मजान्=कायिकवा-चिकमानसकर्मोद्भवान्, विद्धि=जानीहि, न तु कर्मसंन्यासजानिति गूढोऽभिसन्धिः, एवम्=अमुना प्रकारेण, ज्ञात्वा=तान् सर्वान् यज्ञान् कर्मजान् बुद्ध्वा,विमोक्ष्यसे=मया वेदोक्तं स्ववर्णोचितं कर्म, कर्तव्यम

अथवा संन्यसितव्यमित्येवंरूपादात्मनाशकारणात् संशयात् सन्देहात्, मोक्षं लप्स्यसे, इत्यर्थः ॥ ३२ ॥

अथ सर्वेषु यज्ञेषु कर्मजत्वाविशेषेऽपि ज्ञानयज्ञस्य सहेतुकं श्रेष्ठत्वमाह—

"श्रेयान् द्रव्यमयाद् यज्ञात्, ज्ञानयज्ञः परन्तप ! ।
सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते" ॥३३॥

अर्थः—परन्तप=हे शत्रुतापन !, द्रव्यमयात्=द्रव्यदेवतारूपाद् दर्शपूर्णमासादियज्ञादारभ्योक्तात्,यज्ञात्=सर्वस्माद् यज्ञात्, ज्ञानयज्ञः= "सर्वं ब्रह्म, स आत्मा" इत्येवमात्मको ज्ञानयज्ञः,श्रेयान्=प्रशस्यतरः, श्रेष्ठः,यस्मादखिलं=निःशेषं,सर्वं कर्म=फलस्पृहामन्तरेण कर्तव्यबुद्ध्याऽनुष्ठीयमानं स्ववर्णोचितं सकलं कर्म,ज्ञाने=ब्रह्मज्ञाने सति,परिसमाप्यते= परिपूर्यते, परिसमाप्तिः परिपूर्णता, परितः सर्वतः पूर्णं सम्पद्यते, पार्थ=हे पृथापुत्र !, इत्यर्थः ।

यस्य हि पुरुषस्य ब्रह्मज्ञानं नाजनि, यः खलु साक्षादात्मानं न प्रत्यपादि, नासौ कदाचिदीश्वरभक्तौ निमज्जति, न वा क्षणभंगुरेभ्यो विषयेभ्यो जातुचिद् विरज्यति । तस्येत्थंभूतस्य पुरुषस्य फलगर्द्धाभावेऽपि क्रियमाणं स्ववर्णोचितं कर्म न पूर्णं,न वाऽसौ पूर्णः कर्मयोगी,तत्र तत्पूर्णताहेतोरात्मज्ञानस्येश्वरभक्तेश्चाभावात् । यदा चायं पुरुषः श्रोत्रियस्य ब्रह्मनिष्ठस्य गुरोरुपदेशादात्मानं विजानाति,सर्वं ब्रह्मावलोकयति,तदा क्षणभंगुरेभ्यो विषयेभ्यो विरज्येश्वरभक्तौ निमग्नः फलस्पृहाभावेऽपि कर्तव्यबुद्ध्या वा लोकसंग्रहबुद्ध्या वा पञ्चमहायज्ञनिर्वृत्त्यर्थं वेदोक्तं स्ववर्णोचितं क्रूरमक्रूरं सर्वं कर्म यथाविधानमाचरन् पूर्णः कर्मयोगी सम्पद्यते, तस्य चाचर्यमाणं सकलं कर्मापि पूर्णम् । तत्पूर्णताहेतोर्ब्रह्मज्ञानस्येश्वरभक्तेश्च तत्र सद्भावात् । तदेतद् दृष्टौ निधायैव भगवताऽनुशिष्यते "सर्वं कर्माखिलं पार्थ! ज्ञाने परिसमाप्यते" इति ॥३३॥

ननु तद् ज्ञानं कथं प्राप्यते ?, तत्राह—

"तद् विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं, ज्ञानिनस्तत्त्वदर्शिनः" ॥३४॥

अर्थः—तद्=अदो ब्रह्मज्ञानं,प्रणिपातेन=प्रकर्षेण,भक्तिश्रद्धातिशयेन, नीचैःपतनं,नम्रीभवनं,प्रणिपातः, भक्तिश्रद्धातिशयपूर्वकः शिष्यभावः,

तेन, भक्तिश्रद्धातिशययुतेन शिष्यभावेन, परिप्रश्नेन=परितः सर्वतः प्रसन्नमासीनं गुरुमवलोक्य प्रश्नः परिप्रश्नः, तेनावसरदर्शनपूर्वकेण प्रश्नेन, सेवया=शुश्रूषया च, विद्धि=गुरुभ्यो जानीहि, प्राप्नुहि। ज्ञानिनः=सर्वशास्त्रार्थज्ञानवन्तो वेदविद्वांसस्तत्त्वदर्शिनः=ब्रह्मतत्त्वसाक्षात्कारिणो गुरवः प्रणिपातादिभिरावर्जितचेतसः, ते=तुभ्यं, ज्ञानं=ब्रह्मज्ञानम्, आत्मज्ञानम्, उपदेक्ष्यन्ति=अनुशासिष्यन्ति,उपदेशेन प्रापयिष्यन्तीत्यर्थः ॥ ३४ ॥

नन्वेवं प्रणिपातादिना भूरिपरिश्रमेण प्राप्ते ज्ञाने किं स्यादित्याकांक्षायां ज्ञानमाहात्म्यमाह—

"यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव! ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि" ॥३५॥

अर्थः—पाण्डव=हे पाण्डुपुत्र ! यद्=यदात्मज्ञानं, ब्रह्मज्ञानं,ज्ञात्वा=लब्ध्वा, प्राप्य, एवं=यथेदानीं, तथा, पुनः=भूयो, मोहं=बन्धुमोहं, बन्धुवधादिनिमित्तं भ्रमं, मिथ्याप्रत्ययं, न यास्यसि=न प्राप्स्यसि। अथो=अपि च,येन=गुरूपदेशात् प्राप्तेन येन ज्ञानेन,भूतानि=ब्रह्मादिस्तम्बपर्यन्तानि स्थावरजंगमानि सर्वाणि भूतानि, अशेषेण=निःशेषेण, साकल्येनात्मनि=सर्वभूतान्तरात्मनि, मयि=वासुदेवे मयीश्वरेऽवस्थितानि, तिरोभवन्ति चाविर्भवन्ति च द्रक्ष्यसि=लोकयिष्यसि, साक्षादनुभविष्यसीत्यर्थः ॥ ३५ ॥

किंच—

"अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव, वृजिनं संतरिष्यसि" ॥३६॥

अर्थः—अपि चेत्=समुच्चयार्थोऽपिः,यदि च,सर्वेभ्यः=कृत्स्नेभ्यः, पापेभ्यः=पापकर्तृभ्यः,पापकृत्तमः=अतिशयेनाधिक्येन पापकृत्,बहूनां पापानां कर्ता, त्वमसि=भवसि, तथापि, सर्वं=कृत्स्नं, वृजिनं=पापं, पापार्णवं, ज्ञानप्लवेनैव=साधनान्तरव्यावृत्तिरवधारणार्थः, आत्मज्ञानरूपेण प्लवेनैव पोतेनैव, वैद्युतेन जलयानेनैव, सन्तरिष्यसि=सम्यग अनायासेनातिक्रमिष्यसि, सुखेनोल्लङ्घयिष्यसीत्यर्थः ॥३६॥

ननु सन्तरणे समुद्रवदवस्थितानि पापकर्माणि, कालान्तरे दुःखाकरिष्यन्ति, कृतं ज्ञानेन ?, तत्राह—

**"यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जन! ।**
**ज्ञानाग्निः सर्वकर्माणि, भस्मसात्कुरुते तथा" ॥३७॥**

अर्थः—अर्जुन=हे अर्जुन! यथा=येन प्रकारेण, समिद्धः=सम्यक् दीप्तः प्रज्वलितोऽग्निः=वह्निः, एधांसि=काष्ठानि, शुष्कानि दारूणि, भस्मसात्कुरुते=दंदह्यते, भस्मीभावं नयते, तथा=तेनैव प्रकारेण, ज्ञानाग्निः=आत्मज्ञानरूपो वह्निः, सर्वकर्माणि=सर्वाणि पुण्यपापकर्माणि, भस्मासत्कुरुते=भस्मीभावं नयते, भस्मीकुरुते, दंदग्धि, भस्मयाति, "उभे उ हैव एष एते तरति" (बृ०उ०४।४।२२) "क्षीयन्ते चास्य कर्माणि" (मुण्ड० २।२।८) "तद् यथेषीकातूलमग्नौ प्रोतं प्रदूयेत, एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" (छां०उ०५।२४।३) इत्यादिश्रुतिभ्यः । पाप्मानः=पुण्येन सहिताः सर्वे पाप्मानः । पुण्यस्यापि जन्महेतुत्वत् पाप्मत्वमित्यर्थः ॥३७॥

अथ पूर्वोक्तेऽर्थेऽर्धेन हेतुं वदन्नर्द्धेन ज्ञानस्य तस्य प्राप्तिप्रकारमाह—

**"नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।**
**तत् स्वयं योगसंसिद्धः, कालेनात्मनि विन्दति" ॥३८॥**

अर्थः—हि=यस्मात्, ज्ञानेन=आत्मज्ञानेन, सदृशं=तुल्यं, पवित्र=पावनं, शुद्धिकरं, सर्वकर्मरूपपापपुण्यमलनाशकं किञ्चिद्, इह=अस्मिन् लोके, न विद्यते=न वर्तते, नास्ति । तत्=तदेतदात्मज्ञानं, योगसंसिद्धः=योगेन निष्कामकर्मानुष्ठानलक्षणेन कर्मयोगेन संसिद्धः संस्कृतो योग्यतामापन्नो मनुष्यः, स्वयं=स्वयमेव, कालेन=गतेन कियता कालेन, आत्मनि=स्वात्मनि मनसि, विन्दति=लभते, प्राप्नोतीत्यर्थः ॥ ३८ ॥

किञ्च—

**"श्रद्धावाँल्लभते ज्ञानं, तत्परः संयतेन्द्रियः ।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति" ॥३९॥**

अर्थः—श्रद्धावान्=गुरुवेदवाक्येषु सम्प्रत्ययो विश्वासः श्रद्धा, तद्वान्,

निष्कामकर्मानुष्ठाता सन् श्रद्धालुः,गुरुवेदवाक्यानां विश्वासी,तत्परः= तद् ज्ञानं परमुत्कृष्टं श्रेष्ठं प्राप्तव्यं यस्य,स ज्ञानप्राप्त्युपाये गुरूपसत्त्यादावभियुक्तो लग्नः,संयतेन्द्रियः=संयतानि विषयेभ्यो निवर्तितानि इन्द्रियाणि श्रोत्रादीनि करणानि यस्य, स वशीकृतेन्द्रियः,ज्ञानं=ब्रह्मात्मज्ञानं, लभते=विन्दति, यो मनुष्यः फलस्पृहां विना वेदोक्तानि स्ववर्णोचितानि सर्वाणि कर्माण्यनुतिष्ठन् श्रद्धादिसम्पत्तिमान्, स गतेन कियता कालेन स्वयमात्मनि मनसि ब्रह्मात्मज्ञानं लभते। ज्ञानं=ब्रह्मात्मज्ञानं, लब्ध्वा= वेदित्वा,वेत्त्वा,प्राप्य,पराम्=उत्कृष्टाम्,आत्यन्तिकीं,शान्तिं=शोकमोहतत्कारणाज्ञाननिवृत्तिपूर्विकां मोक्षाख्यां संसारदुःखनिवृत्तिम्, अचिरेण= अविलम्बेनाधिगच्छति=प्राप्नोतीत्यर्थः ॥ ३९ ॥

ननु यस्य ज्ञानं नास्ति, तद्धेतुः श्रद्धाऽपि नास्ति,स्ववर्णोचिते कर्मणि च कार्याकार्यसंशयो वर्तते,तस्य किं स्यात् ?, तत्राह—

**"अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति।**
**नायं लोकोऽअस्ति न परो,न सुखं संशयात्मनः"॥४०॥**

अर्थः—अज्ञः=यो मनुष्यो नात्मानं जानाति,ब्रह्मात्मज्ञानविरहितः, च=तथाऽश्रद्दधानः=गुरुवाक्यं वेदवाक्यं च न श्रद्धत्ते,गुरुवेदवाक्यानामविश्वासी, च=तथा,संशयात्मा=स्ववर्णोचिते कर्मणि कार्याकार्यसंशयः सन्देहो विद्यते यस्यात्मनि मनसि,स कार्याकार्यसंशयमनाः, नश्यति= स्वार्थात् पुरुषार्थाद् भ्रश्यति,स्वकीयं मानुषं जन्म व्यर्थयति। यत्कारणं, संशयात्मनः=कार्याकार्यसंशययुक्तमनसोऽयं लोकः=एष मनुष्यलोको, नास्ति=सुखकरो न विद्यते, तस्येह जन्मनि सुखं न भवति,न परः= न परलोकः सुखकरः सम्पद्यते, न तस्यापरस्मिन् जन्मनि सुखं वरीवर्ति, न=नापि, सुखं=लोकपरलोकोभयातीतं मोक्षसुखं तस्य बोभवीति,सुखहेत्वोर्ज्ञानकर्मणोस्तद्धेतोः श्रद्धायाश्चाभावादित्यर्थः॥४०॥

अथाध्यायार्थमुपसंहरन्नाह—

**"योगसंन्यस्तकर्माणं, ज्ञानसंच्छिन्नसंशयम्।**
**आत्मवन्तं न कर्माणि, निबध्नन्ति धनञ्जय!"॥४१॥**

अर्थः—धनञ्जय=हे युद्धेन धनानां जेतः! योगसंन्यस्तकर्माणं= योगेन निष्कामकर्मानुष्ठानलक्षणेन कर्मयोगेन संन्यस्तानि सम्यक् त्यक्तानि

फलत्यागेनाकर्मतां प्रापितानि कर्माणि येन, तं फलेच्छां विना केवल-कर्तव्यबुद्ध्या वेदविहितानि स्ववर्णोचितानि कर्माणि यथाविधान-मनुतिष्ठन्तं, ज्ञानसंछिन्नसंशयं=ज्ञानेन ब्रह्मात्मज्ञानेन संछिन्नाः सम्यग् द्वैधीभूताः,निःशेषेणोन्मूलिताः संशयाः हिंसाहिंसा-पुण्यापुण्यः-कार्याकार्य-कर्माकर्मसंन्यासादिगोचराः सर्वे संशयाः यस्य,तं संछिन्नसमस्त-संशयम्,आत्मवन्तं=स्वाधीनशरीरेन्द्रियमनसं ब्रह्मात्मज्ञानिनं,कर्माणि= क्रियमाणानि स्ववर्णोचितानि क्रूराक्रूराणि कर्माणि, न निबध्नन्ति= न विसनन्ति, न लिम्पन्तीत्यर्थः ॥ ४१ ॥

अथार्जुनं सम्बोधयन्नाह—

"तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत !" ॥४२॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानयोगो नाम चतुर्थोऽध्यायः ॥४॥

अर्थः—तस्मात्=यस्माद् ब्रह्मात्मज्ञानिनमीश्वरभक्तं फलेच्छया विना केवलकर्तव्यबुद्ध्या कर्माणि कुर्वन्तं, कर्माणि न निबध्नन्ति, तस्माद्, अज्ञानसम्भूतम्=आत्मनोऽज्ञानादविवेकादुत्पन्नं, हृत्स्थं=हृदि बुद्धौ स्थितम्, एनम्=एतं पूर्वोक्तम्, आत्मनः=स्वस्य, संशयं=सन्देहं, भीष्मादिबन्धुहिंसाहिंसादिविषयं विशयं, संशयवैरिणं, ज्ञानासिना= आत्मनो ज्ञानेनासिना खड्गेन, छित्त्वा=द्वैधीकृत्य, निःशेषेणोन्मूल्य, योगं=कर्मयोगम्, आतिष्ठ=आतिष्ठस्व, आश्रयस्व, समाचर, उत्तिष्ठ= युद्धायोत्थितो भव, युध्यस्व, भारत=हे भारतवंशोत्पन्न ! इत्यर्थः॥४२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यनिखिल-शास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्ये चतुर्थोऽध्यायः ॥४॥

———

# "अथ पञ्चमोऽध्यायः" ॥५॥

द्विविधः कर्मणां संन्यासः, फलतः स्वरूपतश्च। तत्र फलतःसंन्यासः एव कर्मणां संन्यासः, इति भगवतो मतम्। तदेव हृदि निधाय भगवान् "योगसंन्यस्तकर्माणम्" इत्यभ्यधात्। स्वरूपतः कर्मणां संन्यासं भगवानन्वशादिति मन्यमानोऽर्जुनः पृच्छति—

"अर्जुनः उवाच"

**"संन्यासं कर्मणां कृष्ण! पुनर्योगं च शंससि।**
**यच्छ्रेय एतयोरेकं, तन्मे! ब्रूहि सुनिश्चितम्" ॥१॥**

अर्थः—कृष्ण=हे कृष्ण! हे पापकर्षण!, कर्मणां=वेदविहितानां स्ववर्णोचितानां कर्मणां, संन्यासं=त्यागं, हानं, शंससि=प्रशंससि, 'योगसंन्यस्तकर्माणम्" इत्यादिना स्तौषि, पुनः=पश्चात्, योगं च=निष्कामभावेन कर्मणामनुष्ठानलक्षणं कर्मयोगं च, कर्तव्यबुद्ध्या कर्मणामनुष्ठानं च, शंससि=धातूनामनेकार्थत्वात् कथयसि "योगमातिष्ठ" इत्यादिनाऽनुशास्सि। एतयोः=अनयोः कर्मयोगकर्मसंन्यासयोः, कर्मानुष्ठानकर्मत्यागयोर्यदेकम्=एकतरं, कर्मानुष्ठानं वा कर्मसंन्यासं वा, श्रेयः=श्रेयःसाधनत्वाच्छ्रेयः प्रशस्यतरं, श्रेष्ठं, सुनिश्चितं=सुनिर्णीतं, सुष्ठुनिर्धारितं, तद्=तदेव, मे=मह्यमर्जुनाय, ब्रूहि=आख्याहि, अभिधेहि, अनुशाधीत्यर्थः ॥ १० ॥

अथ भगवान् श्रीकृष्णोऽर्जुनप्रश्नस्योत्तरमाह—

"श्रीभगवानुवाच"

**"संन्यासः कर्मयोगश्च, निःश्रेयसकरावुभौ।**
**तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते" ॥२॥**

अर्थः—संन्यासः - कर्मणां संन्यासः, च=तथा, कर्मयोगः=कर्मणां कर्तव्यबुध्याऽनुष्ठानलक्षणः कर्मयोगः, उभौ=उभकौ, द्वौ, निःश्रेयसकरौ=निःश्रेयसस्य मोक्षस्य कर्तारौ। तु=परन्तु, तयोः=अमुयोर्द्वयोः कर्मसंन्यासात्=कर्मणां संन्यासात्, कर्मयोगः=निष्कामकर्मयोगो विशिष्यते=विशिष्टायते, अतिशयेन प्रशस्यते, श्रेष्ठो बोभूयते, इत्यर्थः ॥२॥

ननु कस्मात् कर्मयोगः कर्मसंन्यासाद् विशिष्यते? तत्राह—

**"ज्ञेयः स नित्यसंन्यासी, यो न द्वेष्टि न कांक्षति ।**
**निर्द्वन्द्वो हि महाबाहो ! सुखं बन्धात् प्रमुच्यते" ॥३॥**

अर्थः—सः=असौ कर्मयोगी, नित्यसंन्यासी=नित्यं सर्वदा संन्यासोऽस्त्यस्य, स तथा, कर्म कुर्वाणोऽपि सार्वकालिकः संन्यासी, न तु कर्मसंन्यासीव कादाचित्कः, ज्ञेयः=ज्ञातव्योऽत्रबोद्धव्यः, स कः?, यः=यः कर्मयोगी, न द्वेष्टि=प्राप्तं दुःखं दुःखसाधनं वा, न द्वेषयति, नानुक्रुध्यति, न प्रतिहन्ति, न कांक्षति=नाप्राप्तं सुखं सुखसाधनं वाऽभिलषति, वावष्टि, जागर्द्धि, यद् यदा प्राप्तं, तदेव तदा बहु मन्यते, न तदवमन्यते, न वा ततोऽपरं किञ्चिदर्थयते । कस्मात् ? हि=यस्मात्, निर्द्वन्द्वः=द्वन्द्वेभ्यो युग्मेभ्यो रागद्वेषसुखदुःखहानिलाभजयपराजयादिभ्यो निर्गतो निष्क्रान्तः, स एष महाबाहो=हे महाभुज ! सुखं=यथासुखं, सुखपूर्वकं, स्वकां जीवनयात्रां निर्वहन्, अन्ते प्रारब्धान्ते, बन्धात्=जन्ममरणलक्षणात् संसारबन्धनात्, प्रमुच्यते=प्रकृष्टमत्यन्तं मुच्यते, न पुनर्जन्ममरणरूपं संसारबन्धनं प्रपद्यते, न जन्यते, न म्रियते, इत्यर्थः ॥ ३ ॥

अथ कर्मसंन्यासात् कर्मयोगस्योक्तं विशिष्टत्वं पुनर्विशदयितुमनाः पूर्वं कर्मसंन्यासमूलस्य ज्ञानयोगस्य, कर्मानुष्ठानरूपस्य च कर्मयोगस्य, तुल्यफलतामाह द्वाभ्याम्—

**"सांख्ययोगौ पृथग् बालाः, प्रवदन्ति न पण्डिताः ।**
**एकमप्यास्थितः सम्यग्, उभयोर्विन्दते फलम्" ॥४॥**

अर्थः—सांख्ययोगौ=ज्ञानयोगकर्मयोगौ, पृथक्=फलतः पृथग्भूतौ, पृथक्फलौ—ज्ञानयोगो मोक्षफलः, कर्मयोगो ज्ञानयोगफलः, न ज्ञानयोगवत् साक्षान्मोक्षफलः, इत्येवं भिन्नफलौ, बालाः=शास्त्रहृदयानभिज्ञाः, अपण्डिताः, प्रवदन्ति=निगदन्ति, प्रतिपादयन्ति, न पण्डिताः=शास्त्रहृदयाभिज्ञाः सूक्ष्मधियो विद्वांसः । एकमपि=ज्ञानयोगकर्मयोगयोरेकमपि, सम्यगास्थितः=यथाशास्त्रमाश्रितः, समनुतिष्ठन्, उभयोः=द्वयोर्ज्ञानयोगकर्मयोगयोः, फलं=ब्रह्मप्राप्तिरूपं फलं, मोक्षं, विन्दते=लभते, प्राप्नोतीत्यर्थः ॥ ४ ॥

ननु कथमेकस्य सम्यगनुष्ठानेन पुमान् उभयोः फलं विन्दते?, तत्राह—

**"यत् सांख्यैः प्राप्यते स्थानं, तद् योगैरपि गम्यते।**
**एकं सांख्यं च योगं च, यः पश्यति स पश्यति" ॥५॥**

अर्थः—सांख्यैः=ज्ञानयोगिभिः कर्मसंन्यासिभिर्यत् स्थानं=यत् सर्वभूतनिवासस्थानं ब्रह्म, "सन्मूलाः सोम्य ! इमाः सर्वाः प्रजाः, सदायतनाः, सत्प्रतिष्ठाः" (छां० उ० ६।८।४) इत्यादिश्रुतेः, प्राप्यते= गम्यते, योगैरपि=कर्मयोगिभिरपि, तत्=तदेव स्थानं, सर्वभूतनिवासस्थानं ब्रह्म, गम्यते=प्राप्यते। प्राप्यस्य ब्रह्मरूपस्थानस्य फलस्योभयत्रैकत्वा-देकस्य सम्यगनुष्ठानेनोभयोः फलं विन्देत, प्राप्नुयात्, पुरुषो, नास्ति काचिदनुपपत्तिः। यस्मादेवं, तस्मात्=सांख्यं=ज्ञानयोगं, च=तथा योगं=कर्मयोगं, च=निश्चयेन, एकम्=एकफलं, समानफलं, तुल्यफलं, यः पश्यति=योऽवलोकयति, स पश्यति=स एव सम्यक् पश्यति, नान्यः, परमार्थतः फलस्यैकत्वात्, भेदकल्पनस्य च कल्पनामात्रत्वादित्यर्थः ॥५॥

ननु ज्ञानयोगकर्मयोगयोरेकफलत्वेऽपि कर्मसंन्यासात् कर्मयोगस्य विशिष्टत्वे किमायातम् ?, तत्राह—

**"संन्यासस्तु महाबाहो! दुःखमाप्तुमयोगतः।**
**योगयुक्तो मुनिर्ब्रह्म, नचिरेणाधिगच्छति" ॥६॥**

अर्थः—महाबाहो=हे महाभुज ! संन्यासस्तु=कर्मयोगव्यावृत्त्यर्थ-स्तुः, कर्मसंन्यासः, अयोगतः=सार्वविभक्तिकस्तसिः, योगः कर्मयोगः, न कर्मयोगतः, विना कर्मयोगेन, आप्तुं=प्राप्तुं दुःखं=दुःखकरः सर्वथाऽ-शक्यः, नहि प्रकृतिगुणप्रभवाणि जलधारावन्निरन्तरवहनशीलानि कायिकवाचिकमानसानि शास्त्रीयाशास्त्रीयानि सर्वाणि कर्माणि, केनचित् कदाचित् कथञ्चित् संन्यसितुं शक्यन्ते, परित्यक्तुं पार्यन्ते। कर्ममात्रसंन्यासस्य पुरुषप्रयत्नागोचरत्वात्। यथा खलु मनुष्यः सह-स्रेणाप्यात्मप्रयत्नैरुष्णस्वभावं वह्निं शीतीकर्तुं न शक्नोति, तथा प्रकृति-गुणोद्भवानि स्वाभाविकानि कर्माण्यपि सहस्रेणाप्यात्मप्रयत्नैर्न संन्य-सितुं पारयति। न च कानिचित् कर्माणि संन्यस्यन्ते, कानिचिदुपा-दीयन्ते, तावन्मात्रेण कर्मणां संन्यासः प्रतिज्ञातुमुत्सह्यते, कथञ्चिदा-स्थातुं वा क्षम्यते। अतः कर्मयोगाख्यनिष्कामकर्मानुष्ठानमेव कर्मसंन्या-

सस्योपायः। यत्कारणं विनाफलेच्छया यथाविधि क्रियमाणानि कर्माणि, फलाजननादकर्माणि सन्ति संन्यस्तान्येव भवन्ति । सोऽयं बुद्धिमात्र-कल्पितादवैदिकात् कर्मसंन्यासात् कर्मयोगे विशेषः । तदपेक्षया च तत्रैतदेव विशिष्टत्वम्। एतदेव च तत्र श्रेष्ठत्वम् । फलत्यागेन कर्तव्य-बुद्धया कर्मणामनुष्ठानं हि परमार्थतः कर्मसंन्यासो,न स्वरूपेण कर्मणां संन्यासः कर्मसंन्यासः । यस्मादेवं, तस्मादेव, योगयुक्तः=योगेन कर्मयोगेन युक्तः समन्वितो मुनिः=कर्मयोगी,नाचिरेण=न कर्मसंन्यासि-ज्ञानयोग्यपेक्षया चिरेण, किन्तु ततोऽपि क्षिप्रं, तूर्णं, ब्रह्म=ब्रह्मनिर्वाणं मोक्षम्, अधिगच्छति=प्राप्नोतीत्यर्थः ॥ ६ ॥

ननु कस्माद् योगयुक्तो मुनिः कर्म कुर्वाणोऽपि ब्रह्मैवाधिगच्छति, न संसारम् ?, तत्राह—

"योगयुक्तो विशुद्धात्मा, विजितात्मा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा, कुर्वन्नपि न लिप्यते" ॥७॥

अर्थः—यस्माद् योगयुक्तः=कर्मयोगयुक्तो मुनिः, विशुद्धात्मा=विशुद्धः निर्मलः,रागद्वेषादिषड्मलरहितः,आत्मा मनोऽन्तःकरणं यस्य,स निर्मलमनाः, अत एव विजितात्मा=विजितमनस्कः, वशीकृतदेहो वा, जितेन्द्रियः=जितबाह्यसर्वेन्द्रियः, सर्वभूतात्मभूतात्मा=सर्वेषां भूतानां ब्रह्मादिस्तम्बपर्यन्तानामात्मभूतः आत्मा प्रत्यक्चेतनो यस्य, स सर्वेषु भूतेषु प्राणिष्वेकात्मदर्शी,तस्मात् कुर्वन्नपि=वेदविहितानि स्ववर्णोचि-तानि क्रूराक्रूराणि निखिलानि कर्माणि कुर्वन्नपि, निर्वर्तयन्नपि, न लिप्यते=न कर्मभिः संसृज्यते, न कर्मभिः सम्बध्यते, अतएव संसारं नाधिजंगम्यते, कर्मलेपस्यैव संसारगतिहेतुत्वादित्यर्थः ॥ ७ ॥

ननु कस्मात् कुर्वन्नपि न लिप्यते ? तत्राह द्वाभ्याम्—

"नैव किञ्चित् करोमीति, युक्तो मन्येत तत्त्ववित् ।
पश्यन्शृण्वन्स्पृशन्जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन्"
"प्रलपन् विसृजन् गृह्णन्, उन्मिषन् निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्ते इति धारयन्" ॥९॥

अर्थः—युक्तः = कर्मयोगेन युक्तः, तत्त्ववित् = तत्त्वमात्मनो याथात्म्यं, तस्य वेत्ता आत्मतत्त्वाभिज्ञः कर्मयोगी, इन्द्रियाणि = बाह्यान्तरकरणानि, प्राणाश्च, इन्द्रियार्थेषु=इन्द्रियाणामर्थाः विषयाः, तेषु, स्वस्वविषयेषु, वर्तन्ते, प्रवर्तन्ते, व्याप्रियन्ते, इति=एवं, धारयन्=अवधारयन्,निश्चिन्वानः,पश्यन् = चक्षुरिन्द्रियेण नेत्रेण पश्यन्, शृण्वन् = श्रोत्रेन्द्रियेण शृण्वन्, स्पृशन् = स्पर्शेन्द्रियेण स्पृशन्, जिघ्रन्=घ्राणेन्द्रियेण जिघ्रन्, अश्नन्=रसनेन्द्रियेण रसयन्, गच्छन्=पादेन्द्रियेण गच्छन्, स्वपन् = आन्तरेन्द्रियेण मनसा स्वपन्, निद्रां कुर्वन्, श्वसन्= प्राणेन श्वसन्,उच्छ्वासं निःश्वासं कुर्वन्, प्रलपन्=वागिन्द्रियेण, वाचा, प्रलपन् शब्दयन्,विसृजन्=पायूपस्थाभ्यामिन्द्रियाभ्यां विसृजन्,त्यजन्, गृह्णन्=हस्तेन्द्रियेण गृह्णन्, उन्मिषन् निमिषन्=प्राणविशेषेण कूर्माख्येनोन्मेषनिमेषौ कुर्वन्,चक्षुरादिभिर्ज्ञानेन्द्रियैर्दर्शनादिकं, वागादिभिः कर्मेन्द्रियैः प्रलापादिकम्, अन्तःकरणेन मनसा स्वापं, प्राणैः श्वासप्रश्वासौ निमेषोन्मेषौ च कुर्वन्नपि, पश्यन्नादिना प्रत्येकमपेः सम्बन्धः, नैव किञ्चित् करोमि = न चाहं किमपि दर्शनादिकं चक्षुरादिभिरिन्द्रियैः करोमि, विदधामि, दर्शनश्रवणस्पर्शनघ्राणाश्नानि चक्षुःश्रोत्रत्वग्घ्राणरसनानां पञ्चज्ञानेन्द्रियाणां व्यापाराः, प्रलापग्रहणगमनविसर्गानन्दाः वाक्पाणिपादपायूपस्थानां पञ्चकर्मेन्द्रियाणां व्यापाराः, स्वापोऽन्तःकरणचतुष्टयस्य मनसो व्यापारः,श्वासप्रश्वासनिमेषोन्मेषाः प्राणानां व्यापाराः, न ममात्मनः कश्चिद् व्यापारः, इति=एवं मन्येत= मन्यते, बुध्यते, निश्चिनुते, कर्तृत्वाभिमानाभावात् तेन तेनेन्द्रियेण तत्तत्कर्म निर्वर्तयन्नपि न लिप्यते,कर्तृत्वाभिमानस्यैवात्मनि कर्मलेपस्य हेतुत्वादित्यर्थः ॥ ८ ॥ ॥ ९ ॥

ननु यो न तत्त्ववित्, तस्य का गतिः? तत्राह—

**"ब्रह्मण्याधाय कर्माणि, सङ्गं त्यक्त्वा करोति यः।**
**लिप्यते न स पापेन, पद्मपत्रमिवाम्भसा" ॥१०॥**

अर्थः-यः=तत्त्ववित् स्यादतत्त्वविद् वा भवेद्, यः कोऽपि मनुष्यः, कर्माणि = वेदविहितानि लोकसम्मतानि स्ववर्णोचितानि क्रूराक्रूराणि सर्वाणि कर्माणि, ब्रह्मणि = सर्वान्तर्यामिनीश्वरे, आधाय = निक्षिप्य, त्वदर्थं करोमि भृत्य इव स्वाम्यर्थमित्येवं समर्प्य,सङ्गं=फले सङ्गं,सक्तिं,

फलं मे भूयादिति कर्मसु फलबुद्धिं,भोक्तृत्वभिमतिं,त्यक्त्वा=हित्वा, करोति=यथाविधानमनुतिष्ठति, सः=असौ मनुष्यः, अम्भसा=पयसा, पद्मपत्रमिव=पद्मस्य कमलस्य पत्रं दलं, तद्वत्, पापेन=तत्तत्कर्मजेन पापेन, पुण्येन च पापेन च, न लिप्यते=न स्पृश्यते,न संसृज्यते,इत्यर्थः॥
अथोक्तेऽर्थे सदाचारं दर्शयति —

"कायेन मनसा बुद्ध्या, केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति, सङ्गं त्यक्त्वाऽऽत्मशुद्धये" ॥११॥

अर्थः—योगिनः=कर्मयोगिनः,आत्मशुद्धये=कर्मलेपोऽशुद्धिः,तदभावः, कर्मलेपाभावः शुद्धिः, तदर्थम्, आत्मनो मनसः शुद्ध्यर्थम्, आत्मनि मनसि कर्मलेपाभावार्थं,सङ्गं=सक्तिं, फलविषयां भोक्तृत्वाभिमतिं, त्यक्त्वा=हित्वा,परित्यज्य,कायेन=शरीरेण,मनसा=चेतसा,बुद्ध्या=धिया, केवलैः=एकलैरिन्द्रियैरपि=चक्षुरादिभिरिन्द्रियैश्च, कर्म=लौकिकं वैदिकं सर्वं कर्म, कुर्वन्ति=निर्वर्तयन्ति, यथाविधानमनुतिष्ठन्तीत्यर्थः।

तत्र विविधेन न्याय्येनोपायेन धनाद्युपार्जनं, यथाविधि सन्तानोपजननं,मातरपित्रोः परिचरणम्,आर्तानां नृणां परित्राणं,पात्रे दानं, युद्धे च शत्रूणां हननम्, इत्यादिकर्म कायनिर्वर्त्यम्, सत्यं, हितं, प्रियं, स्वाध्यायः,सम्बद्धालापः, इत्यादिकर्म वाङ्निर्वर्त्यम्,करुणा, तुष्टिरस्पृहा, श्रद्धा भक्तिरीश्वरोपासनम्, इत्यादि कर्म मनोनिर्वर्त्यम्, वस्तुतत्त्वस्य निश्चयः,तत्साध्यकार्याध्यवसायः,अनागतावेक्षणं, प्रत्येक कर्मपरिणामावलोकनम्, इत्यादि कर्म धीनिर्वर्त्यम, लोकशास्त्रानिषिद्धानां रूपशब्दस्पर्शादीनां दर्शनश्रवणस्पर्शनादीनि, वागिन्द्रियव्यतिरिक्तैः केवलैश्चक्षुरादिभिरिन्द्रियैर्निर्वर्त्यानि कर्माणीति विवेकः ॥ ११ ॥
अथोक्तेऽर्थे सदाचारं दर्शयित्वाऽन्वयव्यतिरेकौ प्रमाणयति —

"युक्तः कर्मफलं त्यक्त्वा, शान्तिमाप्नोति नैष्ठिकीम्।
अयुक्तः कामकारेण, फले सक्तो निबध्यते" ॥१२॥

अर्थः - युक्तः=कर्मयोगयुक्तः कर्मयोगी, कर्मफलं=कर्मफलसङ्गं, त्यक्त्वा=परित्यज्य,फलं मे भूयादिति फले भोक्तृत्वाभिनिवेशात्मिकां सक्तिं परिहाय, केवलया कर्तव्यबुद्ध्या,कर्माणि निर्वर्तयन्, अनुतिष्ठन्,

नैष्ठिकीं=निष्ठायां जाताम्,अन्तोऽवसानं निष्ठा,यस्याः पुनर्निष्ठान्तरमन्तो न विद्यते,तामात्यन्तिकीम्, ऐहिकामुष्मिकीं शान्तिं=जन्ममरणसंसार-रूपविक्षेपनिवृत्तिं मुक्तिमाप्नोति=प्राप्नोति। अयुक्तः=न कर्मयोगेन युक्तः, फलकामनया कर्मसु निरतः, कामकारेण=स्वार्थे कारप्रत्ययः, कामेन, फलाभिलाषेण, फले=कर्मफले, सक्तः=आसक्तः, भोक्तृभावेनाभि-निविष्टः, कर्माणि निर्वर्तयन्, निबध्यते=कर्मभिर्नितरां बध्यते, जन्म-मरणसंसारलक्षणं बन्धं पनीपद्यते, "सम्यग्दर्शनसम्पन्नः कर्मभिर्न निबध्यते। दर्शनेन विहीनस्तु संसारं प्रतिपद्यते" (मनु०६।७४) इत्यादिस्मृतेरित्यर्थः॥ १२॥

अथ सदाचारेणान्वयव्यतिरेकाभ्यां च प्रमाणितं कर्मयोगिनं स्तौति—

"सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी।
नवद्वारे पुरे देही, नैव कुर्वन् न कारयन्" ॥१३॥

अर्थः—वशी=शरीरेन्द्रियमनांसि वशे विद्यन्ते यस्य, स वशी-कृतशरीरेन्द्रियमनाः देही=देहस्वामी पुरुषः, मनसा=भक्तिपूर्णेन चेतसा, सर्वकर्माणि=कायिकवाचिकमानसानि सर्वाणि कर्माणि, संन्यस्य=स्वामिनि भृत्यवत् सर्वभूतान्तरात्मनि ब्रह्मणि निक्षिप्य, नैव कुर्वन्=वेदविहितानि स्ववर्णोचितानि सर्वाणि कर्माणि कुर्वन्नपि कर्तृत्वाभिनिवेशाभावत् न कुर्वन्नेव, न कारयन्=तत्तत्कालोचितासु क्रियासु शरीरेन्द्रियमनांसि कारयन् प्रवर्तयन्नपि कारयितृत्वाभिनिवे-शाभावत् न कारयन्नेव,अहङ्कारममकाराभावान्नैव कुर्वन्,नैव कारयन्, नवद्वारे=नेत्रे नासिके कर्णौ मुखं चेति सप्त शीर्षण्यानि, पायूपस्थे द्वे अधस्तने,इति नव द्वाराणि यस्य,तस्मिन् नवद्वारे,पुरे="यदिदमस्मिन् ब्रह्मपुरे" (छां०उ०८।१।१) इत्यातिश्रुतिसिद्धे पुरवत् पुरे देहे, सुखं= यथासुखं, सुखपूर्वकम्, आस्ते=प्रसन्नचित्तोऽवतिष्ठते, इत्यर्थः ॥१३॥

अथ कर्मयोगिनः पुरुषस्य प्रत्यगात्मनो यथा कर्तृत्वं कारयितृत्वं च नास्ति, अहङ्कारममकाराभिनिवेशाभावात्, तथा पुरुषोत्तमस्य सर्वभूतान्तरात्मनो योगेश्वरस्य ब्रह्मणोऽपि तदुभयं नास्ति, इत्याह सम्प्रति द्वयोरेकत्वप्रतिपत्त्यर्थं द्वाभ्याम्—

"न कर्तृत्वं न कर्माणि, लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं, स्वभावस्तु प्रवर्तते" ॥१४॥

अर्थः—प्रभुः=सर्वलोकाधिपतिरीश्वरः,लोकस्य=जनस्य, मनुष्यस्य, कर्तृत्वं=कर्मसु स्वातन्त्र्यं "स्वतन्त्रः कर्ता" (अष्टा० १।४।५४) इति स्मृतेः, न सृजति=नोत्पादयति,न तं कर्म कारयति,न कर्माणि=तत्तन्मनुष्याधिकारकाणि तत्तद्वर्णोचितानि वेदोक्तानि कर्माणि, न सृजति=नोत्पादयति, न निर्वर्तयति, न करोति । न कर्मफलसंयोगं=तस्मिन् तस्मिन् मनुष्ये तत्तत्कर्मफलस्येष्टानिष्टस्य संयोगं भोक्तृभोग्यभावसम्बन्धं, न सृजति=नोत्पादयति, तस्मै तस्मै मनुष्याय तत्तत्कर्मफलं न प्रयच्छति,तं तं मनुष्यं तत् तत् कर्मफलं सुखं वा दुःखं वा न प्रापयति, तदनेन जगतः प्रभोरीश्वरस्य कर्मकारयितृत्वं,कर्मकर्तृत्वं, कर्मफलप्रापयितृत्वं च प्रतिषिद्धम्, तदभावे कारयिता,कर्ता,प्रापयिता कः ? इत्यपेक्षायामाह-स्वभावस्तु प्रवर्तते=तुना स्वभावव्यतिरिक्तः कारयिता कर्ता प्रापयिता व्यवच्छिद्यते, स्वं सर्वं भावयति साक्षाद्वा, कार्यकरणसङ्घातरूपेण परिणतो वा, स्वो वा भावः=स्वभावः, सृष्टिनिर्माणशक्तिर्मायानाम्नी त्रिगुणात्मिका दैवी प्रकृतिः,सच वासनारूपेण, कारयितृत्वे,कार्यकरणसङ्घातरूपेण कर्तृत्वे,नियतिरूपेण फलप्रापयितृत्वे प्रवर्तते=प्रवृत्तिं भजते, तेन तेन रूपेण तत्र तत्र व्याप्रियते, इत्यर्थः ॥१४॥

"नादत्ते कस्य चित् पापं, नैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं, तेन मुह्यन्ति जन्तवः" ॥१५॥

अर्थः - विभुः=यः स्वीयया सृष्टिनिर्माणशक्त्या मायानाम्न्या त्रिगुणया प्रकृत्या कार्यकरणरूपेण विविधं नानाविधं भवति,यस्य सर्वं जगद् विभूतिः,स विभुरीश्वरः,कस्यचित्=कस्यापि मनुष्यस्य, पापं=पापं कर्म, नादत्ते=न गृह्णाति,न फलदानात् निरुणद्धि,न मित्रबुद्ध्या विफलयति, च=तथा, एव=निश्चयेन, कस्यापि मनुष्यस्य, सुकृतं=पुण्यं कर्म, नादत्ते=न गृह्णाति, न फलदानात् निरुणद्धि, नारिबुद्ध्या विफलयति, तस्य मित्रारिबुद्धेरभावात् । अज्ञानेन=आत्मनोऽज्ञानेन, विपर्ययप्रत्ययेन ज्ञानं=मनुष्याणां ज्ञानं, ज्ञायतेऽनेनेति व्युत्पत्तेर्ज्ञानं

बुद्धिरन्तःकरणम्, आवृतम्=आच्छादितं, वेविद्यते, तेन=तस्माद् हेतोः जन्तवः=जीवाः मनुष्याः,मुह्यन्ति=विपर्यस्यन्ति, प्रत्यगात्मवदीश्वरेऽपि कर्तृत्वादिकं धर्मजातमध्यस्यन्ति,यथासंस्कारमारोपयन्तीत्यर्थः ॥१५॥

अथ ज्ञानिनां मोहाभावमाह—

**"ज्ञानेन तु तदज्ञानं, येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं, प्रकाशयति तत् परम्" ॥१६॥**

अर्थः—तु=परन्तु येषाम्=अज्ञानावृतज्ञानेषु जन्तुषु येषां जन्तूनां मनुष्याणाम्, आत्मनः=प्रत्यगात्मनो ब्रह्मणो, ज्ञानेन=सम्यग्दर्शनेन, श्रोत्रियब्रह्मनिष्ठगुरूपसत्तिपूर्वकतदुपदेशश्रवणमनननिदिध्यासनाभ्यास-जनितेन विविक्तात्मस्वरूपविषयेन ज्ञानेन, कर्तरि तृतीया, तदज्ञानं= येनाज्ञानेनावृतज्ञानत्वात् जन्तवो मनुष्याः मुह्यन्ति,तदज्ञानं,ज्ञानविरोधि विपर्ययज्ञानं, नाशितं=नाशं प्रापितं, बाधितं, घातितं, तेषां=नाशिता-ज्ञानानां तेषां, ज्ञानं=बुद्धिरन्तःकरणं,विगताज्ञानावरणत्वात्, आदित्य-वत्=यथा जलधरपटलावरणविरहितं सूर्यमण्डलं परमपरं कृत्स्नं दृश्यं वस्तु प्रकाशयति,तथा,परं=देहेन्द्रियादिभ्यः प्रकृत्यन्तेभ्यः परं दृशिमात्रं विविक्तात्मस्वरूपं प्रकाशयति=प्रद्योतयतीत्यर्थः ॥ १६ ॥

अथात्मज्ञानफलमाह—

**"तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।**
**गच्छन्त्यपुनरावृत्तिं, ज्ञाननिर्धूतकल्मषाः" ॥१७॥**

अर्थः—ज्ञाननिर्धूतकल्मषाः=ज्ञानेनात्मनो ब्रह्मणो वेदनेन निर्धूतं नाशितं कल्मषं पापं विपर्ययज्ञानमलमज्ञानं येषां, ते ब्रह्मज्ञाननिरस्त-समस्तपापादिसंसारकारणदोषाः, तद्बुद्धयः=तस्मिन्नात्मनि ब्रह्मणि बुद्धिर्मतिर्येषां बोद्धव्यान्तराभावात्,ते सर्वत्राब्राह्मणमा च चाण्डलात् ब्रह्मैकमतयः, तदात्मानः=तस्मिन्नात्मनि ब्रह्मणि आत्मा मनो येषां, मन्तव्यान्तराभावात्, ते सर्वत्राभूलोकमा च ब्रह्मलोकाद् ब्रह्मैकम-नसः, तन्निष्ठाः=तस्मिन्नात्मनि ब्रह्मणि निश्चला स्थितिः क्रियानिवृत्ति र्येषामन्तःकरणस्य, कर्तव्यान्तराभावात्, ते लोके स्थिताः अपि ब्रह्म-ण्येव नैश्चल्येन स्थिताः, तत्परायणाः=तत् आत्मा ब्रह्म परमुत्कृष्टमयनं

गेहं सदनं येषाम्, अयनान्तराभावात्, ते स्वस्वकर्मार्जितसदना अपि नक्तन्दिवं ब्रह्मैकसदनाः,अपुनरावृत्तिं = प्रारब्धकर्मसमाप्तौ सत्यां पुनरावृत्तिरहितां, प्रेत्यभाववर्जितां, ब्रह्मरूपेण स्थितिं मुक्तिं गच्छन्ति= प्राप्नुवन्तीत्यर्थः ॥ १७ ॥

अथैतदेव स्फोरयति—

"विद्याविनयसम्पन्ने, ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च, पण्डिताः समदर्शिनः" ॥१८॥

अर्थः—पण्डिताः=आत्मयाथात्म्यविदो ब्रह्मज्ञानिनः,विद्याविनयसम्पन्ने=वेदादिसर्वशास्त्रार्थपरिज्ञानं विद्या, विनयो नम्रीभावो, निरहङ्कारत्वं,लोकपरिचर्या,जनशुश्रूषा,विद्या च विनयश्च,तौ विद्याविनयौ, ताभ्यां सम्पन्ने समन्विते युक्ते,ब्राह्मणे=ब्राह्मणपदवाच्ये"ये ब्राह्मणाः शुश्रुवांसोऽनूचानाः विद्वांसः" (शत० ३ । १ । १ ५ ) इत्यादिश्रुतिसिद्धे प्रथमे वर्णे, गवि=धेनौ वृषभे वा, हस्तिनि=दन्तिनि, च=तथा, एव=निश्चयेन,शुनि=कुक्कुरे,च=तथा श्वपाके=शुनः कुक्कुरान् नित्यं पचाति पक्वमतीन् करोति गृहरक्षणादिनानाविधे कर्मणि कुशलान् विदधाति यः, स श्वपाकः, तस्मिन् शुनां शिक्षके चरमे वर्णे श्वपचे, समदर्शिनः=समं ब्रह्म द्रष्टुं शीलं येषां, ते ब्रह्मैकदर्शिनो भवन्ति, शरीरभेदेऽप्यात्मभेदाभावादित्यर्थः ॥ १८ ॥

अथ समदर्शिनः स्तौति—

"इहैव तैर्जितः सर्गो, येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म, तस्माद् ब्रह्मणि ते स्थिताः" ॥१९॥

अर्थः—तैः=ये समदर्शिनः पण्डितास्तैः समदर्शिभिर्ब्रह्मज्ञानिभिः कर्मयोगिभिरिहैव=अस्मिन्नेव जन्मनि,न परजन्मनि,परजन्मव्यवच्छेदोऽवधारणार्थः, सर्गः=सृज्यते यः,स तथा, जनिमृतिचक्रात्मकः संसारः, जितः=पराजितः,परास्तः, पर्यभावि, कैः ? येषां मनः=चेतोऽन्तःकरणं, साम्ये=सर्वेषां ब्राह्मणादिचाण्डालान्तानां प्राणिनां समत्वे, ब्राह्मणमारभ्य चाण्डालपर्यन्ताः सर्वे प्राणिनः समाः, शरीरभेदेऽपि आत्मभेदाभावादित्येवं सर्वेषां प्राणिनां समभावे स्थितं=नैश्चल्येनावस्थितम् ।

हि=यस्माद्, ब्रह्म=आत्मवस्तु "सर्वं ह्येतद् ब्रह्म, अयमात्मा ब्रह्म" (माण्डूक्यो० १। २) इत्यादिश्रुतेः, निर्दोषं=रागद्वेषादिनिखिलसंसार-दोषवर्जितं, समं=सर्वत्रैकरसं, नाणुमात्रेणापि विषमं,तस्मात् ते=येषां मनः साम्ये स्थितं,ते समदर्शिनः पण्डिताः, ब्रह्मणि=ब्राह्मणादि-चाण्डालान्ते प्राणिवर्गे स्थिताः अपि रागद्वेषादिनिखिलसंसारदोषा-भावाद् ब्रह्मवत् सर्वदा स्वस्वरूपे सर्वान्तरात्मनि ब्रह्मणि स्थिताः=अवस्थिताः वेदितव्या इत्यर्थः॥ १९॥

किंच—

"न प्रहृष्येत् प्रियं प्राप्य,नोद्विजेत् प्राप्य चाप्रियम्।
स्थिरबुद्धिरसंमूढो ब्रह्मविद् ब्रह्मणि स्थितः" ॥२०॥

अर्थः—प्रियम्=इष्टं सुखसाधनं शब्दस्पर्शादिविषयं, प्राप्य=उपलभ्य,न प्रहृष्येत=न प्रहृष्यति, न प्रफुल्लति,न मोमुदीति,च=पुन-राप्रियम्=अनिष्टं दुःखसाधनं शब्दस्पर्शादिविषयं, प्राप्य=अधिगम्य, नोद्विजेत्=नोद्विजते,न व्यथते,न दुर्मनायते,स्थिरबुद्धिः=सर्वेषु भूतेष्वेक-आत्मा ब्रह्मेति स्थिरा निश्चला मतिर्यस्य स, निश्चलमतिः, असंमूढः=समेत्येकाभावे (निरु० १ ३) शरीरादिना सार्धमात्मानमेकीकृत्य जातो विपर्ययप्रत्ययः संमोहः तद्वर्जितः, ब्रह्मवित्=आत्मवित्, समदर्शी पण्डितः कर्मयोगी,ब्रह्मणि=लोकेषु ब्राह्मणादि चाण्डालन्तेषु सर्वेषु जनेषु स्थितोऽपि सर्वान्तरात्मनि ब्रह्मणि,स्थितः=सर्वदाऽवस्थितः, इत्यर्थः ॥२०॥

किञ्च—

"बाह्यस्पर्शेष्वसक्तात्मा, विन्दत्यात्मनि यत् सुखम्।
स ब्रह्मयोगयुक्तात्मा, सुखमक्षय्यमश्नुते" ॥२१॥

अर्थः—बाह्यस्पर्शेषु=बाह्येषु स्पर्शप्रधानेषु विषयेषु, स्पृश्यन्ते इति तद्व्युत्पत्तेः, स्त्रीपुत्रादिषु, असक्तात्मा=सक्तीरक्तिरित्यनर्थान्तरम्, न सक्तो रक्त आत्मा मनो यस्य, सोऽनासक्तमनाः, विरक्तचित्तः, स्त्रीपुत्रादिकं परित्यज्य वैराग्यमुपाश्रितः संन्यस्तः, यत् सुखं=यत् लोकशास्त्रप्रसिद्धं प्रकृतिलयान्तं "वैराग्यात् प्रकृतिलयः"(सां० का० ४५) इति स्मृतेः,क्षय्यं सुखम्,आत्मनि=मनसि,विन्दति=लभतेऽनुभवति, ततो विशिष्टम् अक्षय्यं=क्षेतुमशक्यं,क्षयो विनाशः,स यस्य न शक्यः,

तदविनाशि शाश्वतमविनश्वरं, सुखम्=आनन्दं,सः=यः प्रियं विषयं प्राप्य न प्रहृष्यति,नाप्रियं विषयं प्राप्योद्विजते,सः, ब्रह्मयोगयुक्तात्मा=ब्राह्मणादिचाण्डालान्तेषु सर्वेषु भूतेषु साम्येन वर्तमानस्य निर्दोषस्यान्तरात्मनो ब्रह्मणो दर्शनं ब्रह्मयोगः, तस्मिन् ब्रह्मयोगे युक्तः समाहितः आत्मा मनो यस्य,स सर्वदा सर्वत्र ब्रह्मैकदर्शनचित्तः कर्मयोगी पण्डितः, अश्नुते=व्याप्नोति, प्राप्नोति "एकोवशी सर्वभूतान्तरात्मा, एकं रूपं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्" (कठो० ५।१२, इति श्रुतेरित्यर्थः ॥२१॥

ननु ब्रह्मज्ञानी कर्मयोगी ब्रह्मणीव विषयेषु कस्मात् न रमते ? तत्राह—

"ये हि संस्पर्शजाः भोगाः, दुःखयोनयः एव ते ।
आद्यन्तवन्तः कौन्तेय ! न तेषु रमते बुधः" ॥२२॥

अर्थः—ये संस्पर्शजाः=संस्पृश्यन्ते इति संस्पर्शाः विषयाः, तेभ्यो जाताः ये भोगाः=सुखविशेषाः, ते, एव=निश्चयेन, हि=यस्माद् दुःखयोनयः=दुःखानामाधिव्याधिरूपाणाम् ,आधयो रागद्वेषादयो,व्याधयो धातुक्षयादयः,तल्लक्षाणानाम, आध्यात्मिकानां तापानां, योनयो हेतवः, आद्यन्तवन्तः=आदिरुत्पत्तिरन्तो विनाशः,तद्वन्तः,उत्पत्तिविनाशवन्तः, तस्मात्, कौन्तेय=हे कुन्तीपुत्र ! तेषु=दुःखयोनिषु जन्मविनाशवत्सु भोगेषु विषयसुखलवेषु क्षुद्रसुखहेतुभूतेषु विषयेषु बुधः=पण्डितो ब्रह्मज्ञानी कर्मयोगी, न रमते=न रतिं कुरुते, न चेक्रीड्यते, को हि बुद्धिमान् नित्यमेकरसं ब्रह्मानन्दं शाश्वतं सुखं परित्यज्य दुःखनिदानभूताय क्षणभङ्गुराय विषयसुखाय क्षणिकेषु परिणामवत्सु विषयेषु रमेत चेक्रीड्येतेत्यर्थः ॥२२॥

किं बहुना—

"शक्नोतीहैव यः सोढुं, प्राक् शरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं, स युक्तः स सुखी नरः" ॥२३॥

अर्थः—यः=यो मनुष्यः, इहैव=अस्मिन्नेव जन्मनि, न परस्मिन्नित्यवधारणार्थः, शरीरविमोक्षणात् प्राक्=शरीरस्य देहस्य विमोक्षणं विमोक्षः पातो मरणं, तस्मात् प्राक् पूर्वं, यावन्न म्रियते तावात्, काम-

क्रोधोद्भवं = कामो रागः, क्रोधो द्वेषः, कामश्च क्रोधश्च, कामक्रोधौ, तावुद्भवौ = उद्भावितारौ यस्य वेगस्य, ताभ्यां वा उद्भवः उत्पत्तिर्यस्य वेगस्य, तं वेगं = मनसो वेगं, रोमाञ्चन-हृष्टनेत्रवदनादिलिङ्गो मनःप्रक्षोभात्मा कामोद्भवो वेगः, गात्रप्रकम्पप्रस्वेदसंदष्टौष्ठपुट-रक्तनेत्रादिलिङ्गो मनःप्रक्षोभात्मा क्रोधोद्भवो वेगः, तं मनसश्चेतसोऽन्तःकरणस्य प्रक्षोभमनवस्थानं, विषयेषु बलात् निपतनं, सोढुं = प्रसहितुं, प्रतिरोद्धुं,, निवर्तयितुं, शक्नोति = शक्यति, समर्थो भवति, सः = स एव, नरः = मनुष्यो युक्तः = कर्मयोगयुक्तः कर्मयोगी, सः = स एव मनुष्यः सुखी = लोके सुखीत्यर्थः।

किञ्च —

"योऽन्तःसुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति" ॥२४॥

अर्थः—यः = यो मनुष्यः, अन्तःसुखः = "एष त आत्मा सर्वान्तरः" (बृ० उ० ३।४।१) इत्यादिश्रुतेरन्तःशब्दः सर्वान्तरात्मवचनः, तस्मिन्नन्तरात्मनि सुखमानन्दो यस्य, सोऽन्तःसुखः, बाह्यविषयेषु यत् सुखं, तदन्तरात्मनो ब्रह्मणः एव सुखं, न बाह्यविषयाणामिति निश्चयादन्तरात्मसुखः, अन्तरारामः = अन्तरात्मन्यारामः आरमणं क्रीडनं क्रीडा यस्य, स स्त्रीपुत्रादिबाह्यविषयारामोऽप्यन्तरात्मारामः, तथा = तथैव, यः = यो मनुष्यः, एव = निश्चयेन, अन्तर्ज्योतिः = ज्योतिर्मनः, "ज्योतिषां ज्योतिरेकं, तन्मे मनः" (यजु० ३४।१) इति याजुषमन्त्रात्, अन्तरात्मनि ज्योतिर्मनोज्योतिर्यस्य, स बाह्यविषयमनोज्योतिः सन्नप्यन्तरात्ममनोज्योतिः, सः = यो बाह्यविषयसुखोऽप्यन्तरात्मसुखः, स्त्रीपुत्रादिबाह्यविषयारामोऽप्यन्तरात्मारामः, बाह्यविषयमनोज्योतिरप्यन्तरात्ममनोज्योतिः, सः, योगी = कर्मयोगी, ब्रह्मभूतः = ब्रह्मणि सर्वान्तरात्मनि भूतः स्थितः, लोके स्थितोऽपि ब्रह्मण्येव स्थितः, ब्रह्मनिर्वाणं = ब्रह्मणि निर्वाणं निर्वृतिं मुक्तिं, लयं वा सरिदिव समुद्रे, अधिगच्छति = प्राप्नोतीत्यर्थः ॥ २४ ॥

अथोक्तमेवार्थं विशदयति—

"लभन्ते ब्रह्मनिर्वाणमृषयाः क्षीणकल्मषाः।
छिन्नद्वैधाः यतात्मानः, सर्वभूतहिते रताः" ॥२५॥

अर्थः—ऋषयः = मुनयः कर्मयोगिनः, क्षीणकल्मषाः = निवृत्तपाप्मानः, कर्मसंस्पर्शवर्जिताः, छिन्नद्वैधाः = द्वैधं द्वेधाभावः संशयः, छिन्नं निवृत्तं द्वैधं संशयजातं येषां, ते निवृत्तसर्वसंशयाः, यतात्मानः = यतः संयतः आत्मा मनो येषां, ते संयतचेतसः, सर्वभूतहितेरताः = सर्वेषां भूतानां प्राणिनां हिते प्रिये सुखे रताः, ब्रह्मनिर्वाणं = ब्रह्मणि निर्वृतिं मुक्तिं लयं मोक्षं लभन्ते = विन्दन्ते, इत्यर्थः ॥२५॥

किमधिकेन—

"कामक्रोधवियुक्तानां, यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं, वर्तते विदितात्मनाम्" ॥२६॥

अर्थः—कामक्रोधवियुक्तानां = कामो रागः, क्रोधो द्वेषः, ताभ्यां वियुक्तानां रहितानां, यतचेतसां = संयतशरीरेन्द्रियमनसां, विदितात्मनां = ज्ञातात्मतत्त्वानां, सर्वत्र ब्रह्मदर्शिनां, यतीनां = कर्मसु यतमानानां कर्मयोगिनां, ब्रह्मनिर्वाणं = ब्रह्मणि निर्वृतिलक्षणो मोक्षोऽभितः = अभिमुखे संमुखे, वर्तते = दिवा रात्रौ बद्धाञ्जलिरुपतिष्ठते इत्यर्थः ॥२६॥

किञ्च—

"स्पर्शान् कृत्वा बहिर्बाह्यान्, चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा, नासाभ्यन्तरचारिणौ" ॥२७॥

"यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो, यः सदा मुक्त एव सः" ॥२८॥

अर्थः—यो मुनिः = यः कर्मयोगी, विगतेच्छाभयक्रोधः = इच्छा कामः, भयं भीतिः, क्रोधो द्वेषः, ते विगताः वीताः निवृत्ताः यस्य, यो न किञ्चिदिच्छति, न कुतश्चिद् बिभेति, न कस्मैचित् क्रुध्यति, कुप्यति, स निवृत्तेच्छाभयक्रोधः, यतेन्द्रियमनोबुद्धिः = इन्द्रियाणि च, मनश्च, बुद्धिश्च, ताः यताः संयताः वशीकृताः सन्ति यस्य, स वशीकृतेन्द्रियमनोबुद्धिः, मोक्षपरायणः = सर्वेषां प्राणिनां दुःखेभ्यो मोक्षो मोचनं परमयनं परा गतिर्यस्य, सर्वप्राणिदुःखप्रहाणतत्परः, बाह्यान् = बहिर्भवान्, स्पर्शान् = स्पृश्यन्ते इति स्पर्शाः विषयाः शब्दादयः, तान्, बहिः = अविषयत्वं बहिष्ठं, श्रोत्राद्यविषयान् कृत्वा, श्रोत्रादिभिरिन्द्रियैर-

विषयीकृत्य, च=तथा, चक्षुः=नेत्रं, नेत्रयुगलम्, एव=निश्चयेन, भ्रुवोः=उभयोर्भ्रुवोरन्तरे=मध्ये कूर्चे कृत्वा=दक्षिणवामयोर्न लोकयित्वा, नासाभ्यन्तरचारिणौ=नासिकयोरभ्यन्तरे चरणशीलौ, प्राणापानौ= उच्छ्वासनिःश्वासौ, समौ कृत्वा=न तीव्रौ न मन्दौ, न्यूनाधिकवर्जितौ, यथा स्वभावेन चरतस्तथा, कृत्वा, कर्मसु प्रवर्तते, सः=उक्तविशेषणो यो मुनिः, स मुनिः कर्मयोगी, सदा=सर्वदा मुक्त एव=संसारे वर्तमानोऽपि न कदाचिद् बद्धः संसारी, इत्यवधारणार्थः, संसारस्पर्श-रहित एव, मुक्त एवेत्यर्थः ॥ २७ ॥ २८ ॥

नन्विह सदा मुक्तोऽप्य ग्रेबद्धो भविष्यति ? तत्राह —

"भोक्तारं यज्ञतपसां, सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति" ॥२९॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे कर्मसंन्यासयोगो नाम पञ्चमोऽध्यायः ॥ ५ ॥

अर्थः—यज्ञतपसां=गृहमेधिभिः कर्मयोगिभिरनुष्ठितानां यज्ञानां, तप्तानां तपसां च, यज्ञाः पञ्च महायज्ञाः, तपः शीतोष्णादिद्वन्द्वसहनं, तेषां भोक्तारं=पालयितारं रक्षितारं, पालनाभ्यवहारकर्मणो भुजेस्त-न्निष्पत्तेः, पालनं रक्षणम्, सर्वलोकमहेश्वरं=सर्वेषां लोकानां महान्त-मीश्वरं हिरण्यगर्भादीनामपीशितारं नियन्तारं "तमीश्वराणां परमं महेश्वरम्" (श्वे० उ० ६ । ७) इति श्रुतेः, सर्वभूतानां=सर्वेषां भूतानां प्राणिनां सुहृदं=प्रत्युपकारनिरपेक्षतयोपकारिणं, मां=सर्वभूतान्तरा-त्मानं, सर्वकर्मफलदातारं, सर्वप्रत्ययसाक्षिणं, वासुदेवं मां, ज्ञात्वा= बुद्ध्वा, कर्तव्यधिया कर्मसु वर्तमानः प्रारब्धकर्मसमाप्तौ शान्तिं=सर्व-संसारदुःखात्यन्तनिवृत्तिलक्षणां ब्रह्मनिर्वाणाख्यां मुक्तिम्, ऋच्छति= प्राप्नोतीत्यर्थः ॥ २९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्र-निष्णातपण्डितस्वामिहरिप्रासदवैदिकमुनिकृते भगव-द्गीतोपनिषद्वैदिकभाष्ये पञ्चमोऽध्यायः ॥ ५ ॥

# "अथ षष्ठोऽध्यायः" ।

पञ्चमाध्याये भगवान् कर्मसंन्यासात् कर्मयोगः श्रेष्ठः, इति प्रत्यपीपदत्। कचित् कदाचिदर्जुनः,कर्मसंन्यासं कर्मयोगात् श्रेष्ठं भगवान् प्रत्यबूबुधदिति मा नाम मोहेन बोधिष्ट,तदर्थं षष्ठाध्यायमारभमाणःपुनरपि तस्य कर्मसंन्यासाच्छ्रेष्ठत्वं स्तुतिमुखेन प्रत्याययति—

"श्रीभगवानुवाच"।

**"अनाश्रितः कर्मफलं, कार्यं कर्म करोति यः ।**
**स संन्यासी च योगी च, न निरग्निर्नचाक्रियः" ॥१॥**

अर्थः—यः=यो मनुष्यः, कर्मफलं=कर्मणः फलं स्त्रीपुत्रधनपशुस्वर्गादिलक्षणम्, अनाश्रितः=नाश्रितः, नापेक्षमाणः, कर्मफलतृष्णारहितो, निष्कामः सन्, कार्यं=मयाकार्यं, कर्तव्यमिति बुद्ध्या, कर्म=वेदोक्तं लोकसम्मतं स्ववर्णोचितं कर्म,करोति=निर्वर्तयति यथाविधानमनुतिष्ठति,सः=असौ मनुष्यः,संन्यासी च=संन्यासिशब्दाभिधेयश्च, योगी च=कर्मयोगी च, कर्मयोगिशब्दवाच्यश्च, कर्मयोगी भवन्नपि संन्यास्येव,चकारौ संन्यासित्वं कर्मयोगित्वं च धर्मद्वयमेकत्र समुच्चिनुतस्तयोर्भिन्नाधिकरणत्वं च वारयतः, न निरग्निर्नचाक्रियः=अग्निशब्देनात्राग्निसाध्यत्वात् पञ्चमहायज्ञाख्यं कर्मोच्यते, क्रियाशब्देन च पञ्चमहायज्ञनिर्वृत्त्यर्थं यत् कर्म कर्तव्यं,तत् कर्मोच्यते,निर्गतोऽग्निर्यस्मात् स निरग्निः, पञ्चमहायज्ञाख्यकर्मपरित्यागी,न विद्यते क्रिया पञ्चमहायज्ञनिर्वृत्तिहेतुः कर्मकलापो यस्य, सोऽवश्यकर्तव्यसर्वकर्मपरित्यागी, यो निरग्निः, स न संन्यासी, यश्चाक्रियः, स न संन्यासीत्यर्थः ॥१॥

ननु यः कर्मयोगी, स संन्यासी कथं स्यात् ? तत्राह—

**"यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ! ।**
**नह्यसंन्यस्तसङ्कल्पो योगी भवति कश्चन" ॥२॥**

अर्थः—पाण्डव=हे पाण्डुनन्दन ! यं=यमर्थं,संन्यासं=संन्यासशब्दाभिधेयम्,इति=एवं, प्राहुः=कथयन्ति,वदन्ति,पण्डिताः,तं=तमर्थं, योगं=कर्मयोगं कर्मयोगशब्दवाच्यं, विद्धि=जानीहि, संन्यासशब्दार्थं

कर्मयोगशब्दार्थं चैकं निश्चिनुहि। कस्मात्? हि=यस्मात्, कश्चन=कोऽपि मनुष्योऽसंन्यस्तसङ्कल्पः=न संन्यस्तः परित्यक्तः सङ्कल्पःफलविषयोऽभिसन्धिर्येन, सोऽपरित्यक्तफलाभिसन्धिर्योगी=कर्मयोगी, न भवति=न सम्पद्यते, किन्तु परित्यक्तकर्मफलाभिसन्धिरेव सर्वः कर्मयोगी बोभूयते, इत्यर्थः।

कर्मणां सर्वेषां प्रकृतिगुणजन्यत्वेन यावच्छरीरमवश्यंभावितया स्वरूपतः परित्यागासम्भवात्,केषां चित् स्वरूपतः परित्यागसम्भवेऽपि सर्वेषां निःशेषेण परित्यक्तुमशक्यत्वात्, फलतः परित्याग एव तेषां स्वरूपतःपरित्यागः,नहि परित्यक्तफलानि कर्माणि क्रियमाणानि सन्त्यापि बन्धकानि भवन्ति, न चाबन्धकानि भवन्ति तानि कर्माणि सन्तीति वक्तुं शक्यन्ते। चेत् स्युः? बध्नीयुः,न बध्नन्ति,तेन सन्त्यपि न सन्तीति सुध्रुवम्। ये तु कर्मणां स्वरूपतः परित्यागं मन्यन्ते, तेऽपि कानि चित् परित्यजन्ति कानि चित् परिगृह्णन्ति, न निःशेषेण सर्वाणि तानि संन्यस्यन्ति, तस्मात् फलतः परित्यागः एव कर्मणां स्वरूपतः परित्यागः संन्यासः, सोऽयं संन्यासः कर्तव्यबुद्ध्या वेदोक्तानि लोकसम्मतानि स्ववर्णोचितानि सर्वाणि कर्माणि यथाविधानमनुतिष्ठति तत्रभवति कर्मयोगिनि वरीवृत्यते। तस्मादेष कुर्वन्नपि सर्वाणि कर्माणि,तिष्ठन्नपि गृहाश्रमे महति कुटुम्बे,परमार्थतः संन्यास्येव,नास्ति संशयलवावकाशः। ननु यो मनुष्यः कर्मयोगमारुरुक्षति, पूर्णःकर्मयोगी भवितुमिच्छति, तेन तदारोहहेतुत्वाद् वेदोक्तानि लोकसम्मतानि सर्वाणि कर्माणि यथाशास्त्रं क्रियेरन्, यस्तु योगारूढः पूर्णः कर्मयोगी समपादि, तेन किमर्थं सर्वाणि तानि यथाशास्त्रमनुष्ठीयेरन्। नहि तस्य कर्मानुष्ठाने कारणं किञ्चित् पश्यामः, प्रयोजनाभावात्?, तत्राह—

**"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।**
**योगारूढस्य तस्यैव शमः कारणमुच्यते"॥३॥**

अर्थः—योगं=कर्मयोगम्, आरुरुक्षोः=आरोढुमिच्छोः,पूर्णः कर्मयोगी स्यामित्युशतो मुनेः=भविष्यतःकर्मयोगिनः, कर्म=वेदविहितं लोकसम्मतं स्ववर्णोचितं कर्म, निष्कामभावेन कर्मानुष्ठानं, कारणं=कर्मयोगारोहे कारणं,कर्मानुष्ठाने कर्मयोगारुरुक्षा निमित्तं हेतुरुच्यते=कथ्यते,पण्डितैर्वेदविद्भिः। तस्यैव=यः पूर्वं योगमारुरुक्षुरासीत्,तस्यैव

नान्यस्येत्यवधारणार्थः, योगारूढस्य=कर्मयोगमारूढस्य, निष्कामकर्मानुष्ठानेन प्राप्तकर्मयोगस्य पूर्णकर्मयोगिनो योगयुक्तस्य सतः, शमः= शामयतेर्दर्शनकर्मणो घञि रूपं, लोकसङ्ग्रहदर्शनं, कारणं=कर्मानुष्ठाने कारणं, निमित्तं, हेतुरुच्यते=कथ्यते पण्डितैर्वेदविद्भिरित्यर्थः ।

कर्मयोगमारुरुक्षुः खलु मनुष्यस्तदारोहार्थं सततं कर्मसु प्रवर्तते, स एव पुनः कर्मयोगमारूढः स्वार्थाभावेऽपि लोकानां सङ्ग्रहार्थं नित्यं कर्मसु प्रयतते । कर्मयोगारुरुक्षोर्मुनेः कर्मानुष्ठाने कारणं नूनं तस्य मानसी व्यापृतिः कर्मयोगारुरुक्षा, कर्मयोगारूढस्य सतस्तस्यैव च मुनेः कर्मानुष्ठाने कारणं तन्मनःकर्म लोकसङ्ग्रहदर्शनम् । उक्तं चैतद् भगवता पुरस्ताद् "लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि" (गी० ३ । २०) इति । तदेवेदं कारणमुखेन पुनरवाचीति युक्तमुत्प्रेक्षामहे ॥ ३ ॥

ननु योगारूढस्य किं लक्षणं ? तत्राह—

"यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसंन्यासी, योगारूढस्तदोच्यते" ॥४॥

अर्थः—यदा=यस्मिन् काले, हि=निश्चयेन, इन्द्रियार्थेषु = इन्द्रियाणां श्रोत्रादीनामर्थाः विषयाः शब्दादयस्तेषु भुज्यमानेषु नानुषज्जते=ममैते भोग्याः, अहमेतेषां भोक्तेति भोग्यभोक्तृबुद्ध्या न परिष्वजते, नाभिषङ्गं कुरुते, कर्मसु=वेदोक्तेषु सर्वेषु कर्मसु स्ववर्णोचितेषु क्रियमाणेषु नानुषज्जते=अहमेषां कर्तेति कर्तृत्वधिया न सासज्यते, नाभिनिविशते । सर्वसङ्कल्पसंन्यासी = सर्वेषां सङ्कल्पानां विषयकर्मगोचराणां " भोक्ष्ये, करिष्ये " इत्येवंरूपाणां संन्यासी परित्यागी च भवति, तदा=तस्मिन् कालेऽसौ कर्मयोगी, योगारूढः = कर्मयोगमारूढः, सम्प्राप्तकर्मयोगः, पूर्णः कर्मयोगी, कर्मयोगयुक्त इत्येतत्, उच्यते= कथ्यते, इत्यर्थः ॥४॥

नन्वीदृग् योगरूढो मनुष्यः कथं भवेत् ? तत्राह—

"उद्धरेदात्मनाऽऽत्मानं, नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैवात्मनो रिपुः" ॥५॥

अर्थः—आत्मानं=स्वम्, आत्मना=स्वेन, उद्धरेत्=ऊर्ध्वं हरेत्,

उन्नयेत्, उज्जीवयेत्, योगारूढतामापादयेत् मनुष्यः, नात्मानं=स्वम्, अवसादयेत्=विनाशयेत् अवनयेत्, "कथमेतद् भविष्यति, नार्हामि कर्तुमेतद्" इत्येवं स्वमात्मानं न जात्वधो गमयेत्, न कर्हिचिदुत्साहहीनं विदध्यात्। हि=यस्माद् आत्मैव=स्वमेव, नान्यः इत्यवधारणार्थः, आत्मनः=स्वस्य, बन्धुः=उद्धरणहेतुत्वात् मित्रम्, उपकारकः, आत्मैव= पूर्ववदवधारणार्थः, स्वमेवात्मनः=स्वस्य रिपुः=अवसादनहेतुत्वात्-शत्रुरपकारक इत्यर्थः ॥५॥

ननु कीदृगात्मा बन्धुरात्मनः, कीदृक् चात्मा रिपुरात्मनः? तत्राह—

"बन्धुरात्माऽऽत्मनस्तस्य, येनात्मैवात्मना जितः।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत्" ॥६॥

अर्थः—तस्य=अमुष्यात्मनः=स्वस्य, स आत्मा बन्धुः=उद्धरण-हेतुत्वान्मित्रं, येनात्मना, एव=निश्चयेनात्मा=शरीरेन्द्रियमनोलक्षणः कार्यकरणसङ्घातो जितः=वशीकृतः। अनात्मनस्तु=नात्मा कार्यकरण-सङ्घातो विद्यते वशो यस्य, तस्यावशीकृतकार्यकरणसङ्घातस्याजितात्म-नस्तु, जितात्मव्यवच्छेदस्तोरर्थः, शत्रुत्वे=शत्रुभावेऽपकारित्वे, विनाशने वाऽवनयने वाऽऽत्मैव=स्वमेव वर्तेत=वर्तते, शत्रुवत्=यथात्मेतरोऽनात्मा शत्रुरात्मनोऽपकारे वर्तेतेत्यर्थः ॥ ६ ॥

ननु जितात्मनो बन्धुरात्मा भवतु, तेन तस्य किं स्यात्? तत्राह—

"जितात्मनः प्रशान्तस्य, परमात्मा समाहितः।
शीतोष्णसुखदुःखेषु, तथा मानापमानयोः" ॥७॥

अर्थः—जितात्मनः=जितो वशीकृतः आत्मा कार्यकरणसङ्घातो येन, तस्य वशीकृतकार्यकरणसङ्घातस्य, प्रशान्तस्य=प्रकर्षेण, सह मूलेन वासनाख्येन, शान्ताः मैत्र्यादिभावनया निवृत्ताः, रागद्वेषादयो मलाः यस्य, तस्य निवृत्तसवासनरागद्वेषादिमलस्य, प्रसन्नान्तःकरणस्य, निर्मल-चेतसो मुनेः कर्मयोगिनः, शीतोष्णसुखदुःखेषु=चित्तविकृतिहेतुषु शीतो-ष्णसुखदुःखहानिलाभजयपराजयप्रभृतिषु द्वन्द्वेषु प्राप्तेषु, तथा=तेनैव प्रकारेण, मानापमानयोः=सत्कारतिरस्कारयोः पूजापरिभवयोः मनो-विकारकारणयोः प्राप्तयोः, आत्मा=मनः, चित्तमिति यावत्, परं=

केवलमेकाकि,यथा भवति तथा,समाहितः = एकाग्रो,निर्विकारः, स्वस्थः, सर्वास्ववस्थासु समो, वरीवृत्यते, न लेशतोऽपि विकुरुते, न मात्रयाऽपि काञ्चिद् विक्रियां भजते, नेष्टे वस्तुनि प्राप्ते मोमुद्यते, नानिष्टे वस्तुनि भाविते रोरुद्यते, यद् यदा प्राप्तं, यद् यदा भावितं, तदेव तदा शुभं, मङ्गलं मनुते, इत्यर्थः ॥ ॥ ७ ॥

अथ जितात्मानस्तस्य योगारूढत्वमाह—

"ज्ञानविज्ञानतृप्तात्मा, कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी, समलोष्टाश्मकाञ्चनः" ॥८॥

अर्थः—योगी = यः कर्मयोगी, विजितेन्द्रियः = विजितानि वशीकृतानि इन्द्रियाणि बाह्यान्तःकरणानि श्रोत्रादिमनोऽन्तानि येन, स विजितसर्वेन्द्रियो जितात्मा,कूटस्थः = निश्चलः,शीतोष्णसुखदुःखादिषु द्वन्द्वेषु युग्मेषु प्राप्तेषु,प्राप्तयोश्च मानापमानयोर्निर्विकारः, ज्ञानविज्ञानतृप्तात्मा = ज्ञानम् आत्मज्ञानं,विविधानां पदार्थानां प्रकृतितत्कार्याणां ज्ञानं विज्ञानं,ज्ञानं च विज्ञानं च,ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तस्तुष्टः सञ्जातालंप्रत्ययः आत्माऽन्तःकरणं यस्य,स तथा,ज्ञानविज्ञानपरिपूरितान्तःकरणः, समलोष्टाश्मकाञ्चनः = समानि स्वस्वव्यवहारसाधकत्वेन समानयोगक्षेमानि लोष्टाश्मकाञ्चनानि मृत्खण्डपाषाणसुवर्णानि यस्यासौ प्रतिवस्तु तुल्यव्यवहारसिद्धिहेतुतामात्रदृष्टिः, स एव कर्मयोगी, युक्तः = कर्मयोगयुक्तः, सम्प्राप्तकर्मयोगो योगारूढः, इति = एवमुच्यते = कथ्यते, पण्डितैर्वेदविद्भिरित्यर्थः ॥८॥

नन्वस्ति योगारूढतोऽपि विशिष्टः कश्चित् कर्मयोगी ?, तत्राह—

"सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु, समबुद्धिर्विशिष्यते" ॥९॥

अर्थः—सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु=प्रत्युपकारमनपेक्ष्योपकर्ता सुहृत्, स्नेहवशेनोपकर्ता मित्रं, शत्रुररिः, विवदमानयोरुभयोर्न कस्यचित् पक्षं भजते यः, स उदासीनः, विवदमानयोरुभयोर्हिताकाङ्क्षी मध्यस्थः, द्वेषविषयो द्वेष्यः, स्वस्याप्रियः, बान्धवो बन्धुः सम्बन्धी, तेषु सुहृदादिषु बन्धुन्तेषु, साधुष्वपि = चार्थेऽपिः,

सदाचाराः, शास्त्रविहितकारिणः, प्राणात्ययप्राप्तावपि ये स्वकं धर्मं न परित्यजन्ति, ते महात्मानः साधवः,तेषु शास्त्रविहितकारिषु महात्मसु, च=तथा, पापेषु=दुराचाराः, लोकशास्त्रप्रतिषिद्धकारिणः,स्वदेश-जातिद्रोहिणः, क्षुद्रात्मानः पापाः, तेषु लोकशास्त्रप्रतिषिद्धकारिषु क्षुद्रात्मसु,च=उभयेषु, न केवलं साधुषु,न केवलं पापेष्वसाधुषु किन्तु साध्वसाधूभयेषु,समबुद्धिः=समा रागद्वेषशून्या "यस्मिन् यथा वर्तते यो मनुष्यस्तस्मिन् तथा वर्तितव्यं स धर्मः। मायाचारो मायया बाधितव्यः, साध्वाचारः साधुना प्रत्युपेयः" ( महाभा० शां०१०९। २९) इत्यादिशास्त्रेण "त्वं मायाभिरप मायिनोऽधमः" (ऋ० १। ५१। ५) इत्यादिमन्त्रजातमूलकेन, यस्मिन् विषये पदार्थे यथावर्तनं शिष्टं, तस्मिन् विषये, विनैव रागं, विनैव द्वेषं, तथा वर्तनशीला बुद्धि-र्मतिर्यस्य, स सर्वत्रतुल्यबुद्धिः न कश्चित् सुहृत्, न कश्चिद् दुर्हृत्, न कश्चित् पापः, न कश्चित् साधुः, आत्मैवैकस्तया तया प्रकृत्या संयुक्त-स्तथा तथा समाख्यायते, प्रकृतेर्गुणैस्तानि तानि विहितप्रतिषिद्धा-न्युच्चावचानि कर्माणि क्रियन्ते, तत्फलानि च यथाकालमुपभुज्यन्ते, नात्मनेत्येवं सर्वत्रात्मबुद्धिर्ब्रह्मबुद्धिर्यः कर्मयोगी,स विशिष्यते=सर्वदा सर्वथा सर्वत्र शास्त्रोक्तकारित्वादेकात्मबुद्धित्वाच्च सर्वेभ्यो योगारूढेभ्यो योगयुक्तेभ्यो विशिष्टो विद्यते,सर्वान् योगारूढान् कर्मयोगिनोऽतिलङ्घते, सर्वेभ्यः प्रशस्यते तरामित्यर्थः ॥९॥

अथ कर्मयोगमारुरुक्षुं कर्मयोगिनं, मनोविशुद्ध्यर्थं साधनं समाधि-योगमुपदिशति पञ्चभिः श्लोकैः—

**"योगी युञ्जीत सततमात्मानं रहसि स्थितः।**
**एकाकी यतचित्तात्मा, निराशीरपरिग्रहः" ॥१०॥**

अर्थः—योगी=योगमारुरुक्षुः कर्मयोगी,सततं=निरन्तरं,दिवा रात्रौ यथावकाशम्,एकाकी=एकलः, रहसि=एकान्ते, विजने प्रदेशे, स्थितः=आसीनः, वक्ष्यमाणप्रकारेण सम्यगुपविष्टः, आत्मानं=मन-श्चित्तं, युञ्जीत=समादध्यात्, समाहितमेकाग्रं विदध्यात्, कथंभूतः? यतचित्तात्मा=यतौ संयतौ चित्तं मनः, आत्मा देहः कायो यस्य,स तथा, वशीकृतमनःकायः,चित्तस्य मनसो यतत्वं दृष्टश्रुतवस्तुचिन्तनव्यापार-

शून्यत्वम्, आत्मनो देहस्य यतत्वमासनप्रयुक्तदुःखशून्यत्वम्, निराशीः= निरिच्छः, निष्कामः, फलतृष्णारहितः, अपरिग्रहः=न विद्यते परितः सर्वतः, ग्रहो ग्रहणं वस्त्राणां यस्य, सोऽल्पवस्त्राच्छन्नदेहः, इत्यर्थः॥१०॥

"शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः।
नात्युच्छ्रितं नातिनीचं, चैलाजिनकुशोत्तरम्" ॥११॥

अर्थः—शुचौ=मार्जनप्रोक्षणादिसंस्कारकर्मणा, स्वभावेन वा शुद्धे, पूते देशे प्रदेशे, नात्युच्छ्रितं=नात्युच्चं, नातिनीचं=नातिनिम्नं, चैलाजिनकुशोत्तरं=चैलं मृदु वस्त्रम्, अजिनं वैयाघ्रं कार्ष्णं वा चर्म, कुशाः दर्भाः, उत्तरम् उपर्युपरि विपरीतक्रमेण-भूम्युपरि कुशाः, तदुपरि चर्म, तदुपरि कोमलं वस्त्रमित्येवंरूपेण यस्य, तच्चैलाजिनकुशोत्तरम्, चैलं चाजिनं च, ते कुशेभ्यः उत्तरे उपरितने यस्मिन्निति वाऽत्र समासः, स्थिरं=निश्चलं, कम्पनवर्जम्, आत्मनः=स्वस्य, स्वोपवेशनयोग्यम्, आसनं=विष्टरम्, आस्यतेऽस्मिन्निति तद्व्युत्पत्तेः, प्रतिष्ठाप्य=स्थापयित्वा, चतुष्कोणादिसंनिवेशविचारेण विधायेत्यर्थः ॥११॥

"तत्रैकाग्रं मनः कृत्वा, यतचित्तेन्द्रियक्रियः।
उपविश्यासने युञ्ज्याद् योगमात्मविशुद्धये" ॥१२॥

अर्थः—तत्र=तस्मिन्नासने=विष्टरे, उपविश्य=पद्मसिद्धासनाभ्यां समास्य, येन वाऽऽसनेनोपवेशनप्रकारविशेषेणोपवेष्टुं शक्यते, तेनासनेनोपविश्य, यतचित्तेन्द्रियक्रियः=यताः संयताः चित्तस्य मनसोऽन्तःकरणस्येन्द्रियाणां श्रोत्रादीनां बाह्यकरणानां च क्रियाः स्वस्वविषयगोचराः व्यापाराः वृत्तयो येन, स वशीकृतबाह्यान्तःकरणव्यापारः, मनः=चित्तमेकाग्रम्=एकं ध्येयं वस्त्वग्रे प्रमुखे यस्य, तदेकवस्तुविषयं, कृत्वा=विधाय, आत्मविशुद्धये=आत्मा चित्तं, मनः, तस्य विशुद्धिस्तमोरजोभ्यां वियुक्तस्य सत्त्वस्योद्रेकः, राजसतामसवृत्तिनिरोधपूर्विका सात्त्विकवृत्तेरुत्पत्तिः, ऐकाग्र्यं, तत्सिद्धये, योगं=समाधिं, चित्तैकाग्र्यात्मकं, युञ्ज्यात्=कुर्यादभ्यसेदित्यर्थः ॥१२॥

अथासनोपरि शरीरधारणप्रकारमाह—

"समं कायशिरोग्रीवं धारयन्नचलं स्थिरः।
सम्प्रेक्ष्य नासिकाग्रं स्वं, दिशश्चानवलोकयन्" ॥१३॥

अर्थः—कायशिरोग्रीवं=कायःकटिप्रदेशादारभ्य ग्रीवान्तो देहमध्यभागः, शिरो मूर्धा, ग्रीवा शिरोधिः,कायश्च शिरश्च ग्रीवा च, तत् कायशिरोग्रवं,प्राण्यङ्गत्वादेकवद्भावः, समं=समानमृजु, मूलाधारादारभ्य मस्तकपर्यन्तमवक्रम्, अचलं=निश्चलं निष्कम्पं, धारयन्=स्थापयन्, स्थिरः=दृढो दृढप्रयत्नो भवन्, स्वं=स्वकीयं, नासिकाग्रं=नासिकाप्रान्तं, सम्प्रेक्ष्य=चक्षुर्भ्यां सम्यगवलोक्य नासिकाग्रे चक्षुषो दृष्टिं कृत्वा, अर्धनिमीलितनयनो भूत्वा, च=पुनरन्तराऽन्तरा दिशोऽनवलोकयन्=प्राचीप्रतीच्यद्याः आशाः अनालोचयन्, आसीत=उपविशेदित्युत्तरेणान्वयः ॥ १३ ॥

किञ्च—

"प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनः संयम्य मच्चित्तो युक्त आसीत मत्परः" ॥१४॥

अर्थः—प्रशान्तात्मा=प्रकर्षेण शान्तः रागद्वेषविरहितः आत्मा मनोऽन्तःकरणं यस्य, सोऽत्यन्तनिवृत्तरागद्वेषमनाः,रागद्वेषयबीजस्य वासनानामकस्य संस्कारस्यापि निवृत्तिः प्रशान्तिः,प्रियाप्रियेषु विषयेषु सन्निहितेषु सत्स्वपि रागद्वेषयोरनुत्पत्तिः शान्तौ प्रकर्षः, विगतभीः=विगता विशेषेण गता भृशं निवृत्ता भीरात्मोच्छेदभीतिर्यस्यात्मनित्यत्वनिश्चयात्,स विनिवृत्तात्मोच्छेदभीतिः,ब्रह्मचारिव्रते=ब्रह्मचारिणां व्रते ब्रह्मचर्ये सर्वेन्द्रियसंयमे, स्थितः=प्रतिष्ठितः, मनः=चित्तं, संयम्य=निगृह्य,विषयेभ्यो मनसो वृत्तीरुपसंहृत्य,मत्परः=अहमीश्वरः परः श्रेष्ठोऽर्थः परमपुरुषार्थो यस्य,स मत्परो, मत्प्रियो, मत्परमभक्तो, मच्चित्तः=मयीश्वरे चित्तं मनो यस्य,स मच्चित्तो मन्मना भूत्वा,वृत्त्वा, युक्तः=समाधियोगयुक्तः समाहितः सन्नासीत=उपविशेदित्यर्थः ॥१४॥

अथोपदिष्टस्य समाधियोगस्य फलमुच्यते—

"युञ्जन्न एवं सदाऽऽत्मानं, योगी नियतमानसः ।
शान्तिं निर्वाणपरमां, मत्संस्थामधिगच्छति" ॥१५॥

अर्थः—एवम्=उक्तप्रकारेण, सदा=सर्वदा प्रतिदिनं यथावकाशम्, आत्मानं=मनो, युञ्जन्=युञ्जानः, समादधानः, समाहितं

कुर्वाणो, योगी = कर्मयोगी, नियतमानसः=नितरां यतमुपरतं निरुद्धं राजसतामसवृत्तिशून्यं सम्पन्नं, मानसं=मनो यस्य, स नियतमनाः, निरुद्धराजसतामसवृत्तिमनाः, विशुद्धचित्तो, मत्संस्थां=मयि परमेश्वरे ब्रह्मणि सम्यक्स्थितिरूपां, निर्वाणपरमां=निर्वाणं मोक्षः, ततोऽपि परमामुत्कृष्टां शान्तिं = संसारोपरतिं, संसारे वर्तमानोऽपि संसारदुःखनिवृत्तिमधिगच्छति = प्राप्नोतीत्यर्थः ॥१५॥

अथ मनोविशुद्ध्यर्थं योगं युञ्जानस्य कर्मयोगिनः आहारादिनियममाह द्वाभ्याम्—

**"नात्यश्नतस्तु योगोऽस्ति, न चैकान्तमनश्नतः ।**
**नचातिस्वप्नशीलस्य, जाग्रतो नैव चार्जुन !" ॥१६॥**

अर्थः—अर्जुन = हे अर्जुन ! अत्यश्नतस्तु = योऽत्यन्तं नाश्नाति, तद्व्यावृत्त्यर्थस्तुः, स्वोदरपरिमाणमतीत्य यदशनं, तदत्यशनं, तस्य कुर्वतः, स्वोदरपरिमाणादधिकं जरयितुमशक्यमभ्यवहरतो बह्वाशिनो, योगः = समाधियोगो, नास्ति = न भवति, न सिध्यति, च = तथा, एकान्तम् = अत्यन्तं, सर्वथा, ऽनश्नतः = अभुञ्जानस्य, निजोदरपरिमाणाज्जरयितुं शक्यादत्यल्पं जेमनं कुर्वाणस्य, योगो नास्ति = न भवति, न सिध्यति "यदु वा आत्मसंमितमन्नं, तदवति, तन्न हिनस्ति, यद् भूयो, हिनस्ति तद्, यत् कनीयो, न तदवति" (शत० ७।५।१।१४) इति श्रुतेः, च = तथाऽतिस्वप्नशीलस्य = स्वप्नो निद्रा, शीलं स्वभावः, अत्यन्तनिद्रास्वभावस्य, निद्रापरिमाणमतिक्रम्य निद्रालोः, च = तथाऽतिजाग्रतः = अत्यन्तं जागरणं कुर्वतः, जागर्तिपरिमाणमुल्लङ्घ्य जागरूकस्य, एव = निश्चयेन, योगो नास्ति = न भवति, न सिध्यतीत्यर्थः ॥१६॥

ननु कीदृक्षस्य तर्हि योगो भवति ?, तत्राह—

**"युक्ताहारविहारस्य, युक्तचेष्टस्य कर्मसु ।**
**युक्तस्वप्नावबोधस्य, योगो भवति दुःखहा" ॥१७॥**

अर्थः—युक्ताहारविहारस्य = आहारोऽशनं, जेमनं, भोजनम्, आह्रियतेऽद्यते भुज्यते इति तद्व्युत्पत्तेः, विहारो विहरणं, विक्रमणं, पादक्रमः संचारः, तौ युक्तौ परिमाणयुक्तौ, नियतपरिमाणौ, परिमितौ यस्य, तस्य

परिमितान्नाङ्घ्रिचलनस्य, कर्मसु=प्रतिदिनं स्वकर्तव्येषु लौकिकेषु वैदिकेषु च कर्मसु, युक्तचेष्टस्य=युक्ता परिमाणयुक्ता परिमिता चेष्टा सार्थिका सप्रयोजना शरीरेन्द्रियक्रिया यस्य,तस्य परिमितशरीरेन्द्रियव्यापारस्य, युक्तस्वप्नावबोधस्य=युक्तौ कालपरिमाणयुक्तौ नियतकालौ स्वप्नश्चावबोधश्च, स्वप्नो निद्रा, जागरणमवबोधः, तावुभौ यस्य, तस्य परिमितनिद्राजागरणस्य, कर्मयोगिनो, दुःखहा=दुःखस्य सर्वदुःखबीजस्यान्तःकरणाविशुद्धिलक्षणस्य रजोगुणतमोगुणोद्रेकस्य हन्ता नाशयिता, योगः=समाधियोगो भवति=सिध्यतीत्यर्थ ॥१७॥

अथ सिद्धयोगस्य समाहितचित्तस्य कर्मयोगिनो लक्षणमाह—

**"यदा विनयतं चित्तमात्मन्येवावतिष्ठते ।**
**निःस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा" ॥१८॥**

अर्थः—यदा=यस्मिन् काले, चित्तं=योगं युञ्जानस्य कर्मयोगिनश्चित्तं, विनियतं=विशेषेण नियतं निरुद्धं, निरुद्धरजस्तमोवृत्तिकं, विगतरजस्तमस्कतया सत्त्वोद्रेकादतिस्वच्छं, विशुद्धं सद्, आत्मन्येव=स्वात्मन्येव, स्वस्मिन्नेव, न विषयेषु, इत्यवधारणार्थः,अवतिष्ठते=स्थितिं लभते, न जातु विषयविषयं वृत्तिविकारं भजते, तदा = तस्मिन् काले, सर्वकामेभ्यः=सर्वेभ्यः कामेभ्यो विषयेभ्यो दृष्टादृष्टेभ्यो निस्पृहः=निर्गता स्पृहा तृष्णा यस्य,स तथा,दृष्टादृष्टसर्वविषयवितृष्णः कर्मयोगी, युक्तः= समाधियोगयुक्तः समाहितचित्तः,इत्युच्यते=कथ्यते,योगज्ञैरित्यर्थः॥१८॥

अथ समाधियोगं युञ्जानस्य कर्मयोगिनः समाहितं चित्तमुपमानेन स्पष्टयति

**"यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः" ॥१९॥**

अर्थः—यथा=यद्वत्,निवातस्थः=निवाते वातवर्जिते देशे स्थाने तिष्ठतीति निवातस्थः, वायुरहिते स्थाने स्थितो, दीपः=प्रदीपो, नेंगते= न चलति, न कम्पते, सा=यो दीपो नेंगते,स दीपः, उपमा=उपमानम् उपमीयतेऽनयेति तद्व्युत्पत्तेः,स्मृता=अस्मारि,यद्वन्निवातस्थो दीपो नेङ्गते, तद्वद् योगिनः समाहितं चित्तं नेङ्गते, इत्यमुना प्रकारेणाध्यगायि समाधि योगमनुतिष्ठद्भिः कर्मयोगिभिः । स दीपः कस्योपमा स्मृता ? आत्मनः=

मनसश्चित्तस्य, योगं=समाधिं समाधानमैकाग्रयं, युञ्जतः=अनुतिष्ठतोऽभ्यस्यतो, योगिनः=कर्मयोगिनो, यतचित्तस्य=यतं च तच्चित्तं च, यतचित्तं, निरुद्धचित्तं, निरुद्धराजसतामसवृत्तिकं चित्तं, तस्य निरुद्ध राजसतामसवृत्तिकस्य विशुद्धस्यैकाग्रस्य योगिनश्चित्तस्येत्यर्थः ॥१९॥

अथ समाधियोगस्य स्वाभिमतमर्थं, तस्य कर्मयोगमारुरुक्षुणा कर्मयोगिना योक्तव्यत्वं च प्रतिपिपादयिषुरादौ सफलं तत्स्वरूपमाह त्रिभिः-

"यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति" ॥२०॥

अर्थः—यत्र=यस्मिन् काले, चित्तं=मनोऽन्तःकरणं, योगसेवया=समाधियोगो योगः, तस्य सेवा सेवनं पुनःपुनरनुष्ठानमभ्यासः, तेन समाधियोगाभ्यासेन दीर्घकालनैरन्तर्यसत्कारासेवितेन, निरुद्धं=सर्वासां प्रमाणादिवृत्तीनां क्लिष्टाक्लिष्टरूपाणामनुदयो निरोधः, तदुपेतं, सर्वतो निवृत्ताखिलवृत्तिकं निरिन्धनाग्निवदुपशान्तं भवदुपरमते=बाह्याभ्यन्तरविषयेभ्यो विनिवर्तते, सर्वथा विषयप्रवणतां हित्वा निस्तरङ्गमहोदधिकल्पं स्वरूपमात्रे निराकुलं पर्यवतिष्ठते, यत्र च=यस्मिंश्च चित्तनिरोधकाले, वृत्तेरनुदयादात्मनैव=स्वेनैवात्मतत्त्वेनात्मानं=सर्वभूतान्तरात्मानं स्वं, ब्रह्मतत्त्वं, पश्यन्=साक्षात्कुर्वन् "यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत्" (श्वे० उ० २ । १५) इति श्रुतेः, आत्मनि=सर्वभूतान्तरात्मनि स्वस्मिन्नेव ब्रह्मणि स्वे रूपे, तुष्यति=तृप्यति, नान्यत्किञ्चिदाकांक्षति, तं चित्तनिरोधं योगसंज्ञितं विद्यादिति परेणान्वयः ॥ २० ॥

अथात्मतोषमेवोपपादयन्नाह—

"सुखमात्यन्तिकं यत्तद् बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः" ॥२१॥

अर्थः—यत्=यत् सुखम्, आत्यन्तिकम्=अन्तमतिक्रम्य वर्तमानमत्यन्तम्, अत्यन्तमेवात्यन्तिकं, स्वार्थे तद्धितप्रत्ययः, आद्यन्तशून्यम, अनन्तं, बुद्धिग्राह्यम्=आत्मानुभवोऽत्र बुद्धिः, तया ग्राह्यं स्वानुभवमात्रगम्यम्, अतीन्द्रियम्=इन्द्रियाणि बाह्यान्तःकरणानि-आतिक्रम्य वर्तमानं,

विषयेन्द्रियसम्बन्धाजन्यम्, तत् सुखम्=आत्मनः स्वरूपभूतं सुखं, ब्रह्मानन्दनामकं सुखं, यत्र=यस्मिन् चित्तनिरोधकाले, निरोधसमाधौ, वेत्ति=अनुभवति "समाधिसुषुप्तिमोक्षेषु ब्रह्मरूपता" (सां० द० ५। ११६) इति स्मरणात्, च=यत्र च, यस्मिन् चित्तनिरोधकाले च, निरोधसमाधौ च, स्थितः=स्वात्मनि ब्रह्मस्वरूपेऽवस्थितोऽयम्=एष कर्मयोगी, नैव=न निश्चयेन, तत्त्वतः=ब्रह्मस्वरूपादात्मतत्त्वात् चलति=स्ववर्णोचिते क्रूरे वाऽक्रूरे वा, लौकिके वैदिके वा, कर्मणि वर्तमानोऽपि, न प्रच्यवते, निरोधसमाधाविव व्युत्थानेऽप्यात्मतत्त्वे ब्रह्मस्वरूपेऽवस्थित एव भवति, तं निरोधसमाधिं योगसंज्ञितं विद्यादित्यग्रिमेण सम्बन्धः ॥ २१ ॥

किञ्च—

**"यं लब्ध्वा चापरं लाभं, मन्यते नाधिकं ततः।**
**यस्मिन् स्थितो न दुःखेन, गुरुणाऽपि विचाल्यते" ॥२२**

अर्थः—च=तथा, यं=यकं ब्रह्मस्वरूपप्राप्तिरूपमात्मतत्त्वलाभं, लब्ध्वा=प्राप्य, ततः=तस्मादात्मतत्त्वलाभादधिकम्=उत्कृष्टम्, अपरम्=अन्यं लाभम्=अनात्मवस्तुलाभं, न मन्यते=न बुध्यते। यस्मिन्=यत्र निरोधसमाधौ, स्थितः=स्वात्मनि ब्रह्मस्वरूपेऽवस्थितः कर्मयोगी, गुरुणाऽपि=महताऽपि, दुःखेन=बन्धुबधादिनिमित्तेनान्येन वा केनचित् कष्टेन, न विचाल्यते=नात्मतत्त्वाद् ब्रह्मस्वरूपात् प्रच्याव्यते, निरोधसमाधाविव व्युत्थानेऽपि ब्रह्मरूपात्मतत्त्वेऽवस्थानात् स्ववर्णोचितेषु युद्धादिकर्मसु वर्तमानो लोकदृष्ट्या बन्धुबधादिनिमित्तेन दुःखेन संयुज्यमानोऽपि नात्मदृष्ट्या तेन संयुज्यते "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः" (कठो० ५।११) इति श्रुतेः। न च संयोगाभावे स्वात्मनि ब्रह्मस्वरूपेऽवस्थितः कर्मयोगी, गुरुणाऽपि सता दुःखेन कथञ्चिद् विचालयितुं शक्यते, लघुना क्षुद्रेण दुःखेनेति तु किमु वक्तव्यम्। तद्धेतुसंयोगाभावादित्यर्थः ॥२२॥

अथ समाधियोगस्य सफलं स्वरूपमभिधाय, तस्य स्वाभिमतमर्थं, कर्मयोगमारुरुक्षुणा कर्मयोगिना योक्तव्यत्वं चोपसंहरन्नाह—

**"तं विद्याद् दुःखसंयोगवियोगं योगसंज्ञितम्।**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा" ॥२३॥**

अर्थः—तं=यस्मिन् समाधियोगे सर्वतो निरुद्धे चेतस्यात्मानुभवः, आत्मसुखलाभः, ब्रह्मस्वरूपे चात्मन्यवस्थानं, दुःखसंयोगेऽपि तदसंयोगः, तं समाधियोगं, दुःखसंयोगवियोगं=दुःखानामाध्यात्मिकादीनां त्रयाणां संयोगः प्रतिकूलः सम्बन्धः, तस्य वियोगो हानं येन भवति, तं दुःखत्रयाभिघातवियोगकारणं, योगसंज्ञितं=योगः संज्ञा नाम, आख्या संजाताऽस्य, तं संजातयोगसंज्ञं, योगशब्दवाच्यं, विद्यात्=विजानीयात्। सः=असौ, योगः=समाधियोगः, निश्चयेन=साधयाम्यहमीत्यध्यवसायो निश्चयः, तेन, तद्गोचराध्यवसायेनानिर्विण्णचेतसा=दुःखबुद्ध्या प्रयत्नशैथिल्यमौदासीन्यं निर्वेदः, तदुपेतं निर्विण्णं, न निर्विण्णेन निर्वेदरहितेनानुदासीनेन सुस्थिरेण, चेतसा=चित्तेन, मनसा, योक्तव्यः=प्रयोक्तव्योऽनुष्ठातव्यः कर्तव्योऽभ्यसितव्य इत्यर्थः ॥ २३ ॥

अथ योक्तव्यस्य समाधियोगस्य सिद्ध्यर्थं तदभ्यासप्रकारमाह त्रिभिः—

**"सङ्कल्पप्रभवान् कामान् त्यक्त्वा सर्वानशेषतः ।**
**मनसैवेन्द्रियग्रामं, विनियम्य समन्ततः" ॥२४॥**

अर्थः—सङ्कल्पप्रभवान्=विषयविषया सम्यग्बुद्धिः शोभनबुद्धिः सङ्कल्पः, स प्रभवः उत्पत्तिहेतुर्येषां, ततो वा प्रभवो जन्म येषां, तान् विषयगोचरशोभनबुद्धिजनितान्, सर्वान्=निखिलान्, कामान्=विषयाभिलाषान्, अशेषतः=अशेषेण, निःशेषेण, शोभनबुद्ध्या सहैव, त्यक्त्वा=हित्वा। मनसैव=साधनान्तरव्यवच्छेदोऽवधारणार्थः, विवेकयुक्तेन मनसैव चेतसैवेन्द्रियनायकेनेन्द्रियग्रामं=श्रोत्रादिबाह्यकरणसमुदायं, समन्ततः=समन्तात् सर्वस्माद् विषयाद्, विनियम्य=विशेषेण नियम्य, निगृह्य, प्रत्याहृत्य ॥ २४ ॥

**"शनैःशनैरुपरमेद् बुद्ध्या धृतिगृहीतया ।**
**आत्मसंस्थं मनः कृत्वा, न किञ्चिदपि चिन्तयेत्" ॥२५**

अर्थः—धृतिगृहीतया=धृत्या धैर्येणाखिन्नतया, गृहीतयाऽनुगृहीतया, धैर्योपेतया, स्थिरया, बुद्ध्या=मत्या, धिया, शनैःशनैः=मन्दं मन्दं भूमिकाजयक्रमेण, न तु सहसोपरमेत्=विषयेभ्यो निवर्तेत, मनसश्चित्तस्य पराङ्मुखतां सम्पादयेत्। मनः=चित्तमन्तःकरणम्, आत्मसंस्थं=संस्था संस्थानम्, आत्मनि स्वस्मिन् संस्थानं सम्यक् स्थितिर्यस्य,

तत् तथा, स्वमात्रस्थितिकं, स्वस्थं, व्यापारशून्यं, कृत्वा=विधाय, किञ्चदपि=किमप्यात्मानात्मवस्तु, न चिन्तयेत्=न स्मरेत्, तूष्णीमासीतेत्यर्थः॥२५॥
ननु मनसश्चञ्चलत्वादात्मसंस्थानं न सुकरम्?, तत्राह—

"यतो यतो निश्चरति, मनश्चञ्चलमस्थिरम्।
ततस्ततो नियम्यैतद्, आत्मन्येव वशं नयेत्" ॥२६॥

अर्थः—चञ्चलं=चपलम्, अतएवास्थिरं= न स्थिरं, न स्थायि, क्षणिकं, मनः=चेतोऽन्तःकरणं, यतः-यतः=सार्वविभक्तिकस्तसिः, यं-यं विषयं, निश्चरति=निर्दिश्योद्दिश्य चलति, गच्छति, यं यं शब्दादिविषयं प्रति-गच्छति, ततस्ततः=तस्मात् तस्माद् शब्दादिविषयाद्, एतद्=इदं मनो, नियम्य=नियमनं कृत्वा, प्रत्याहृत्य, आत्मन्येव=वस्त्वन्तरव्यवच्छेदोऽवधारणार्थः, स्वस्मिन्नेव वशं नयेत्=वशोऽभिप्रायश्छन्दः कामः, तं प्रापयेत्, स्ववशेन संस्थापयेत्, स्वेच्छाबलेनात्मसंस्थं कुर्यादित्यर्थः ॥२६॥
नन्वात्मसंस्थे सति मनसि किं स्यात्?, तत्राह—

"प्रशान्तमनसं, ह्येनं योगिनं सुखमुत्तमम्।
उपैति शान्तरजसं, ब्रह्मभूतमकल्मषम्" ॥२७॥

अर्थ—एनम्=एतं, समाधियोगं युञ्जानं, प्रशान्तमनसं=प्रकर्षेण शान्तं वृत्तिविक्षेपरहितं स्वरूपमात्रे स्थितं मनोऽन्तःकरणं यस्य, तं वृत्तिव्यापारशून्यत्वादात्ममात्रस्थितमनसं, स्वस्थान्तःकरणम्, आत्मसंस्थचेतसं, योगिनं=कर्मयोगिनं, हि=निश्चयेन, उत्तमम्=उत्कृष्टतमं सात्त्विकं, सुखम्=आमोदं, शर्म, उपैति=उपगच्छति, प्राप्नोति। कथंभूतं योगिनं? शान्तरजसं=रजसा तमो लक्ष्यते, कार्ये कारणप्रयोगः, निवृत्तरजस्तमोगुणकार्यं, प्रक्षीणरागद्वेषादिदोषम्, अकल्मषम्=अविद्यमानकल्मषाकल्मषं, धर्माधर्मसम्बन्धवर्जितं, ब्रह्मभूतं=ब्रह्मत्वेन वर्तमानं, ब्रह्मवदवस्थितं, सर्वत्र सममित्यर्थः ॥२७॥
अथ सिद्धसमाधियोगस्य नित्यसुखप्राप्तिमाह—

"युञ्जन्नेवं सदाऽऽत्मानं, योगी विगतकल्मषः।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते" ॥२८॥

अर्थः—एवम्=अमुना प्रकारेण सदा=सर्वदाऽऽत्मानं=मनो, युञ्जन्=

समादधद्, निरुन्धन् , विगतकल्मषः = विगतकल्मषाकल्मषो निवृत्त-धर्माधर्मसंपर्को योगी = कर्मयोगी, सुखेन = अनायासेन, ब्रह्मसंस्पर्शं = स्पर्शनं स्पर्शः सम्बन्धः, सम्यक् स्पर्शः संस्पर्शस्तादात्म्यसम्बन्धः, ब्रह्मणा संस्पर्शस्तादात्म्यं यस्य सुखस्य, तत् तथा, ब्रह्मात्मकं, ब्रह्मस्वरूपं, अत्यन्तम् = अन्तमतिक्रान्तं नित्यं, सुखम् = आनन्दम्, अश्नुते = व्याप्नोति प्राप्नोतीत्यर्थः॥२८

अथ सिद्धसमाधियोगस्य कर्मसु वर्तमानस्य कर्मयोगिनो दृष्टिमाह—

"सर्वभूतस्थमात्मानं, सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा, सर्वत्र समदर्शनः" ॥२९॥

अर्थः—योगयुक्तात्मा = योगः समाधियोगः, तेनाभ्यस्यमानेन योगेन युक्तः समाहितः प्रसन्नः आत्मा मनोऽन्तःकरणं यस्य, स सर्वदा समाहितान्तःकरणः, प्रसन्नमनाः, सर्वत्र = सर्वेषु ब्रह्मादिस्थावरान्तेषु भूतेषु, प्राणिषु, समदर्शनः = समं तुल्यमात्मविषयं दर्शनं दृष्टिर्यस्य, स सर्वत्रै-कात्मदर्शनः कर्मयोगी, सर्वभूतस्थं = सर्वेषु ब्रह्मादिस्थावरान्तेषु भूतेषु प्राणिषु तिष्ठन्तम्, अन्तरात्मतयाऽवस्थितं "यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरः" (बृ० उ० ३।७।१५) इत्यादिश्रुतेः, आत्मानं = परमात्मानमीश्वरं, च = तथा, सर्वभूतानि = सर्वाणि ब्रह्मादिस्थावरान्तानि भूतानि, आत्मनि = सर्वभूतान्तरात्मनि परमात्मनि सर्वस्याश्रयभूते ब्रह्मणि स्थितानि "तास्मिन् ह तस्थुर्भुवनानि विश्वा" ( यजु० ३१ । १९ ) "यस्मिन् सर्वं प्रतिष्ठितम्" (अथर्व०११।६।१) इत्यादिश्रुतेः, ईक्षते = निरीक्षते, लोकते, पश्यतीत्यर्थः ॥२९॥

अथेदृगात्मदर्शनस्य फलमाह—

"यो मां पश्यति सर्वत्र, सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि, स च मे न प्रणश्यति" ॥३०॥

अर्थः—यः = यः कर्मयोगी, सर्वत्र = सर्वस्मिन् ब्रह्मादिस्थावरान्ते भूतजाते, मां = सर्वस्यान्तरात्मानमीश्वरं मां, पश्यति = लोकयति, च = तथा, सर्वं = ब्रह्मादिस्थावरान्तं निखिलं भूतजातं, मयि = सर्वस्याश्रयभूते सर्वान्तरात्मनीश्वरे मयि, पश्यति = लोकयति । अहम् = सर्वस्यात्मभूतोऽ-

हमीश्वरः, तस्य=सर्वत्र मा, सर्वं च मयि, पश्यतो लोकयतोऽमुष्य कर्मयोगिनो,न प्रणश्यामि=नादर्शनमुपयामि,न परोक्षो भवामि,न तिरोभवामि, च=तथा, सः=असौ,सर्वत्र मम,सर्वस्य च मयि द्रष्टा,लोकयिता, मे=मम, न प्रणश्यति=नादर्शनमुपयाति,न परोक्षो भवति, न तिरोभवति,स मां सदा पश्यति, तमहं सदा पश्यामि,तस्य च मम च एकात्मकत्वान्न कश्चित् कस्यचित् कदाचित् क्वचित्परोक्षोभवति, स संसारे वर्तमानोऽपि सदा मय्येव वर्तते, न संसारे, इत्यर्थः ॥३०॥

अथोक्तमेवार्थं विशदयति—

"सर्वभूतस्थितं यो मां, भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि, स योगी मयि वर्तते" ॥३१॥

अर्थः—एकत्वम्="एको वशी सर्वभूतान्तरात्मा" (कठो० ५।१२) "एको देवः सर्वभूतेषु गूढः,सर्वव्यापी सर्वभूतान्तरात्मा" (श्वे० उ० ६।११) इत्यादिश्रुतिसिद्धमात्मैकत्वम्, आस्थितः=आश्रितः सन्,यः=यः कर्मयोगी,सर्वभूतस्थितं=सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु स्थितमन्तरात्मतयाऽवस्थितं सर्वाश्रयभूतं,माम्=ईश्वरं मां, भजति= भजते, सेवते, मदाज्ञामनुवर्तते, सः=असौ,योगी=कर्मयोगी,सर्वथा= सर्वप्रकारेण हिंसाकर्मणा वाऽहिंसाकर्मणा वा, स्ववर्णोचितेन, वर्तमानोऽपि=संसारे वर्तमानोऽपि, मयि=सर्वाश्रयभूतेऽन्तरात्मनीश्वरे मयि, वर्तते=वरीवृत्यते, स जीवन्नेव मोमुच्यते, लोके परलोके सर्वत्र मुक्तः एवासौ, न मोक्षं प्रति केनचित् प्रतिबध्यते, इत्यर्थः ॥ ३१॥

अथ सर्वेषामुक्तलक्षणानां कर्मयोगिनां श्रेष्ठं कर्मयोगिनमाह—

"आत्मौपम्येन सर्वत्र, समं पश्यति योऽर्जुन ! ।
सुखं वा यदि वा दुःखं, स योगी परमो मतः" ॥३२॥

अर्थः—अर्जुन=हे अर्जुन ! यः= यः कर्मयोगी, सर्वत्र=सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु,सुखं वा=अथवा सुखं,यदि वा दुःखं= यद्वा दुःखं,समं=तुल्यम,आत्मौपम्येन=उपमानमुपमा,उपमैवौपम्यम, आत्मा च तदौपम्यं च-आत्मौपम्यं, तेनात्मोपमानेन, स्वदृष्टान्तेन, यथाऽऽत्मनः स्वस्य सुखमिष्टं, दुःखमनिष्टं, तथा परस्यापीत्येवमात्मो-

दाहरणेन,स्वसादृश्येन,पश्यति=अनुभवति,न रागबुद्ध्या कदाचित् कञ्चन सुखाकरोति,न वा द्वेषबुद्ध्या कदाचित् कञ्चन दुःखाकरोति,सः=असौ पारमर्थ्येनैकात्मदर्शी,योगी=कर्मयोगी, परमः=उत्कृष्टः, सर्वेषामेकात्म-दर्शिनां कर्मयोगिनां मध्ये श्रेष्ठो मतः=अभिमतोऽभिप्रेत इत्यर्थः ॥३२॥

अथेह साम्येनोक्तं कर्मयोगं दुष्प्राप्यं मन्वानोऽर्जुनो ब्रवीति—

"अर्जुनः उवाच" ।

**"योऽयं योगस्त्वया प्रोक्तः, साम्येन मधुसूदन! ।**
**एतस्याहं न पश्यामि, चञ्चलत्वात् स्थितिं स्थिराम्" ३३॥**

अर्थः—मधुसूदन=हे मधुहन्तः ! योऽयं=यः एष, साम्येन= आत्मवत् सर्वत्र सुखदुःखदृष्टिसाम्येन, योगः=कर्मयोगः, त्वया=मधु-सूदनेन त्वयका,प्रोक्तः=प्रकर्षेण श्रेष्ठत्वेनोक्तः कथितः शिष्टः। अहम्= अर्जुनोऽहम्,एतस्य=अस्य साम्येन प्रोक्तस्य कर्मयोगस्य, चञ्चलत्वात्= मनसश्चञ्चलत्वात्, स्थिरां=निश्चलां, स्थितिमवस्थितिं, दीर्घकाल-स्थायिनीं विद्यमानतां,न पश्यामि=न लोकयामि,नोपलभे,इत्यर्थः ॥३३॥

अथोक्तमेवार्थं स्पष्टयति—

**"चञ्चलं हि मनः कृष्ण! प्रमाथि बलवद् दृढम् ।**
**तस्याहं निग्रहं मन्ये, वायोरिव सुदुष्करम्" ॥३४॥**

अर्थः—कृष्ण=हे कृष्ण ! मनः=चित्तं, हि=निश्चयेन, चञ्चलं= चपलं, सदा चलनस्वभावं, प्रमाथि=शरीरेन्द्रियप्रमथनशीलं, प्रमथनं क्षोभणं, शरीरमिन्द्रियाणि च प्रमथितुं क्षोभयितुं शीलमस्येति तद्व्यु-त्पत्तेः, शरीरेन्द्रियक्षोभकरं, बलवत्=सबलं, निग्रहीतुमशक्यं, दृढं= दुश्छेदं, दुर्भेदम । अहम्=अर्जुनोऽहं,तस्य=अमुष्य चञ्चलस्य प्रमाथिनो बलवतो दृढस्य मनसोऽन्तःकरणस्य, वायोरिव=पवनस्येव, निग्रहं= निरोधम्, एकत्रावस्थानं, चिरं स्थैर्यं,सुदुष्करम्=अत्यन्तं दुःसम्पाद्यं कर्तुमशक्यं,बहुकठिनं,मन्ये=अवबुध्ये,स्वबुद्ध्या जानामीत्यर्थः ॥३४॥

अथार्जुनोक्तमुपश्रुत्याह भगवान्—

"श्रीभगवानुवाच"।



**"असंशयं महाबाहो! मनो दुर्निग्रहं चलम्।**
**अभ्यासेन तु कौन्तेय! वैराग्येण च गृह्यते"॥३५॥**

अर्थः—महाबाहो=हे महाभुज! चलं=सदा चलं, चपलं, चञ्चलं, मनः=चित्तं, दुर्निग्रहं=दुष्करनिरोधम्, एकत्रदुःसम्पाद्यचिरस्थैर्यमिति यद् ब्रवीषि, तदसंशयं=निःसन्देहं, नास्त्यत्र संशयः, सन्देहो यद्यपि, तु=परन्तु तथापि, कौन्तेय=हे कुन्तीपुत्र! अभ्यासेन=समाधियोगाभ्यासेन, च=तथा, वैराग्येण=दृष्टादृष्टविषयेषु रागाभावेन, वैतृष्ण्येन, गृह्यते=निगृह्यते, निरुध्यते, चिरमेकत्र स्थापयितुं शक्यते, इत्यर्थः॥ ३५॥

किञ्च—

**"असंयतात्मना योगो, दुष्प्राप इति मे मतिः।**
**वश्यात्मना तु यतता, शक्योऽवाप्तुमुपायतः"॥३६॥**

अर्थः—असंयतात्मना=न संयतो जितो वशीकृतः आत्मा मनो यस्य, तेनाजितात्मनाऽवशीकृतमनसा पुरुषेण, योगः=साम्यबुद्धिपूर्वकः कर्मयोगो दुष्प्रापः=प्रापणं प्रापः प्राप्तिः, दुःखेन प्रापो यस्य, स तथा, प्राप्तुमशक्यः, इति=एवंप्रकारा, मे=मम, मतिः=निश्चिता बुद्धिः। तु=परन्तु, वश्यात्मना=वशोऽधीनत्वे स्वाधीनतायां विद्यते आत्मा मनो यस्य, तेन वशीकृतात्मना, जितमनसा पुरुषेण, उपायतः=सार्वविभक्तिकस्तसिः, उपायाभ्यामभ्यासवैराग्याभ्यां, यतता=यतमानेनावाप्तुं=प्राप्तुं शक्यः साम्यबुद्धिपूर्वकः कर्मयोग इति मे=मम मतिर्बुद्धिरित्यर्थः॥३६॥

अथ "नेहाभिक्रमनाशोऽस्ति" इत्यादौ श्रुतं कर्मयोगमाहात्म्यं पुनरिह श्रोतुकामोऽर्जुनः प्रसङ्गात् पृच्छति—

"अर्जुनः उवाच"।

**"अयतिः श्रद्धयोपेतो, योगाच्चलितमानसः।**
**अप्राप्य योगसंसिद्धिं, कां गतिं कृष्ण! गच्छति"॥३७**

अर्थः—कृष्ण=हे पापकर्षण! यः पुरुषः, श्रद्धया=कर्मयोगगोचरया

आदरबुद्ध्या, उपेतः = उपगतः, युक्तः, समन्वितः, कर्मयोगस्य श्रद्धालुः, अयतिः=अल्पार्थे नञ्, यथाऽलवणा यवागूरित्यत्र, यतते, प्रयतते, कर्मयोगसंसिद्ध्यै यत्नम् उपायपुरस्सरं प्रयत्नं कुरुते, स यतिः, अल्पो यतिरयतिः, कर्मयोगसंसिद्ध्यर्थं मन्दंमन्दं यतमानः, चेष्टमानः, योगात्=कर्मयोगात्, कर्मयोगानुष्ठानात्, चलितमानसः=चलितं कुतश्चित् प्रतिबन्धाद् भ्रेषितं, गलितं, भ्रष्टं, प्राप्तमौदासीन्यं, मानसं मनो यस्य, स कर्मयोगमनुतिष्ठन्नेव मध्ये कथञ्चिदुपरतः, प्रचलितः प्रभ्रष्टः, स एष पुरुषो योगसंसिद्धिं= योगः कर्मयोगः, तस्य सम्यक् पूर्णा, सिद्धिः प्राप्तिः, कर्मयोगारूढता, ताम्, अप्राप्य=अनधिगम्य, कां गतिं=पाते देहे सुगतिदुर्गत्योः कामेकां गतिं, सुगतिं वा, दुर्गतिं वा, गच्छति=याति, प्राप्नोति, लभते। गम्यते प्राप्यते लभ्यते इति गतिर्गन्तव्योऽर्थः, सुखं सुखहेतुः, दुःखं दुःखहेतुः, तयोर्द्वयोः कोऽर्थस्तेन गन्तव्यः प्राप्तव्यो लब्धव्य इत्यर्थः ॥३७॥

अथ स्वप्रश्नाभिप्रायं प्रकटयति—

**"कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।**
**अप्रतिष्ठो महाबाहो ! विमूढो ब्रह्मणः पथि" ॥३८॥**

अर्थः—कच्चिदिति साभिलाषप्रश्ने, किमिति तत्पर्यायः। महाबाहो=हे महाभुज! यो मनुष्यो ब्रह्मणः=परमेश्वरस्य परमात्मनः, पथि= प्राप्तिमार्गे कर्मयोगे, विमूढः = विशिष्य मूढोऽज्ञो, यत्ने कर्तव्येऽप्यकृतयत्नोऽयतिरत एवाप्रतिष्ठः=प्रतिष्ठा स्थिरा स्थितिः संसिद्धिः, तद्विरहितः, कर्मयोगे प्रतिष्ठाशून्यः, कर्मयोगमनारूढः, कर्मयोगस्य संसिद्धिमप्राप्तः, स मनुष्यः, कच्चित्=किं, छिन्नाभ्रमिव=अभ्रसङ्घाद् विच्छिन्नाभ्रवद्, उभयविभ्रष्टः=उभयस्मादर्थाद् विभ्रष्टः, फलकामनया यज्ञादिकर्मानुष्ठानाभावेनैहिकामुष्मिकात् सुखतत्साधनरूपादर्थात्, कर्मयोगस्य संसिद्धेरप्राप्तया च ब्रह्मप्राप्तिरूपमोक्षलक्षणादर्थाद् विभ्रष्टो विच्युतो विच्छिन्नो न नश्यति=न नाशमेति, हीनावस्थां, दुर्गतिं, न प्राप्नोति ?। यथा वायुना छिन्नं विच्छिन्नं पूर्वस्मादभ्रसङ्घान्मेघपुञ्जाद् विभ्रष्टम्, उत्तरं मेघपुञ्जमभ्रसङ्घमप्राप्तं किञ्चिदभ्रं, मध्ये एव नश्यति, नाशं दुर्गतिं प्राप्नोति, तथा स्वर्गादिफलकाद् यज्ञादिकर्मकलापाद् विभ्रष्टो विछिन्नो ब्रह्मप्राप्तिरूपमोक्षफलां कर्मयोगसंसिद्धिं चाप्राप्तोऽन्तराले एव नश्यति=नाशं, दुर्गतिं हीनावस्थामृच्छति, यद्वा न नश्यति=न नाशं दुर्गतिं गच्छति ? इति

प्रश्नाभिप्रायः। कर्मयोगभ्रष्टस्य पुरुषस्य लौकिकी पारलौकिकी गतिरुभयी सन्दिह्यते, तत्सन्देहनिवृत्त्यर्थोऽयं मामकः प्रश्न इत्यर्थः ॥ ३८ ॥

अथ स्वसन्देहनिवृत्त्यर्थमर्जुनो भगवन्तं प्रेरयन्नाह—

"एतन्मे संशयं कृष्ण ! छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य, छेत्ता नह्युपपद्यते" ॥३९॥

अर्थः—कृष्ण = हे कृष्ण ! मे = मम, एतद् = एतं कर्मयोगिगति-विषयं संशयं = सन्देहम्, अशेषतः = निःशेषतश्छेत्तुम् = अपनेतुं निवर्तयितुम्, अर्हसि = योग्योऽसि, समर्थोऽसि । अस्य = एतस्य कर्मयोगिगतिविषयस्य, संशयस्य = सन्देहस्य, छेता = अपनेता निवर्तकस्त्वदन्यः = त्वत्तः कर्मयोगेश्वरादन्यः परः कश्चित्, नहि = नैव, उपपद्यते = युज्यते, सम्भवतीत्यर्थः ॥ ३९ ॥

अथार्जुनस्य सन्देहापनयनार्थमुत्तरमाह भगवान्—

"श्रीभगवान् उवाच" ।

"पार्थ ! नैवेह नामुत्र, विनाशस्तस्य विद्यते ।
न हि कल्याणकृत् कश्चिद् दुर्गतिं तात ! गच्छति" ॥४०॥

अर्थः—पार्थ = हे पृथापुत्र ! तस्य = अमुष्य कर्मयोगसंसिद्धिमप्राप्तस्य कर्मयोगभ्रष्टस्य, नैव = न निश्चियेनेह = अस्मिन् लोके, नामुत्र = नामुष्मिन् लोके, विनाशः = हीनावस्थालाभो दुर्गतिर्विद्यते = भवति । तात = हे अनुकम्प्य ! कश्चित् = कोऽपि, कल्याणकृत् = कल्याणस्य मङ्गलस्य शुभस्य हेतुत्वात् कल्याणं कर्मयोगः, तं यः कृतवान् आरब्धवान्, स कल्याणकृत् पुरुषश्रेयो दुर्गतिं = दुःखतत्साधनप्राप्तिरूपां हीनां कुत्सितां दुष्टां गतिं, न गच्छति = न प्राप्नोति, किन्तु लोके परलोके च सर्वत्र सुखतत्साधन-प्राप्तिरूपामुच्चैस्तरां रमणीयां गतिमृच्छति प्राप्नोतीत्यर्थः ॥ ४० ॥

ननु योगभ्रष्टो यदि दुर्गतिं न गच्छति, तर्हि कां गतिं गच्छति?, तत्राह—

"प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे, योगभ्रष्टोऽभिजायते" ॥४१॥

अर्थः—योगभ्रष्टः = कथञ्चित् कर्मयोगाच्चलितमनसः नाययाव-

त्कर्मयोगमारूढः, कर्मयोगसंसिद्धिमप्राप्तः, पुण्यकृतां=पुण्यजनकत्वात् पुण्यं यज्ञो दानं तपः कर्म "तमेतं वेदानुवचनेन ब्राह्मणाः विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" (बृ०उ०३४२२) इति श्रुतेः। "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्" (गी० १८ । ५) इति वक्ष्यमाणाच्च, तदेतत् पुण्यं कर्मत्रयम् आत्मजातिदेशोन्नत्यर्थं तद्गौरवस्यरक्षणार्थं च ये कृतवन्तः, ते पुण्यकृतः, तेषां पुण्यकृतां पुण्यकर्मणां ये लोकाः पृथिवीलोकापेक्षया सुखतत्साधनभूयस्त्वात् स्वर्गसंज्ञकाः, मंगलबुधबृहस्पतिप्रभृतयो लोकाः, ब्रह्मलोकभागविशेषत्वाद् ब्रह्मलोकाः, तान् प्राप्य=प्रकर्षेण सत्कारेण एहि-एहीत्यादरवचनेन, आप्त्वा, लब्ध्वा, शाश्वतीः=शाश्वद्भवाः निरन्तरभवाः, बह्वीः, समाः=शरदः, बहूनि वर्षाणि, उषित्वा=वासं कृत्वा, रत्वा, चरित्वा, तत्रत्यान् भोगान् भुक्त्वा, शुचीनां=शुच्याचाराणां, शुद्धाचरणानां शिष्टानां, श्रीमतां=राज्यैश्वर्ये श्रीः, सा नित्यं विद्यते येषां, तेषां सदा राज्यैश्वर्यभाजां भूभुजां, गेहे=गृहेऽभिजायते=अभिजन्यतेऽभीष्टं जन्म विन्दते, इत्यर्थः ॥४१॥

अथ योगभ्रष्टजन्मविषयं कल्पान्तरमाह—

"अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं, लोके जन्म यदीदृशम्" ॥४२॥

अर्थः—अथवा=यद्वा, धीमतां=समबुद्धीनां, सर्वस्य सुखं दुःखं साम्येनात्मौपम्येनानुभवताम्, अवलोकयतां, योगिनामेव=प्राप्तकर्मयोगसंसिद्धीना कर्मयोगारूढानां कर्मयोगिनामेव, न तु श्रीमतां भूभुजामित्यवधारणार्थः, कुले=वंशे, भवति=जायते, जन्म लभते । एतज्जन्म=तदेतत् जन्म, हि=निश्चयेन, लोके=पृथिवीलोके दुर्लभतरम्=अतिशयेनदुर्लभं, सुदुर्लभम्, अतिदुःखेन भूरिकष्टेन लभ्यं, दुर्लभादपि दुर्लभं, यद्=यद् जन्म, ईदृशम्=एतादृशं, यथोक्तविशेषणे गेहे कुले जननमित्यर्थः ॥४२॥

ननु तस्मिन् सति किं स्यात् ?, तत्राह—

"तत्र तं बुद्धिसंयोगं, लभते पौर्वदेहिकम् ।
यतते च ततो भूयः, संसिद्धौ कुरुनन्दन !" ॥४३॥

अर्थः—कुरुनन्दन = हे कुरुवंशानन्दवर्धन ! तत्र = तस्मिन् द्विविधे द्विप्रकारे जन्मनि, जनने, तम् = अमुं पौर्वदेहिकं = पूर्वस्मिन् देहे जन्मनि भवं पौर्वदेहिकं, पूर्वस्मिन् जन्मनि विद्यमानं, बुद्धिसंयोगं = कर्मयोगविषयमनुष्ठेयताबुद्धिसम्बन्धं, लभते = सुप्तप्रबुद्धवद् विन्दते । यथा हि कश्चित् कर्मकरः पूर्वेद्युः स्वामिकृते कर्मण्युत्तरेद्युः सुप्तप्रबुद्धोऽनुष्ठातव्यं मया तत् कर्मेति पूर्वदिवससंस्कारवशेन स्वामिकृतकर्मविषयमनुष्ठेयताबुद्धिसंयोगं वेविद्यते, तथा कर्मयोगसिद्धिमप्राप्तोऽसौ योगभ्रष्टः, पूर्वजन्मसंस्कारवशेनास्मिन् जन्मनि मया कर्मयोगोऽनुष्ठातव्यः, इति तद्विषयमनुष्ठेयताबुद्धिसम्बन्धं लालभ्यते। ततः = तदनन्तरं, कर्मयोगगोचरानुष्ठेयताबुद्धिसम्बन्धलाभानन्तरं, च = पुनः, भूयः, संसिद्धौ = कर्मयोगसंसिद्ध्यर्थं, कर्मयोगमारोढुं, भूयः = भूयिष्ठं प्रचुरं बहुतरं यथा भवति, तथा, यतते = प्रयतते, चेष्टते, इत्यर्थः ॥४३॥

ननु यस्य योगभ्रष्टस्येह जन्मनि कर्मयोगविषया वाञ्छा विद्यते, स नूनं पौर्वदेहिकं कर्मयोगविषयमनुष्ठेयताबुद्धिसंयोगं लप्स्यते, यस्य तु तद्गोचरा वाञ्छैव नास्ति, स कथं तद्विषयमनुष्ठेयताबुद्धिसंयोगं वेत्स्यते, कथं च दिव्यादिव्यशब्दादिविषयकामनया कर्माणि कर्तुं न चेष्टयिष्यते, न पराक्रमिष्यते ?, तत्राह—

**"पूर्वाभ्यासेन तेनैव, ह्रियते ह्यवशोऽपि सः।**
**जिज्ञासुरपि योगस्य, शब्दब्रह्मातिवर्तते" ॥४४॥**

अर्थः—सः = असौ योगभ्रष्टः, अवशोऽपि = न विद्यते वशो वांच्छा कामः कर्मयोगविषयो यस्य, स वर्तमानेऽस्मिन् शरीरे, कर्मयोगगोचरेच्छारहितोऽपि, तेनैव = अमुनैव, कर्मयोगविषयेणैव, नान्यविषयेणेत्यवधारणार्थः, पूर्वाभ्यासेन = पूर्वजन्माभ्यासेन, पुनःपुनरनुष्ठानमभ्यासः, पूर्वजन्मकृताभ्यासजनितसंस्कारेण, संस्कारात्मना बुद्धिस्थेन कर्मयोगविषयेण पूर्वजन्माभ्याससंस्कारेण, ह्रियते = कर्मयोगं प्रत्याह्रियते, समाकृष्यते, तद्गोचरं वशं काममुत्पाद्य तत्र बलाद् विनियुज्यते, प्रवर्त्यते, हि = निश्चयेन, नास्त्यत्र संशयतुषः। योगस्य = कर्मणि षष्ठी विभक्तिः, "न लोकाव्यय" (अष्टा० २।३।६९) इत्यस्यानित्यत्वात्, योगः कर्मयोगः, तस्य जिज्ञासुरपि = ज्ञानस्येच्छुरपि, कर्मयोगस्वरूपं ज्ञातुकामोऽपि, कर्म-

योगप्रविष्टमात्रोऽपि, शब्दब्रह्म=शब्दादिदिव्यादिव्यविषयप्रदिपादकं ब्रह्म मन्त्रम्,अर्थवादलक्षणं वेदवाक्यम्,अतिवर्तते=अतिक्रम्यावतिष्ठते, दृष्ट्याऽपि तन्नावलोकते, शब्दादिविषयकामनया कर्मानुष्ठानं तु बहुदूरम्। यदाऽभिजातोऽयं योगभ्रष्टः कर्मयोगी, शब्दब्रह्मातिवर्तते, तदा शब्दादिविषयकामनया कर्माणि कर्तुं स्वप्नेऽपि नाशंसते, न कामयते, इति किमु वक्तव्यमित्यर्थः ॥४४॥

ननु पूर्वाभ्यासेन कर्मयोगं प्रत्याह्रियमाणो योगभ्रष्टः कर्मयोगी, कदा कर्मयोगसंसिद्धिं प्राप्तः परां गतिं गच्छति ? तत्राह—

**"प्रयत्नाद् यतमानस्तु, योगी संशुद्धकिल्बिषः।**
**अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" ॥४५॥**

अर्थः—योगी=योगभ्रष्टः कर्मयोगी, प्रयत्नाद् यतमानस्तु=प्रयत्नाद्यतमानस्तुना व्यवच्छिद्यते,प्रकृष्टः श्रेष्ठः शश्वद्भवो यत्नः प्रयत्नः, तस्मात् निरन्तरभवाद् यत्नाद् यतमानः=कर्मयोगे यत्नं कुर्वाणः, कर्मयोगे सततं व्याप्रियमाणः, संशुद्धकिल्बिषः=सम्यक् निःशेषेण शुद्धं निवृत्तं किल्बिषं पापं यस्य, स निर्धूताखिलपापो निर्मलान्तःकरणः, अनेकजन्मसंसिद्धः=अनेकेषु कपिञ्जलाधिकरणन्यायेन बहुवचनस्य त्रित्वे पर्यवासनादेकद्वित्रिषु जन्मसु जननेषु संसिद्धः कर्मयोगसंसिद्धिं प्राप्तः, कर्मयोगमारूढः, ततः=तदनन्तरं, परां=प्रकृष्टां श्रेष्ठां गतिं=गन्तव्यां ब्रह्मप्राप्तिरूपां मुक्तिं, याति=प्राप्नोतीत्यर्थः ॥ ४५ ॥

अथ कर्मयोगिनं स्तुवन्नाह—

**"तपस्विभ्योऽधिको योगी,ज्ञानिभ्योऽपि मतोऽधिकः।**
**कर्मिभ्यश्चाधिको योगी,तस्माद् योगी भवार्जुन!"॥४६**

अर्थः - योगी=कर्मयोगी, तपस्विभ्यः=शरीरादिकार्श्यकारिभोजनपरित्यागादिव्रतं तपः,तद्युक्तेभ्योऽतप्यं तपस्तप्यमानेभ्योऽधिकः=श्रेष्ठः, ज्ञानिभ्योऽपि=कर्मसंन्यासिभ्यो ब्रह्मज्ञानिभ्योऽपि, अधिकः=श्रेष्ठो मतः=अभिमतः ! च=तथा, कर्मिभ्यः=फलबुद्ध्या कर्मकुर्वद्भ्यः काम्यकर्मवद्भ्यः कर्मठेभ्योऽप्यधिकः=श्रेष्ठः,तस्मात्=यस्मात् सर्वेभ्यस्तपस्विज्ञानिकर्मिभ्यः कर्मयोगी श्रेष्ठः,तस्माद्,अर्जुन=हे अर्जुन ! त्वं, योगी=कर्मयोगी, भव=एधीत्यर्थः ॥ ४६ ॥

अथ सर्वेषां कर्मयोगिनामधिकं कर्मयोगिनमाह—

**"योगिनामपि सर्वेषां, मद्गतेनान्तरात्मना ।**
**श्रद्धावान् भजते यो मां, स मे युक्ततमो मतः" ॥४७॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे आत्मसंयमयोगो नाम षष्ठोऽध्यायः ॥६॥

अर्थः—योगिनामपि सर्वेषां=निर्धारणे षष्ठी, सर्वेषां कर्मयोगिनां मध्येऽपि, यः=यः कर्मयोगी, श्रद्धावान्=मद्वचनेष्वटलो विश्वासः श्रद्धा, तद्वान्, श्रद्दधानः, मद्गतेन=मयीश्वरे गतेन परया भक्त्या निविष्टेनान्तरात्मना=अन्तःकरणेन, चेतसा, माम्=ईश्वरं मां, भजते=सेवते, मदाज्ञामनुवर्तते, यदहं ब्रवीमि, तत् कुरुते, सः=असौ कर्मयोगी, मे=मम, युक्ततमः=अतिशयेनाधिक्येन कर्मयोगयुक्तो योगारूढः कर्मयोगी, मतः=अभिमतोऽभिप्रेतः । यः कर्मयोगी, सर्वेषु भूतेष्वन्तरात्मना स्थितं मां सर्वदा सर्वत्र पश्यति, मद्भक्तौ निमग्नचेताः श्रद्धापरिपूरितान्तःकरणः स्ववर्णोचितानि क्रूराणि वाऽक्रूराणि वा सर्वाणि कर्माणि कर्तव्यबुद्धया यथाविधानमनुतिष्ठति, स सर्वेभ्यः कर्मयोगिभ्योऽधिकः श्रेष्ठः कर्मयोगी मम मतोऽभिप्रेत इत्यर्थः ॥ ४७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्य्यनिखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्ये षष्ठोऽध्यायः ॥ ६ ॥

---

# "अथ सप्तमोऽध्यायः" ॥७॥

पूर्वाध्यायान्ते "मद्गतेनान्तरात्मना यो मां भजते, स मे युक्ततमो मतः" इत्यर्जुनं भगवान् प्रत्याययित् । तत्र कीदृशस्त्वं, यस्य भक्तिः कर्तव्येति जिज्ञासायां स्वकीयं रूपं निरूपयिष्यन्नाह—

"श्रीभगवानुवाच"

**"मय्यासक्तमनाः पार्थ !, योगं युञ्जन् मदाश्रयः ।**
**असंशयं समग्रं मां, यथा ज्ञास्यसि तच्छृणु" ॥१॥**

अर्थः—पार्थ=हे पृथापुत्र ! मय्यासक्तमनाः=वक्ष्यमाणस्वरूपे मयीश्वरेऽभिनिविष्टान्तःकरणः, मयि आ समन्तात् सक्तं परया भक्त्याऽभिनिविष्टं सँलग्नं मनोऽन्तःकरणं यस्येति तद्व्युत्पत्तेः, योगं=मनःसमाधानं, युञ्जन्=कुर्वन्, अभ्यस्यन्, मदाश्रयः=अहमीश्वरः एवाश्रयः आश्रयणीयो यस्य, स मदेकाश्रयो, मदेकशरणः, असंशयं=निःसंशयं यथा भवति, तथा, समग्रं=सकलं सपरिकरं प्रकृतितत्कार्यसहितं, मां=भक्तव्यं मामीश्वरं, यथा=येन प्रकारेण ज्ञास्यसि=वेदिष्यसि, कार्त्स्न्येन मद्विषयं ज्ञानं प्राप्स्यसि, तत्=तथा, वक्ष्यामि, शृणु=सावधानचित्तेनाकर्णयेत्यर्थः॥१॥

अथ वक्ष्यमाणस्य ज्ञानस्य समग्रविषयत्वं विशदयति—

**"ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।**
**यज्ज्ञात्वा नेह भूयोऽन्यत् ज्ञातव्यमवशिष्यते" ॥२॥**

अर्थः—इदम्=एतदनुपदं वक्ष्यमाणं, ज्ञानं=मद्विषयं ज्ञानं, सविज्ञानं=विविधानां पदार्थानां वस्तूनां प्रकृतितत्कार्याणां ज्ञानं विज्ञानं, तेन विज्ञानेन सहितम्, अशेषतः=यावत् त्वया ज्ञातुं शक्यते, तावतः शेषमपरित्यज्य, ते=तुभ्यमहं वक्ष्यामि=कथयिष्यामि । यत्=विज्ञानसहितं मद्विषयं यज्ज्ञानं, ज्ञात्वा=वेदित्वा, लब्ध्वा, प्राप्य, इह=अस्मिन् लोके, भूयः=पुनरन्यद्=अपरं किञ्चिद् ज्ञातव्यं=ज्ञातुं योग्यं नावशिष्यते=न परिशिष्यते, ज्ञानस्य समग्रज्ञातव्यवस्तुविषयत्वेन पूर्णत्वादित्यर्थः॥२॥

अथ ज्ञानस्यास्य दौर्लभ्यमाह—

**"मनुष्याणां सहस्रेषु कश्चिद् यतति सिद्धये ।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः" ॥३॥**

अर्थः—मनुष्याणां=मनुपुत्राणां, मनस्यमानेन सृष्टानां, मत्वा कर्माणि सीव्यतां मनुजानां, सहस्रेषु=सहस्रायुतलक्षेष्वसंख्येषु मध्ये, कश्चिद्=विरलःकश्चित्,कोऽपि,सिद्धये=मद्बोचरज्ञानप्राप्तये, यतति=यस्यति,यत्नं करोति। यततामपि=यसतामपि,यत्नं कुर्वतामपि,सिद्धानां=प्राप्तज्ञानानां,मद्बोचरज्ञानप्राप्तिमतां,कश्चिद्=विरलः कश्चित्, माम्=ईश्वरं मां,तत्त्वतः=वास्तवरूपेण,याथातथ्येन,वेत्ति=जानाति,यथावदनुभवति। तदेवमतिदुर्लभमपि मज्ज्ञानं तुभ्यं वक्ष्यामीत्यर्थः ॥३॥

अथ प्रतिज्ञातं विज्ञानेन सहितं स्वविषयं ज्ञानं वक्तुमुपक्रमते—

**"भूमिरापोऽनलो वायुः, खं मनो बुद्धिरेव च ।**
**अहङ्कार इतीयं मे, भिन्ना प्रकृतिरष्टधा" ॥४॥**

अर्थः—भूम्यादिशब्दैरत्र गन्धतन्मात्रादिनामभिः परिभाषितानि पृथिव्यादीनि सूक्ष्मभूतान्युच्यन्ते, न पृथिव्यादीनि स्थूलभूतानि, तेषां विकृतित्वेन प्रकृतित्वाभावात्, इह च "भिन्ना प्रकृतिरष्टधा"इति प्रकृतित्वेन तेषामुपन्यासात्। भूमिः=पृथिवीतन्मात्रं, गन्धतन्मात्रम्, आपः=रसतन्मात्रम्,अनलः=रूपतन्मात्रं,वायुः=स्पर्शतन्मात्रं,खम्=आकाशं, शब्दतन्मात्रं, मनः=कारणे कार्यप्रयोगः, अहङ्कारस्तदर्थः, "अहङ्कारादुभयमिन्द्रियम्" (सां० द० १। ६१) इत्यादिसांख्यस्मृतेर्मनसःकारणमहङ्कारः,च=तथा,एव=निश्चयेन,बुद्धिः=समष्टिबुद्धिः, महत्तत्त्वम्,अहङ्कारः=मूलप्रकृतिर्माया,अहङ्कारवृत्त्युद्भवहेतुत्वात्। नहि नित्यनिर्विकारे सच्चिदानन्दात्मकेऽखण्डैकरसे ब्रह्मणीश्वरे "अहं भुवं वसुनः पूर्व्यस्पतिः" (ऋ० १०।४८।१) "अहं हीदं सर्वमसृक्षि" (बृ० उ० १।४।५) "बहु स्या प्रजायेय" (छां० ६।२।३) इत्येवंरूपायाः अहङ्कारवृत्तेरुद्भवो मायासम्बन्धादृते कथञ्चिदुपपद्यते। यथा हि जीवात्मनि क्षेत्रज्ञे पुरुषे मनःसम्बन्धादिच्छादिवृत्त्युद्भवोऽभ्युपेयते, तथेश्वरेऽपि नित्यनिर्विकारे मायासम्बन्धादहङ्कारवृत्त्युद्भवोऽभ्युपगम्यते,

तेनेश्वरेऽहङ्कारवृत्त्युद्भवहेतोर्मायायाः मूलप्रकृतेरत्राहङ्कारशब्देन ग्रहणं न विरुध्यते । अहङ्कार इति वा करणे घञ्प्रत्ययो, बाहुलकात् । अहङ्क-रोत्यनेनेश्वरः, इति तद्व्युत्पत्तेरहङ्कारो मायानाम्नी मूलप्रकृतिः । सां-ख्याभ्युपगतसृष्टिप्रक्रियायाः भगवद्गीतायामङ्गीकारात् "मूलप्रकृतिर-विकृतिः प्रकृतिविकृतयो महदाद्याः सप्त"(सां० का० ३) इति सां-ख्यस्मृत्युक्तानामष्टानां प्रकृतीनां मध्ये महदहङ्कारपञ्चतन्मात्राणां सप्त-प्रकृतीनां स्वशब्देन ग्रहणात् परिशिष्टायाः मायायाः मूलप्रकृतेः परि-शिष्टेनाहंकारशब्देन ग्रहणं सर्वथा युज्यते, नास्ति काचिदनुपपत्तिः । सांख्यस्मृत्युक्तं प्रकृतिस्वातन्त्र्यं पुरुषनानत्वं चेह भगवद्गीतायां न स्वीक्रियते, वेदविरुद्धत्वात् कर्मसंन्यासवदिति न विस्मर्तव्यम् । इति=यथोक्ता,इयम्=एषाऽष्टधा भिन्ना=अष्टभिः प्रकारैर्भूम्यादिलक्षणै-र्भेदमागता, विभागं प्राप्ता, विभक्ता, मे = ममेश्वरस्य प्रकृतिः=भूत-भौतिकसृष्टिहेतुरैश्वरी मायानाम्नी शक्तिः"मायां तु प्रकृतिं विद्यात्" (श्वे० उ० ४।१० ) इति श्रुतेरित्यर्थः ॥४॥

ननु किमेषैवैका तेऽष्टभेदभिन्ना प्रकृतिः, उतास्त्यन्याऽपि काचित्?, तत्राह

**"अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ! ययेदं धार्यते जगत्" ॥५॥**

अर्थः—इयम्=एषा पूर्वोक्ताऽष्टभेदभिन्ना प्रकृतिरपरा=नाम्नाऽ-परा,परायाः भोक्तृशक्तिरूपायाः प्रकृतेरवरा निकृष्टा, भोग्यशक्तित्वात्, निकृष्टत्वं भोग्यत्वं, दृश्यत्वम्, यद्भोग्यं तत् परार्थं, यत् परार्थं, तत् निकृष्टमिति च न तिरोहितम्,इतस्तु=चार्थे तुः,इतश्च,अस्याः अपरायाः दृश्यायाः भोग्यशक्तिरूपायाः निकृष्टायाः प्रकृतेश्चान्यां=भिन्नां विलक्षणां स्वरूपतः स्वभावतश्चात्यन्तविजातीयां जीवभूतां = जीवात्मना वर्तमानां, क्षेत्रज्ञलक्षणां पुरुषाख्यां, मे=मम, परां=नाम्ना परां प्रकृष्टां दृगात्मिकां भोक्तृशक्तिरूपां,प्रकृष्टत्वं दृक्त्वं,भोक्तृत्वम्,प्रकृतिम्=उत्तरोत्तरसृष्टि-हेतुभूतां शक्तिं, विद्धि=जानीहि, महाबाहो=हे महाभुज ! यया=जीव-भूतया क्षेत्रज्ञलक्षणया पुरुषाख्यया यया परया प्रकृत्या, इदम् = एतद्, जगत् =भूतभौतिकं निखिलं जगद्, धार्यते = अन्तः प्रविश्य ध्रियते, विष्टभ्यते, स्वकर्मद्वारा च पोष्यते । [illegible] विना

जगतो धारणं पोषणं च कथञ्चिदुपपद्यते, पूतिभावप्रसङ्गात् । सेयं जगदुत्पत्तिधृतिपुष्टिरक्षाहेतुर्मे जीवभूता परा प्रकृतिर्भोक्तृशक्तिरपरायाः भोग्यशक्तेः प्रकृतेरन्या द्वितीयेत्यर्थः ॥५॥॥ ५ ॥

अथोक्तस्य क्षेत्रक्षेत्रज्ञलक्षणस्य भोग्यभोक्तृशक्तिरूपस्य परापरप्रकृतिद्वयस्य प्रकृतित्वं सम्पादयन् स्वस्य सर्वजगत्सृष्ट्यादिकारणत्वमाह—

"एतद्योनीनि भूतानि, सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः, प्रभवः प्रलयस्तथा" ॥६॥

अर्थः—एतद्योनीनि=एते अपरत्वेन परत्वेन च पूर्वोक्ते क्षेत्रक्षेत्रज्ञलक्षणे भोग्यभोक्तृशक्तिरूपे प्रकृती द्वे योनी कारणे येषां, तानि प्रागुक्तपरापरप्रकृतिद्वयकारणकानि, सर्वाणि=निखिलानि, भूतानि=चेतनाचेतनात्मकानि ब्रह्मादिस्तम्बान्तानि जंगमानि स्थावराणि च वृत्तवर्तमानवर्तिष्यमाणानि भवनधर्मकाणि, इति=एवम्, उपधारय=अवधारय, निर्धारय, विजानीहि । तत्रापरा प्रकृतिः शरीरेन्द्रियविषयरूपपरिणामेन भूतयोनिः, परा प्रकृतिस्तु जीवात्मरूपत्वात् धारणपोषणरक्षणादिकर्मणा भूतयोनिः । ते चोभे मे मम प्रकृती, मत्तः सम्भूते, सम्भूतिः सृष्टिः, प्रादुर्भावः, तस्मादहम्=ईश्वरोऽहं, कृत्स्नस्य=सप्रकृतिकस्य समग्रस्य, जगतः=चराचरात्मकस्य विश्वस्य, प्रभवः=उत्पत्तिकारणं, स्रष्टा, प्रभवत्यस्मादिति तद्व्युत्पत्तेः, तथा=तथैव, प्रलयः=प्रलयकारणं, प्रलेता, संहर्ता, प्रलीयतेऽनेनेति तद्व्युत्पत्तेः, सृष्टिसंहारकारणमित्यर्थः ॥६॥

ननु यथा सर्वभूतकारणीभूतात् प्रकृतिद्वयात् परोऽन्यस्त्वमसि कारण भूतः, तथा त्वत्तोऽपि परतरमन्यत् कारणान्तरं किञ्चित् स्यात्?, तत्राह-

"मत्तः परतरं नान्यत्, किञ्चिदस्ति धनञ्जय! ।
मयि सर्वमिदं प्रोतं, सूत्रे मणिगणाः इव" ॥७॥

अर्थः—धनञ्जय=हे धनानां जेतः ! मत्तः=मदीश्वरात् प्रकृतिद्वयात् परस्मात्, सर्वकारणात्, परतरं=सर्वस्मादहं परः, मत्तोऽपि परं परतरम्, अन्यत्=इतरत् किञ्चित्=किमपि वस्तु, नास्ति=न विद्यते, मद्व्यतिरिक्तस्य सर्वस्य कार्यत्वादहमेव सर्वस्मात् परः, यत्रेदमाम्नायते "तस्मात् हान्यत् न परः किञ्चनास" (ऋ० १० । १२९ । २) इति ।

श्रूयते च "पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः"(कठो० ३। ११) इति। यस्मान्मत्तः परतरं नास्ति किञ्चिदन्यद्, अहमेव च सर्वस्मात् परः, कारणत्वाच्च सर्वस्यात्मभूतः,तस्मान्मयि=सर्वस्मात्परत्वेन वर्तमाने, सर्वस्य कारणभूतेऽन्तरात्मनीश्वरे मयि,सर्वमिदम्=एतद् जडचेतनात्मकं नानाविधं निखिलं जगत्, प्रोतम्=अनुस्यूतं,ग्रथितं, तथा च याजुषो मन्त्रः "स ओतश्च प्रोतश्च विभूः प्रजासु" (यजु० ३२। ८) इति। तत्र दृष्टान्तः-सूत्रे=तन्तौ,मणिगणा इव=नानाजातीयाः मणयः इव। यथा नानाजातीयाः विचित्रवर्णपरिमाणाकृतयो मणयः सूत्रे प्रोताः अनुस्यूताः सूत्रणैव ध्रियन्ते, तदभावे च विप्रकीर्यन्ते, तथाऽऽत्मभूते सर्वकारणे मयि प्रोतं विचित्रं जडचेतनात्मकं सर्वं जगन्मयैवात्मभूतेन ध्रियते, मद्विना च विशीर्यते। अतः सर्वस्यास्य जगतो यथोत्पत्तिकारणं प्रलयकारणं चाहमस्मि, तथा स्थितिकारणमप्यहमेवास्मि,मत्तः सर्वं जगदुत्पद्यते, मय्येव चोत्पन्नं तेष्ठीयते,मय्येव चान्ते लेलीयते, तस्य सर्वस्योत्पत्तिस्थितिभंगानामहमेव स्थानम् "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद् विजिज्ञासस्व, तद् ब्रह्म"(तै० उ० ३। १) इति श्रुतेरित्यर्थः ॥ ७ ॥

ननु मणिगणेषु सूत्रमिव भूतभौतिकपदार्थेष्वन्तरात्मना वर्तमानं त्वां केन रूपेण विजानीयां ?, तत्राह चतुर्भिः —

**"रसोऽहमप्सु कौन्तेय!, प्रभाऽस्मि शशिसूर्ययोः ।**
**प्रणवः सर्ववेदेषु, शब्दः खे, पौरुषं नृषु" ॥८॥**

अर्थः—कौन्तेय=हे कुन्तीपुत्र ! अप्सु=जले, रसः=सर्वासामपां सारस्तन्मात्ररूपो मधुरः,रुचिरः शिवतमो रसः "यो वः शिवतमो रसः" (ऋ० १०। ९। २) इति मन्त्रवर्णात्, अहम्=ईश्वरोऽहमस्मि=भवामि, रसरूपेणाप्सु तिष्ठामि,रसाभावेऽपां स्थितेरनुपपत्तेः,नहि जातु नीरसाः आपो भवन्ति, तस्माद् रसरूपे कारणे मयीश्वरे सर्वाः आपः प्रोताः वेदितव्याः, यथाऽहमप्सु रसः,तथा शशिसूर्ययोः=चन्द्रार्कयोः,प्रभा= प्रकाशोऽहमस्मि, प्रकाशरूपेण शशिसूर्ययोस्तिष्ठामि, प्रकाशरूपे कारणे मयीश्वरे शशिसूर्यौ प्रोतौ वेदितव्यौ। सर्ववेदेषु=सर्वेषु वेदेषु व्याख्यान-

व्याख्येयभावेन व्यवस्थितेषु मन्त्रब्राह्मणारण्यकेषु, प्रणवः= "तद् यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णानि, एवमोङ्कारेण सर्वा वाक् सन्तृण्णा" ( छा०२।२३।३)इति श्रुतिसिद्धः सर्ववेदसारभूतः ओङ्कारोऽहमस्मि, खे=आकाशे, शब्दः=आकाशकारणभूतः शब्दतन्मात्रनामा शब्दोऽहमस्मि,नृषु=पुरुषेषु,पौरुषं=पुरुषकर्म,उद्यमः, उद्योगोऽहमस्मि, सर्वेषु वेदेषु प्रणवरूपेण,आकाशे शब्दरूपेण,नृषु पौरुषरूपेणाहं तिष्ठामि, प्रणवशब्दपौरुषरूपे कारणे मयीश्वरे वेदाकाशनरः प्रोता इत्यर्थः ॥८॥

"पुण्यो गन्धः पृथिव्यां च,तेजश्चास्मि विभावसौ।
जीवनं सर्वभूतेषु, तपश्चास्मि तपस्विषु" ॥ ९ ॥

अर्थः—च=तथा,पृथिव्यां=भूमौ,पुण्यो गन्धः=अविकृतो गन्धः, गन्धतन्मात्रं, च=तथा, विभावसौ=वह्नौ, दहने, तेजः=दहनं दाहकत्वमहमस्मि। सर्वभूतेषु=सर्वेषु भूतेषु प्राणिषु,जीवनं=प्राणः,च=तथा, तपस्विषु=द्वन्द्वानां शीतोष्णक्षुत्पिपासादीनामात्मजातिदेशकल्याणस्य हेतोः सहनं तपः,तदस्ति नित्यं येषां,ते तपस्विनः, तेषु नित्यतपोयुक्तेषु, तपः=द्वन्द्वसहनलक्षणं तपोऽहमस्मि, इत्यर्थः ॥ ९ ॥

किञ्च—

"बीजं मां सर्वभूतानां, विद्धि पार्थ! सनातनम्।
बुद्धिर्बुद्धिमतामस्मि, तेजस्तेजस्विनामहम् ॥१०॥

अर्थः—पार्थ=हे पृथापुत्र! सर्वभूतानां=सर्वेषां भूतानां प्राणिनां स्थावरजंगमानां, स्थावरजंगमेषु सर्वेषु भूतेषु, सनातनं=नित्यम, अविनश्वरं, बीजं=सजातीयकार्यजननसामर्थ्यं,माम्=ईश्वरं मां, विद्धि= जानीहि। बुद्धिमतां=तत्त्वातत्त्वविवेचनलक्षणा प्रज्ञा बुद्धिः,सा विद्यते येषां,तेषां, या बुद्धिः=प्रज्ञा,साऽहमस्मि=भवामि, तेजस्विनां=प्रगल्भानां परेषामभिभावकानां,परैश्चानभिभाव्यानां,यत् तेजः=प्रागल्भ्यं, परेषामभिभावकत्वं, परैश्चानभिभाव्यत्वं, तदहमस्मि, तेजस्विषु तेजोरूपेणाहं तिष्ठामीत्यर्थः ॥ १० ॥

किञ्च—

**"बलं बलवतामस्मि, कामरागविवर्जितम्।**
**धर्माविरुद्धो भूतेषु, कामोऽस्मि भरतर्षभ! ॥११॥**

अर्थः—भरतर्षभ=हे भरतकुलश्रेष्ठ! बलवतां=बलं वीर्यमोजः,सामर्थ्यं, तद्वतां, यत् कामरागविवर्जितं=कामानां विषयाणां रागस्तृष्णा, तेन कामरागेण विषयतृष्णया विवर्जितं विरहितं,तदप्रयोजितं,विना कामरागेण प्रयोगार्हं, विशुद्धं, नैसर्गिकं,बलम्=ओजो वीर्यं, स्वधर्मानुष्ठानसामर्थ्यं,तदहमस्मि,भूतेषु=प्राणिषु सर्वेषु,धर्माविरुद्धः=धर्मानुकूलः, कामः=पत्नीपुत्रवित्तादिविषयोऽभिलाषोऽहमस्मि=भवामीत्यर्थः ॥११

किं बहुना—

**"ये चैव सात्त्विकाः भावाः, राजसास्तामसाश्च ये।**
**मत्त एवेति तान् विद्धि,नत्वहं तेषु, ते मयि" ॥१२॥**

अर्थः—च=तथा,एव=निश्चयेन,ये सात्त्विकाः=सत्त्वेन निर्वृत्ताः, सत्त्वप्रधानाः, तथा राजसाः=रजसा निर्वृत्ताः रजःप्रधानाः, च=पुनर्ये तामसाः=तमसा निर्वृत्ताः तमःप्रधानाः,भावाः=भवनशीलाश्चेतनाचेतनात्मानः पदार्थाः,ते सर्वे मत्तः एव=कारणान्तरव्यवच्छेदोऽवधारणार्थः, मदीश्वरादेव जायन्ते,अहमेव तेषां सर्वेषामुत्पत्तिस्थितिप्रलयकारणम्, इति=एवं,तान्=अमून् सर्वान् सात्त्विकराजसतामसान् भावान् पदार्थान् मदुत्पत्तिस्थितिप्रलयकारणकान्, विद्धि=जानीहि, तेषु=सप्तमी विभक्तिरधिकरणे,अधिकरणमाधारः आश्रयः, तदा सात्त्विकाः राजसास्तामसाः भावाः परामृश्यन्ते, तदधिकरणस्तदाधारस्तदाश्रयोऽहम्=ईश्वरोऽहं, न तु=नैवास्मि, ते=अमी सर्वे भावाः, मयि=मदधिकरणाः, मदाधाराः मदाश्रयाः सन्तीति जानीहि। कारणं हि कार्यस्याधिकरणमाश्रयो भवति, यथा घटशरावोदञ्चनादेर्मृत्तिका,कुण्डलकटकादेश्च सुवर्णं, न तु कार्यं क्वचित् कदाचित् कारणस्याधिकरणम्, तदभावेऽपि कारणस्यावस्थानात्। अहं च सर्वेषां तेषां सात्त्विकराजसतामसानां भावानामुत्पत्तिस्थितिप्रलयकारणं,यथा परापरप्रकृतिद्वयस्येति ते सर्वे भावाः मदधिकरणाः, मदाश्रयाः,मदायत्तस्थितिकाः,नाहं कालत्रयेऽपि तदधिकरणस्तदाश्रयस्तदायत्तस्थितिक इत्यर्थः ॥ १२ ॥

नन्वेवंभूतं त्वां कस्मात् कश्चित् न जानाति ?, तत्राह—

**"त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।**
**मोहितं नाभिजानाति, मामेभ्यः परमव्ययम्" ॥१३॥**

अर्थः—एभिः=एतैः पूर्वोक्तैस्त्रिभिः=त्रिविधैः, गुणमयैः=सत्त्वरजस्तमोगुणविकारैः, सत्त्वादिगुणत्रयकार्यैः, सात्त्विकैराजसैस्तामसैर्भावैः=पदार्थैः,शान्तघोरमूढैः शरीरेन्द्रियविषयैः,सर्वं=समस्तमिदम्=एतद्, जगत्=जंगमस्थावरप्राणिजातं, मोहितं = विवेकाभावो मोहस्तं प्रापितं यस्मात्,तस्माद् एभ्यः=एतेभ्यः सत्त्वादिगुणेभ्यो गुणमयेभ्यश्च दृश्येभ्यः शरीरेन्द्रियविषयेभ्यः,परम् = उत्तरं विलक्षणं,भिन्नं,सर्वभूतान्तरात्मानम्, अव्ययं = व्ययो विनाशः, तेन जन्मादिसर्वभावविकाराः लक्ष्यन्ते, व्ययरहितं,जन्मादिविनाशान्तसर्वभावविकारवर्जितं, माम्=ईश्वरं मां, नाभिजानाति = नाभिपश्यति, न वेत्तीत्यर्थः ॥ १३ ॥

नन्वेभिस्त्रिभिर्गुणमयैर्भावैः कश्चित् मुच्यतेऽपि ?, तत्राह—

**"दैवी ह्येषा गुणमयी, मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते, मायामेतां तरन्ति ते" ॥१४॥**

अर्थः–हि=निश्चयेन,एषा=इयं शरीरेन्द्रियविषयरूपेण स्थिता,दैवी=देवस्य स्वतो द्योतमानस्य प्रकाशमानस्य ममेश्वरस्य स्वभूताऽद्भुताऽलौकिकी शक्तिः, गुणमयी=सत्त्वरजस्तमोगुणात्मिका,मम=मे, मदीया, माया=मायानाम्नी प्रकृतिः, दुरत्यया=दुःखेनात्ययोऽतिक्रमो यस्याः,सा तथा,दुरतिक्रमा,दुस्तरा,यद्यपि,तथापि ये=ये जनाः,मामेव=मामीश्वरमेव, नान्यं कञ्चिदित्यवधारणार्थः,प्रपद्यन्ते–प्रकर्षेण श्रद्धया भक्तिभावेनायन्ते भजन्ते सेवन्ते,मदाज्ञामनुवर्तन्ते,यथा वच्मि तथा कुर्वते,ते अमी जनाः, एताम्=इमां सात्त्विकराजसतामसैर्गुणमयैस्त्रिभिर्भावैर्मोहिकां मामिकां मायां गुणत्रयात्मिकां प्रकृतिं,तरन्ति = अतिक्रामन्ति,तेषु गुणमयेषु सर्वेषु भावेषु पदार्थेषु वर्तमाना अपि न कदाचित् मुह्यन्ति, तया ते सर्वथा मुच्यन्ते,न तैर्भावैः कदाचिन्मोहं प्राप्यन्ते, इत्यर्थः ॥ १४ ॥

ननु त्वां चेत् प्रपन्नाः जनाः मायामेतां तरन्ति, तदा सर्वे जना कस्मात् त्वां न प्रपद्यन्ते ?, तत्राह—

"न मां दुष्कृतिनो मूढाः, प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञानाः, आसुरं भावमाश्रिताः" ॥१५॥

अर्थः—मूढाः=मूर्खाः, विवेकशून्याः,कर्तव्याकर्तव्यबुद्धिविरहिताः, दुष्कृतिनः=पापकारिणः, नराधमाः=नरेषु मनुष्येष्वधमाः, कुत्सिताः पामराःमायया=पूर्वोक्तया सात्त्विकराजसतामसैस्त्रिभिःशरीरेन्द्रियविषय-लक्षणैर्भावैः परिणतया प्रकृत्याऽपहृतज्ञानाः=प्रमुषितवेदनाः, नाशित-विवेकज्ञानाः,आसुरम्=असुषु प्राणेषु रताः निरताः,प्राणानामिन्द्रियाणां प्रीणनार्थं रात्रिन्दिवं विषयेषु रक्ताः सक्ताः असुराः, तेषामिमं,भावं= स्वभावं, दम्भदर्पाभिमानादिलक्षणम्, आश्रिताः=आश्रित्यावस्थिताः न माम्=ईश्वरं मां, प्रपद्यन्ते=प्रकर्षेण श्रद्धया भक्तिभावेनायन्ते, भजन्ते सेवन्ते, मदाज्ञामनुवर्तन्ते, इत्यर्थः ॥ १५ ॥

ननु न सर्वे जनाः दुष्कृतिनः, सुकृतिनोऽपि सन्ति बहवो जनाः ?, तत्राह—

"चतुर्विधाः भजन्ते मां, जनाः सुकृतिनोऽर्जुन ! ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ !" ॥१६॥

अर्थः—अर्जुन=हे अर्जुन ! चतुर्विधाः=चतुष्प्रकाराः,सुकृतिनः= पुण्यकारिणो जनाः=मनुष्याः, माम्=ईश्वरं मां, भजन्ते=सेवन्ते, प्रपद्यन्ते। तेषामार्तः=आर्त्या,रोगादिका विपत्तिरार्तिः,तया ग्रस्तो, व्याप्तो विपन्नः प्रथमः,जिज्ञासुः=विविदिषुरात्मानं ज्ञातुं वेदितुमिच्छुर्द्वितीयः, अर्थार्थी=धनार्थी, सुखतत्साधनकामस्तृतीयः, ज्ञानी च=आत्मज्ञानी, ब्रह्मज्ञानी च, चतुर्थः, भरतर्षभ=हे भरतश्रेष्ठ ! इत्यर्थः ॥१६॥

ननु किमेते सुकृतित्वात् सर्वेऽपि समास्तुल्याः, उतास्ति तेषां कश्चिद् विशिष्टः ?, तत्राह —

"तेषां ज्ञानी नित्ययुक्तः, एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" ॥१७॥

अर्थः—तेषाम्=अमीषां चतुर्णां भक्तानां सेवमानानां मध्ये, ज्ञानी= आत्मज्ञानी, सर्वदा सर्वत्रैकात्मदर्शी, नित्ययुक्तः=लोकसङ्ग्रहार्थं मया कर्तव्यमिति कर्तव्यबुद्धया नित्यं सर्वदा कर्मसु युक्तः संयुक्तः सँलग्नः, एकभक्तिः=एकस्मिन् सर्वात्मभूते मयीश्वरे भक्तिः परानुरक्तिर्यस्य,

भजनीयान्तराभावात्, स एकभक्तिश्च यस्मात्, अतो विशिष्यते= उत्कृष्यते,विशेष उत्कर्षोऽतिशयः, पूर्वेभ्यस्त्रिभ्यो भक्तेभ्योऽतिशय्यते। हि=निश्चयेन, ज्ञानिनः=ब्रह्मात्मज्ञानिनः,सर्वदा सर्वत्रैकात्मदर्शिनोऽहं= सर्वभूतान्तरात्माऽहमीश्वरः, यत्रैतच्छ्रुतं भवति "एको वशी सर्व- भूतान्तरात्मा, एकं रूपं बहुधा यः करोति" (कठो० ५।१२) इति, अत्यर्थम्=अत्यन्तं,भृशं प्रियः=आत्मत्वात् परमप्रेमास्पदभूतः,श्रूयते च "तदेतत् प्रेयः पुत्रात्, प्रेयो वित्तात्, प्रेयोऽन्यस्मात् सर्वस्मात्, अन्तरतरं यदयमात्मा" (बृ० उ० १।४।८) इति, च=तथा, सः=असौ ब्रह्मात्मज्ञानी,मम=ईश्वरस्य ममात्यर्थम्=अत्यन्तं,प्रियः=आत्मत्वात् परम- प्रेमास्पदभूतः। यथा हि ज्ञानिनः आत्मत्वादहमीश्वरोऽत्यर्थं प्रियोऽस्मि, तथा ममेश्वरस्यात्मत्वात् ज्ञानी नितान्तमस्ति प्रियः, आत्मा हि सर्वदा सर्वस्यातिशयेन प्रियो भवतीति श्रुतिलोकयोः प्रसिद्धमित्यर्थः ॥१७॥

अथैकप्रशंसया प्राप्तेतरनिन्दां निराकरोति—

**"उदाराः सर्वे एवैते, ज्ञानी त्वात्मैव मे मतम्।**
**आस्थितः स हि युक्तात्मा, मामेवानुत्तमां गतिम्"॥१८॥**

अर्थः—एते=इमे,सर्वे=आर्तादयः सर्वे, एव=निश्चयेन, उदाराः= उत्कृष्टाः विशिष्टाः, श्रेष्ठाः,मे च प्रियाः, तु=परन्तु,ज्ञानी=आत्मज्ञानी, सर्वदा सर्वत्रैकात्मदर्शी,आत्मैव=ममात्मैव,मयि ज्ञानिनि च,नास्त्यल्पोऽ- पि भेदः, नासौ मत्तो भिन्नः इत्यवधारणार्थः, इति मे=मम, मतं= सम्मतं,निश्चितम्। हि=यस्मात्, सः=असौ ज्ञानी, युक्तात्मा=सर्वदा नित्यं कर्मयोगयुक्तमनाः, मामेव=सर्वभूतान्तरात्मानं मामीश्वरमेव, नान्यं कञ्चिदित्यवधारणार्थः,अनुत्तमां=सर्वस्मादुत्तमाम्, उत्कृष्टतमां श्रेष्ठतमां,गतिं=गन्तव्यं मामेव परं ब्रह्म, आस्थितः=भक्तिभावेनाश्रितः, गन्तुं प्रवृत्तः,निष्कारणो मद्भक्तो,न तु रोगनिवृत्त्यादिकामनया कयाचिद् विपत्त्या मद्भक्त इत्यर्थः॥ १८॥

अथास्य ज्ञानिनो भक्तस्य दौर्लभ्यमाह—

**"बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते।**
**वासुदेवः सर्वमिति, स महात्मा सुदुर्लभः" ॥१९॥**

अर्थः—बहूनाम्=अनेकेषां द्वित्रिचतुर्णां, जन्मनां=जनुषाम्, अन्ते=अवसाने, द्वितीये वा,तृतीये वा जन्मनि,ज्ञानवान्=आत्मज्ञानी, माम्=ईश्वरं मां,प्रपद्यते=प्रकर्षेण भक्तिभावेनायते प्रेमातिशयेन भजते। कथं मां प्रपद्यते? वासुदेवः सर्वमिति=सर्वं वसति यस्मिन्,सर्वास्मिन् वा वसति यः,स वासुः,बाहुलकादुण् प्रत्ययः, वासुश्चासौ देवश्च वासुदेवः, ईश्वरः परमात्मा ब्रह्म, स एव सर्वं=सकलं समस्तं विश्वं, चराचरं जगद्, इति=एवं मां प्रपद्यते "पुरुषः एवेदं सर्वम्" (ऋ० १०।९०।२) "तदेवाग्निस्तदादित्यः" (यजु० ३२।१) "ब्रह्मैवेदं विश्वम्" (मुं०उ० २।२।११) "सर्वं खल्विदं ब्रह्म" (छां० उ०३ १४ १) "आत्मैवेदं सर्वम्" (छां० उ०७।२५।२) इत्येवं प्रजानन् निरतिशयप्रेम्णा भक्त्या मां भजते,सः=यो ज्ञानवान् 'वासुदेवः सर्वम्,इति मां प्रपद्यते,स एष आत्मज्ञानी भक्तो, महात्मा=महामनाः, विशालहृदयः, संसारे वर्तमानोऽपि, सांसारिकान् सकलान् भोगानुपभुञ्जानोऽपि,सांसारिकैः रागद्वेषशोकमोहादिकैर्निखिलैर्दोषैः पाथसा पाथोजवदसंस्पृष्टत्वात् नित्यमक्षुब्धचित्तः, सर्वदा सर्वत्र, सुप्रसन्नान्तःकरणः, अनिशं सस्मितमुखः, स सुदुर्लभः=अतिदुर्लभः, दुर्लभतरः, मनुष्याणां सहस्रेषु दुःखेनापि लब्धुं न शक्यो, विरलः क्वचित् कश्चिदित्यर्थः ॥ १९ ॥

नन्वार्तादियोऽपि यदि त्वद्भक्ताः सम्भवन्ति,तदा कस्मात् जनाः अन्याः देवताः प्रपद्यन्ते ?, तत्राह—

**"कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।**
**तं तं नियममास्थाय, प्रकृत्या नियताः स्वया" ॥२०॥**

अर्थः—तैस्तैः=अमीभिरमीभिर्नानाविधैः, कामैः=स्त्रीपुत्रपशुवित्तादिविषयैरभिलाषैः,हृतज्ञानाः=अपहृतविवेकज्ञानाः,स्वया=स्वकीयया स्वभावापरनाम्न्या संस्काराख्यया पूर्वाभ्यासवासनया नियताः=नियमिताः निगृहीताः वशीकृताः प्रेरिताः,तं तं नियमं=तत्तद्देवताभक्तौ यो यो मन्त्रजपोपवासादिरूपो नियमः, तं तं नियमम्,आस्थाय=आश्रित्य, स्वीकृत्य, अन्यदेवताः=सर्वभूतान्तरात्मनो मत्तः ईश्वरादन्याःशिवविष्णुब्रह्माद्याः देवताः, प्रपद्यन्ते=प्रकर्षेण श्रद्धातिशयेन भक्तिभावेनायन्ते, भजन्ते, सेवन्ते, इत्यर्थः ॥ २० ॥

ननु त्वं तत्र किं करोषि ? तत्राह—

"यो यो यां यां तनुं भक्तः, श्रद्धयाऽर्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां, तामेव विदधाम्यहम्" ॥२१॥

अर्थः—यो यो भक्तः=तत्तद्देवताभक्तः, यां यां तनुं=देवतातनूं, देवताव्यक्तिं, देवतां, श्रद्धया=असौ देवताऽवश्यं मे कामितमर्थं शीघ्रं साधयिष्यति, इत्येवम्भूतया यया श्रद्धयाऽऽस्तिक्यबुद्ध्या, अर्चितुम्=अर्चयितुं पूजयितुं, भक्त्या सत्कर्तुम्, इच्छति=कांक्षति, तदर्थं यस्यति। तस्य तस्य=अमुष्यामुष्य देवताभक्तस्य, तामेव श्रद्धां=यया श्रद्धयाऽर्चितुमिच्छति, तामेव श्रद्धाम्, अमूमेवास्तिक्यबुद्धिम्, अचलां=निश्चलां, स्थिरां, दृढाम्, अहं विदधामि=करोमि, निर्वर्तयामीत्यर्थः ॥२१॥

ननु ततः किं ?, तत्राह—

"स तया श्रद्धया युक्तः, तस्याः राधनमीहते।
लभते च ततः कामान्, मयैव विहितान् हि तान्" ॥२२॥

अर्थः—सः=असौ देवताभक्तः, तया श्रद्धया=अमुया मद्विहितयाऽचलया श्रद्धया, युक्तः=संयुक्तः, समन्वितः, तस्याः=अमुष्याः देवतायाः, राधनं=चतुर्थीस्थाने द्वितीया, राधनमाराधनं, तोषणं, प्रसादनमिति तत्पर्यायस्तदर्थं, प्रसन्नतार्थम्, ईहते=चेष्टते, तदनुकूलामनेकविधां क्रियां कुरुते। च=पुनस्ततः=तस्याः देवतायाः सकाशात्, हि=निश्चयेन, मयैव=सर्वकारणभूतेन मयका परमेश्वरेणैव, नान्येन केनचिदित्यवधारणार्थः, विहितान्=तद्देवताद्वारा कृतान् रचितान्, सम्पादितान् संसाधितान्, तान्=तांस्तान्, कामान्=काम्यमानान् अभिलषितान् पदार्थान्, लभते=विन्दते, तत्तद्देवताभ्यः प्राप्नोतीत्यर्थः ॥ २२ ॥

ननु चेदन्यदेवताभक्ताः अपि स्वाभिलषितान् पदार्थान् लभन्ते, तदा तेभ्यस्त्वद्भक्तानां को विशेषः, येन देवतान्तराणि हित्वा सर्वे जनाः त्वामेव भजेरन् ?, तत्राह—

"अन्तवत्तु फलं तेषां, तद् भवत्यल्पमेधसाम्।
देवान् देवयजो यान्ति, मद्भक्ताः यान्ति मामपि" ॥२३॥

अर्थः—अल्पमेधसां=अल्पबुद्धीनां, मन्दप्रज्ञानां, परिच्छिन्नदृष्टीनां,

तेषाम्=अमीषां तत्तद्देवताभक्तानां,तद्=अदः,फलं=तत्तद्देवताभक्त्या लभ्यं वाञ्छितवस्तुलक्षणं फलम्,अन्तवत्तु=नानन्तं नाविनाशीति तोऽर्थः,अन्तो विनाशो विद्यते यस्य,तदन्तवद्,विनाशवद्,विनाशि,भवति=वर्तते,यतो, देवयजः=देवान् यजन्ति राध्नुवन्ति, भजन्ति ये, ते देवयजो देवताभक्ताः, देवान्=अन्तवतो विनाशिनो देवान्,यान्ति=भक्तिभावेन प्राप्नुवन्ति, भजन्ति, चार्थेऽपिः, मद्भक्ताश्च=ममेश्वरस्य भक्ताः पुनर्माम्=अनन्तमविनाशिनमीश्वरं मां,यान्ति=भक्तिभावेन प्राप्नुवन्ति,भजन्ति,यजन्ति। नचान्तवन्तो विनाशिनो देवाः कदाचित् कथञ्चिदनन्तमविनाशि फलं स्वभक्तेभ्यो दातुं क्षमन्ते, विनाशिनां तेषामविनाशिफलदाने सामर्थ्याभावात्। अनन्तोऽविनाशी च सर्वभूतान्तरात्माऽहमीश्वरः, तस्माद् देवतान्तरभक्तेभ्यो मद्भक्तानां महान् विशेषः, इत्यर्थः॥

ननु यथा व्यक्तिमन्तो देवाः, तथा भवानपि व्यक्तिमान्, तत्कथं देवताभक्तेभ्यस्त्वद्भक्तानां विशेषं निश्चिनुयाम?, तत्राह—

**"अव्यक्तं व्यक्तिमापन्नं, मन्यन्ते मामबुद्धयः।**
**परं भावमजानन्तो ममाव्ययमनुत्तमम्" ॥२४॥**

अर्थः—अबुद्धयः=बुद्धिहीनाः, विवेकबुद्धिरहिताः, अविवेकिनः, मम=ईश्वरस्य मम, परं=गुणेभ्यः प्रकृत्याख्येभ्यस्तत्कार्येभ्यश्च शरीरेन्द्रियविषयेभ्यः सात्त्विकराजसतामसेभ्यो भावेभ्यः परमुत्कृष्टं कारणात्मकम्, अनुत्तमं=सर्वोत्तमम्, अव्ययं=व्ययो विनाशस्तद्रहितमविनाशिनं, भावं=स्वरूपम्, अजानन्तः=अविदन्तोऽनालोचयन्तोऽव्यक्तं=व्यक्तो विकारो देहेन्द्रियादिः, तद्रहितं, तद्वर्जितं, माम्=ईश्वरं मां, व्यक्तिम्=अभिव्यक्तिं, जन्म, देहेन्द्रियसम्बन्धम्,आपन्नं=प्राप्तम्, इतरदेहिवद् देहिनं, मन्यन्ते=बुध्यन्ते, जानन्तीत्यर्थः।

देवेषु हि सर्वेषु शिवविष्णुब्रह्माणो मुख्याः देवाः, ते च त्रयः सर्गादौ मत्त एव मायायोगेनोद्भवन्ति, मयैव च विश्वस्य संहारस्थितिसृष्टिकर्मसु नियुज्यमानाः,यथानियोगं स्वं स्वं कर्म निर्वर्तयन्ति, समाप्ते च स्वाधिकृते तस्मिन् तस्मिन् कर्मणि पुनर्मय्येव लयं गच्छन्ति। तदेतदभिलक्ष्यैव सूचितं योगदर्शने "पूर्वेषामपि गुरुः कालेनानवच्छेदात्" (यो० १।२६) इति। पूर्वे पुरुषाः शिवविष्णुब्रह्माणः कालेनावच्छिद्यन्ते,

तेषां गुरुर्जनको मायापतिरीश्वरः कालेन नावच्छिद्यते,कालेनानवच्छेदा-च्चासौ नित्योऽनन्तोऽविनाशीति सूत्रार्थः। तेषां त्रयाणामैश्वर्यमपि सा-तिशयं, न निरतिशयम्। देवतान्तराणि च कर्मशरीराणि सातिशयै-श्वर्याणि यथैता मुख्यास्तिस्रो देवता इति राद्धान्तः। नचोत्पादविना-शिनीनां सातिशयैश्वर्यवतीनां च देवतानां भक्ताः क्वचित् कदाचित् किञ्चिन्नित्यं फलमवाप्तुमर्हन्ति,यथा सर्वदा सर्वत्र मद्भक्ताः। तस्मादन्यदेवताभक्तेभ्यो मद्भक्तानां महान् विशेषः। यथा व्यक्तिमन्तो देवाः, तथाऽहमपि व्यक्तिमानिति चाबुद्धयो मन्यन्ते, न विवेकबुद्धियो वि-शालहृदयः॥ २४॥

ननु कुतस्तेऽबुद्धयस्त्वां विपरीतं मन्यन्ते ?, तत्राह—

**"नाहं प्रकाशः सर्वस्य, योगमायासमावृतः।**
**मूढोऽयं नाभिजानाति, लोको मामजमव्ययम्"॥२५॥**

अर्थः-अहम्=ईश्वरोऽहं,सर्वस्य=सकलस्य लोकस्य,जनस्य,प्रकाशः=कर्मणि घञ्,प्रकाशविषयः, प्रकाशः प्रत्यक्षज्ञानं, तद्गोचरः, प्रत्यक्षः,न=नास्मि, प्रकटो न भवामि, यतो योगमायासमावृतः=यस्याः मायायाः स्वधाऽ-परसंज्ञायाः ज्ञानक्रियाबलरूपायाः स्वाभाविक्याः विविधरूपधारिण्याः सङ्कल्पानुविधायिन्याः सृष्टिनिर्माणहेतोः परापरप्रकृतिमूलभूतायाः शक्ते-रीश्वरेण नित्यं योगः सम्बन्धः,सा योगमाया,तया योगमायया समावृतः समाच्छादितोऽन्यथा प्रदर्शितोऽव्यक्तः सन् व्यक्तिमापन्नः प्रकटितः। अत एव,अयम्=एष, मूढः=विवेकशून्यो,लोकः=जनो मनुष्यः,अजं=जन्म-रहितम्,अव्ययम्=व्ययो विनाशस्तद्रहितं, जन्मविनाशहीनम्,अनाद्य-नन्तं,माम्=ईश्वरं मां, नाभिजानाति=न तत्त्वतोऽवगच्छति,न वेत्तीत्यर्थः।

माया हि मामकी सङ्कल्पानुविधायिका स्वाभाविकी शक्तिः। सा मां यथासङ्कल्पं सर्वदा प्रत्यवभासयति, मायया प्रत्यवभास्यमानं मामकं मायिकं रूपं पश्यन् प्रायेण व्यामोहमापन्नः सर्वो लोको न मां तत्त्वतो जानाति। यस्तु जानाति,स विरलः क्वापि कश्चिन्मद्भक्तो निष्काम-कर्मयोगी। स हि मदीयया मायया शक्त्या परया प्रत्यवभास्यमानं मामकं मायिकं रूपं पश्यन्नपि नित्यं तात्त्विकमेव मामकं रूपं पश्यति, न जातु स्वप्नेऽपि विपर्यस्यति , दृष्टान्तश्चात्र साक्षान्मन्त्रदृग्‌ऋषिर्वामदेवो

बृहदुक्थः । यस्यैतद् दर्शनम् "यदचररस्तन्वा वावृधानो बलानीन्द्र! प्रब्रुवाणो जनेषु । मायेत् सा ते यानि युद्धान्याहुर्नाद्य शत्रुं न नु पुरा विवित्से" ( ऋ० १० । ५४ । २ ) इति । इन्द्रः=परमैश्वर्यवानीश्वरः,तत्सम्बोधनम् इन्द्र=हे परमैश्वर्यवन्नीश्वर! दृष्टान्तान्तराणि चानेकानि, न विस्तारभयादत्र तान्युपस्थाप्यन्ते ॥ २५ ॥

किं बहुना—

**"वेदाहं समतीतानि, वर्तमानानि चार्जुन! ।**
**भविष्याणि च भूतानि, मां तु वेद न कश्चन" ॥२६॥**

अर्थः—अर्जुन=हे अर्जुन ! अहं=वासुदेवोऽहं, समतीतानि=समतिक्रान्तानि विनष्टानि,च=तथा,वर्तमानानि=विद्यमानानि,च=तथा, भविष्याणि=वर्तिष्यमानानि भावीनि,भूतानि=स्थावराणि, जंगमानि च सर्वाणि त्रिकालवर्तीनि भूतानि, वेद=जानामि,तु=परन्तु मां=सर्वदा सर्वत्र वर्तमानं, विद्यमानं, मामीश्वरं, कश्चन=कोऽपि, न वेद=न वेत्ति, न जानाति, वेदनाभावे कुतो मद्भक्तिरित्यर्थः ॥ २६ ॥

नन्वस्यावेदनस्य त्वद्गोचरज्ञानाभावस्य किं कारणम् ?, तत्राह—

**"इच्छाद्वेषसमुत्थेन, द्वन्द्वमोहेन भारत ! ।**
**सर्वभूतानि संमोहं, सर्गे यान्ति परन्तप!" ॥२७॥**

अर्थः—भारत=हे भरतवंशज ! सर्गे=सृष्टौ,इच्छाद्वेषसमुत्थेन=इच्छाद्वेषाभ्यामनुकूलप्रतिकूलविषयाभ्यां रागद्वेषाभ्यां समुत्थेन समुत्पन्नेन, द्वन्द्वमोहेन=द्वन्द्वानां सुखदुःखलाभालाभजयपराजयप्रभृतीनां युग्मानां मोहेन व्यामोहेन, स्यादिदं मम, न स्यादिदं मम, इत्यभिनिवेशात्मकेनाविवेकप्रत्ययेन हेतुना,सर्वभूतानि=सर्वे प्राणिनः,संमोहं=मद्गोचरं गाढं मोहं,भृशमविवेकं,सर्वथा ज्ञानाभावं, यान्ति=गच्छन्ति, प्राप्नुवन्ति, परन्तप=हे शत्रुतापन ! इत्यर्थः ।

रागद्वेषाभिभूतचेतसः खलु प्रायेण सर्वे प्राणिनो लोकेऽस्मिन् वर्तन्ते । ते चाहर्निशं तद्गोचरेषु सुखदुःखादिषु स्यादिदं मम, न स्यादिदं ममेति तीव्रेणाभिनिवेशेन सँल्लग्नाः क्षणार्धमपि ततोऽवकाशं न लभन्ते । अवकाशाभावे च कुतो मद्वेदनं, कुतश्च मद्भक्तिः ॥२७॥

ननु चेदिच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन संमूढाः सर्वे प्राणिनो नेश्वरं त्वां जानन्ति, ज्ञानाभावाच्च न त्वां भजन्ते, तदा त्वद्भक्तिपरं शास्त्रं व्यर्थमधिकार्यभावात्?, तत्राह—

"येषां त्वन्तगतं पापं, जनानां पुण्यकर्मणाम्।
ते द्वन्द्वमोहनिर्मुक्ताः, भजन्ते मां दृढव्रताः"॥२८॥

अर्थः—येषां तु=येषां च, पुण्यकर्मणां=पुण्कमर्वतां, सदाचरणशीलानां, स्ववर्णोचितं कर्मजातं कुर्वतां, जनानां=मनुष्याणां, पापं=ज्ञानप्रतिबन्धकं पापम्, अन्तगतम्=अन्तमवसानं विनाशं गतं प्राप्तं, विनष्टं, ते=ते जनाः, द्वन्द्वमोहनिर्मुक्ताः=रागद्वेषसमुत्थाद् द्वन्द्वमोहाद् यथोक्तात् निःशेषेण मुक्ताः हीनाः, सर्वथा द्वन्द्वमोहेन वर्जिताः, परित्यक्ताः, मां=सर्वभूतकारणं सर्वभूतान्तरात्मानमीश्वरं मां विदित्वा दृढव्रताः=ईश्वरभक्तानां यानि व्रतानि नियमाः, तेषु दृढाः स्थिराः अचलाः सन्तो, भजन्ते=सर्वात्मना मां सेवन्ते, सर्वदा सर्वत्र मदाज्ञामनुवर्तन्ते। अतो न मद्भक्तिपरं शास्त्रं व्यर्थमित्यर्थः॥ २८॥

ननु त्वां भजमानानां दृढव्रतानां भक्तानां किं भवति?, तत्राह द्वाभ्याम्—

"जरामरणमोक्षाय, मामाश्रित्य यतन्ति ये।
ते ब्रह्म तद् विदुः कृत्स्नमध्यात्मं कर्म चाखिलम्"॥२९॥

अर्थः—ये=ये जनाः, जरामरणमोक्षाय=जरामरणादात्मनो मोचनाय, जरामरणादिदुःखात्यन्तानिवृत्तये, मां=सर्वभूतान्तरात्मानं मामीश्वरम्, आश्रित्य=भक्तव्यत्वेन समाश्रित्य, मद्भक्ताः सन्तो, यतन्ति=यतन्ते, कर्तव्यबुद्ध्या कर्मसु वर्तन्ते। ते=ते जनाः कृत्स्नं=समग्रं यथा भवति, तथा, तद्=अदो, ब्रह्म=परं ब्रह्म, विदुः=विदन्ति, जानन्ति, अध्यात्मं विदुः=अध्यात्मं जानन्ति, च=तथाऽखिलं=निःशेषं यथा भवति तथा, कर्म विदुः=कर्म जानन्तीत्यर्थः॥२९॥

किञ्च—

"साधिभूताधिदैवं मां, साधियज्ञं च ये विदुः!
प्रयाणकालेऽपि च मां, ते विदुर्युक्तचेतसः"॥३०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः।

अर्थः—ये = ये जनाः, साधिभूताधिदैवम् = अधिभूतेनाधिदैवेन च सहितं, च = तथा, साधियज्ञम् = अधियज्ञेन सहितं, मा = परमेश्वरं मां, विदुः = विदन्ति जानन्ति, ते = अमी, युक्तचेतसः = युक्तं मय्यासक्तं भक्तिभावेनाभिविविष्टं चेतो मनो येषां, ते मय्यासक्तमनसः, सर्वदा समाहितान्तःकरणाः, प्रयाणकालेऽपि = मरणसमयेऽपि, च = निश्चयेन मां, विदुः = परमेश्वरं मां जानन्ति, पश्यन्ति, न जातु व्याकुलीभूयान्यथावृत्तयो भवन्तीत्यर्थः ॥ ३० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्ये सप्तमोऽध्यायः ॥७॥

---

# "अथाष्टमोऽध्यायः" ।

सप्तमाध्यायान्ते ज्ञेयत्वेनोक्ताः ये ब्रह्मादयः सप्त पदार्थाः, तेषां व्याख्यानपरोऽयमष्टमोऽध्यायः आरभ्यते । तत्र तान् विशेषतो जिज्ञासमानोऽर्जुनः पृच्छति द्वाभ्याम्—

"अर्जुनः उवाच" ।

"किं तद् ब्रह्म किमध्यात्मं, किं कर्म पुरुषोत्तम ! ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते" ॥१॥

अर्थः—पुरुषोत्तम = हे पुरुषेषु, पुरुषेभ्यः पुरुषाणां वोत्तम ! उच्चतम ! हे सर्वपुरुषोत्कृष्टतम ! तद् ब्रह्म = यज्ज्ञेयत्वेनोक्तं ब्रह्म, तद् ब्रह्म, किं = किंरूपं, ब्रह्मशब्दस्यानेकार्थत्वादिह ब्रह्मशब्देन किं विवक्षितं, किमभिप्रेतम्, अध्यात्मं किं, कर्म किम् = अध्यात्मशब्देन किं, कर्मशब्देन च किमभिधित्सितम् । च = तथा, अधिभूतं किं प्रोक्तम् = अधिभूतं किं प्रोच्यते, किं परिभाष्यते, अधिदैवं किमुच्यते = किं कथ्यते, अधिभूतशब्दवाच्यमधिदैवशब्दवाच्यं च किमभिमतमित्यर्थः ॥ १ ॥

अधियज्ञः कथं कोऽत्र, देहेऽस्मिन् मधुसूदन ! ।
प्रयाणकाले च कथं, ज्ञेयोऽसि नियतात्मभिः" ॥२॥

अर्थः—मधुसूदन=हे मधुहन्तः, हे कृष्ण ! अत्र=इह लोके, अस्मिन्=एतस्मिन्, देहे=शरीरे, अधियज्ञः=अधियज्ञशब्दवाच्यः, कः=कोऽस्ति, स कथं=केन प्रकारेण, ज्ञेयः=ज्ञातव्यः। च=पुनः, प्रयाण काले=मरणसमये, नियतात्मभिः=युक्तचेतोभिः, समाहितान्तः करणैः, कथं=केन प्रकारेण, ज्ञेयः=ज्ञातव्योऽसि=भवसीत्यर्थः ॥ २ ॥

अथार्जुनप्रश्नानां सप्तानां क्रमेणोत्तरमाह भगवान्—

"श्रीभगवानुवाच"।

**"अक्षरं ब्रह्म परमं, स्वभावोऽध्यात्ममुच्यते ।**
**भूतभावोद्भवकरो, विसर्गः कर्मसंज्ञितः" ॥३॥**

अर्थः—परममक्षरं ब्रह्मोच्यते इति प्रथमस्य प्रश्नस्योत्तरम्। यत् परमं=सर्वोत्कृष्टं, श्रेष्ठं, निरतिशयम्, अक्षरम्=अश्नुते व्याप्नोति सर्वं, कारणत्वात्, अत एव च न क्षरति विनश्यति चेत्यक्षरं "अथ परा, यया तदक्षरमधिगम्यते, यत् तद् अद्रेश्यम् अग्राह्यम्" ( मुं० उ० १ । ६ ) "एतद् वै तदक्षरं गार्गि ! ब्राह्मणाः अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्" ( बृ० उ० ३ । ८ । ८ ) "अक्षरमम्बरान्तधृतेः" ( वेदा० १ । ३ । १० )

इत्यादिश्रुतिन्यायसिद्धं प्रकृत्यन्तस्य निखिलप्रपञ्चस्याश्रयभूतं जन्मनः संहारस्य च कारणं परमात्मनामानमीश्वरतत्त्वं, ब्रह्म=ब्रह्मशब्दवाच्यम्, उच्यते=कथ्यते। स्वभावोऽध्यात्ममुच्यते, इति द्वितीयप्रश्नस्योत्तरम्। स्वभावः=प्रकृतिः, या किल सर्गादौ परापररूपेणाभिव्यज्यते, यस्याः स्वधेति मान्त्रवर्णिकं नाम, या मायाख्या स्वाभाविकीश्वरशक्तिः, सा, अध्यात्मं=सर्वभूतान्तरात्मानं परमात्मानमधिकृत्याश्रित्य वर्तमानत्वादध्यात्मम्, उच्यते=कथ्यते, अध्यात्मशब्देनाभिधीयते । तृतीयप्रश्नस्योत्तरम्, भूतभावोद्भवकरः=भूतनामानो ये भावाः जडचेतनपदार्थाः, तेषामुद्भवः उत्पादः, तं करोति यो विसर्गः=विविधसृष्टिहेतुः कामसङ्कल्पेक्षणापरपर्यायो ब्रह्मणः प्रथमो व्यापारः, यत्रेदमाम्नायते "कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा" ( ऋ० १० । १२९ । ४ ) इति। मनसः=समष्टिबुद्धेर्महत्तत्त्वस्य "महान्तमव्यमाद्यं कार्यं तन्मनः"

=( सां० १ । ७१ ) इति स्मृतेः, रेतो बीजं कारणम् , स कर्मसंज्ञितः= कर्मनामोदितः, कर्म संज्ञा संजाताऽस्येति तद्व्युत्पत्तेः, संज्ञा नाम, वाचकः शब्दः, स एव कर्मशब्देनोक्तो वेदितव्य इत्यर्थः ॥ ३ ॥

**"अधिभूतं क्षरो भावः, पुरुषश्चाधिदैवतम् ।**
**अधियज्ञोऽहमेवात्र, देहे देहभृतां वर !" ॥४॥**

अर्थः—क्षरो भावोऽधिभूतम् , इति चतुर्थप्रश्नस्योत्तरम् , क्षरः= विनश्वरो भावः=यावान् पदार्थः, स सर्वः, अधिभूतं=भूतानि प्राणिनोऽधिकृत्य तदुपभोग्यत्वेन वर्तमानत्वादधिभूतशब्दवाच्योऽधिभूतशब्देन कथितो विज्ञातव्यः, पुरुषश्चाधिदैवतम्, इति पञ्चमप्रश्नस्योत्तरम्, च= पुनः, पुरुषः=पुरिशयो देहस्थो जीवात्मा क्षेत्रज्ञः, अधिदैवतम्=स्वार्थे ताद्धितोऽण् , ततस्तल् , देवाः इन्द्रियाणि बाह्यान्तःकरणानि, तानधिकृत्य तत्स्वामित्वेन वर्तमानत्वाद् अधिदैवतशब्दवाच्यः, अधिदैवशब्देनाभिहितो वेदितव्यः । अथ षष्ठप्रश्नस्योत्तरम्-देहभृतां वर=हे देहधारिणां शरीरिणां वरणीय!, हे मनुष्याणां श्रेष्ठ! अत्र=इह लोके, देहे=अस्मिन् देहे शरीरे, अहमेव=अहमीश्वर एव, नान्यः, इत्यवधारणार्थः, अधियज्ञः=यज्ञान् दर्शपूर्णमासज्योतिष्टोमप्रभृतीन् अधिकृत्य तदध्यक्षत्वेन तत्फलदातृत्वेन च वर्तमानत्वादधियज्ञशब्दवाच्योऽधियज्ञशब्दाभिधेयोऽस्मीत्यर्थः ॥ ४ ॥

अथ सप्तमप्रश्नस्योत्तरमाह—

**"अन्तकाले च मामेव, स्मरन् मुक्त्वा कलेवरम् ।**
**यः प्रयाति स मद्भावं, याति नाऽस्त्यत्र संशयः" ॥५॥**

अर्थः—अन्तकाले च=कालान्तरवदन्तकालेऽपि, मामेव=मामीश्वरमेव, नान्यं कञ्चिदित्यवधारणार्थः, स्मरन्=चिन्तयन्, स्मृतिपथमारोहयन्, यः=यो मनुष्यः, कलेवरम्=उपात्तं देहं, गृहीतं शरीरं, मुक्त्वा= त्यक्त्वा, प्रयाति=प्रैति, सः=असौ मनुष्यः, मद्भावम्=ममेश्वरस्य भावं ब्रह्मभावं, ब्रह्मरूपतामीश्वरस्वरूपतां, याति=गच्छति, मामीश्वरं प्राप्नोति, अत्र=अस्मिन्नर्थे "अन्तकले मामीश्वरं स्मरन् मद्भावं याति" इत्यस्मिन्नर्थे, संशयः=सन्देहो, नास्ति=न विद्यते, निश्चितमेतदित्यर्थः ॥ ५ ॥

अथान्तकाले भगवन्तं स्मरतो मनुष्यस्य भगवद्भावापत्तिवदन्यं स्मरतोऽन्यभावापत्तिमाह—

"यं यं वाऽपि स्मरन् भावं, त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय ! सदा तद्भावभावितः" ॥६॥

अर्थः—कौन्तेय = हे कुन्तीपुत्र ! अन्ते=अन्तकाले, यं यं वाऽपि=यं यं चापि, भावं = पदार्थं, निकृष्टमुत्कृष्टं वा, कञ्चिदर्थं, स्मरन्=अधीयन्, चिन्तयन्, कलेवरम्=उपात्तं देहं, गृहीतं शरीरं, त्यजति=जहाति मनुष्यः, तं तमेव=अमुममुं स्मर्यमाणं भावमेव, नान्यमित्यवधारणार्थः, एति=प्राप्नोति, यत्कारणं, स सदा=नित्यं, तद्भावभावितः=तस्य तस्य भावस्य पदार्थस्य भावेन भावनेन चिन्तनेन स्मरणेन भावितः संजातभावनः, भावो भावना वासना संस्कार इत्यनर्थान्तरम्, तत्तत्पदार्थस्य चिन्तनेन मुहुर्मुहुः स्मरणेन तत्संस्कारसंस्कृतचित्तः, तद्वासनावासितान्तःकरणः, अन्तकाले प्रयाणसमये, तंतं भावं स्मरन् तंतमेव भावं प्राप्नोतीत्यर्थः ॥६॥

अथान्तकालस्मरणस्य फलमभिधायार्जुनमुपदिशति —

"तस्मात् सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः" ॥७॥

अर्थः—तस्मात्=यस्मान्नित्यस्मरणमन्तकालस्मृतिहेतुस्तस्मात्, सर्वेषु कालेषु=आहारविहारशयनासनादिषु सर्वासु वेलासु, सर्वास्ववस्थासु च, माम्=ईश्वरं मामनुस्मर=अनुचिन्तय, च=तथा, मय्यर्पितमनोबुद्धिः=मयीश्वरेऽर्पिते समर्पिते सङ्कल्पाध्यवसायलक्षणे मनोबुद्धी येन, स तथा, तवैव मनस्तवैव बुद्धिरित्येवं मयि न्यस्तमनोबुद्धिः, सर्वेषु शरीरेन्द्रियकर्मसु मनोबुद्धिव्यापारेणाहंममाभिमानेन विरहितो भवन्, युध्य = युध्यस्व, स्ववर्णोचितं कर्म विधत्स्व, कुरुष्व, मामेव=मामनुस्मरन्, मय्यर्पितमनोबुद्धितया तद्व्यापारयोरहंममाभिमानयोः सम्बन्धाभावात् निरहङ्कारो निरभिमानो भूत्वा, स्ववर्णोचितं कर्म कुर्वाणो मामीश्वरमेव नान्यमित्यवधारणार्थः, एष्यसि=गमिष्यसि, प्राप्स्यसि, असंशयः = नास्त्यत्र संशयः सन्देहः, इत्यर्थः ॥७॥

किं बहुना—

"अभ्यासयोगयुक्तेन, चेतसा नान्यगामिना ।
परमं पुरुषं दिव्यं, याति पार्थानुचिन्तयन्" ॥८॥

अर्थः—पार्थ=हे पृथापुत्र!, अभ्यासयोगयुक्तेन=पौनःपुन्येन स्मरणमभ्यासः, स एव योगः, तेन युक्तेन संयुक्तेन,समाहितेनैकाग्रेण, नान्यगामिना=नान्यमर्थं विषयं गन्तुं शीलमस्य, तेन नान्यविषयेण, चेतसा=चित्तेन,मनसा, दिव्यम्=दिविभवम्,अलौकिकं,सर्वप्रपञ्चातीतं, परमं=सर्वोत्कृष्टं,श्रेष्ठं,निरतिशयं,पुरुषं=क्लेशकर्मविपाकाशयैरपरामृष्टं सर्वत्र परिपूर्णं पुरुषविशेषमीश्वरम्,अनुचिन्तयन्=प्रयाणकाले मरणकालेऽनुस्मरन् याति=प्राप्नोतीत्यर्थः ॥ ८ ॥

अथोक्तमेवार्थं विशदयति द्वाभ्याम्—

"कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसःपरस्तात्"९

अर्थः—कविं=क्रान्तदर्शिनं,सर्वज्ञं,पुराणं=पुरातनं, सर्वस्मात्पूर्वम्, अनादिमिति यावत्,अनुशासितारं=सर्वस्य चराचरस्य जगतः प्रशासितारं, नियन्तारम्,अणोः=सूक्ष्मादाकाशादेरणीयांसं=सूक्ष्मतरम्,अतिशयेन सूक्ष्मं, सर्वस्य=विश्वस्य चराचरात्मकस्य जगतो धातारं=विधातारं, स्रष्टारम्,अचिन्त्यरूपं=न चिन्तयितुं शक्यं मनसा चेतसा रूपं स्वरूपं यस्य,तं वाङ्मनसागोचरस्वरूपम,आदित्यवर्णम्=आदित्यस्यादितिपुत्रस्य सूर्यस्येव वर्णस्तेजोलक्षणं रूपं यस्य,तम् आदित्यवत् तेजःस्वरूपं, तमसः= तेजोहीनात् प्रकृत्याख्यादव्यक्तात् परस्तात्=परम् "अव्यक्तात् पुरुषः परः" (कठो० ३।११)इत्यादिश्रुतिसिद्धं,यः=यो मनुष्योऽनुस्मरेत्= अनुदिनं चिन्तयेदधीयादित्यर्थः ॥ ९ ॥

अथ कदा कथमित्यपेक्षायामाह—

"प्रयाणकाले मनसाऽचलेन, भक्त्या युक्तो योगबलेन चैव । भ्रुवोर्मध्ये प्राणमावेश्य सम्यक्, स तं परं पुरुषमुपैति दिव्यम्" ॥१०॥

अर्थः—प्रयाणकाले=मरणकाले,अचलेन=तस्मिन् तस्मिन् विषये गमनं चलनं, तद्वर्जितेन निश्चलेनैकाग्रेण, मनसा=चेतसा, भक्त्या=भक्तिरीश्वरविषयं परमं प्रेम,तया भक्त्या युक्तः समन्वितः,च=तथा,योगबलेन=चित्तैकाग्र्यहेतुः समाधियोगः,तस्य बलं पुनःपुनरभ्यासजनितसंस्कारातिशयः, तेन, एव=निश्चयेन युक्तः संयुक्तः समुपेतः,प्राणं=प्राणवायुं, भ्रुवोः=उभयोर्भ्रुवोर्मध्ये=अन्तरे, नासामूले, कूर्चे,सम्यक्=समीचीनतया, उत्तमप्रकारेण सुषुम्णामार्गेणावेश्य=प्रवेश्य संस्थाप्य, योऽनुस्मरेत्,सः=असौ,तं दिव्यं=दिविभवं,न लोके भवम्-अलौकिकं,परं=सर्वोत्कृष्टं पुरुषं=पुरुषविशेषमीश्वरमुपैति=प्राप्नोतीत्यर्थः ॥१०॥

अथान्तवेलायां केवलस्येश्वरस्मरणस्य परपुरुषप्राप्तिरूपं यत् फलमुक्तं, तदेव प्रणवोच्चारणपूर्वकस्येश्वरस्मरणस्य फलं वक्तुं प्रतिजानीते—

"यदक्षरं वेदविदो वदन्ति, विशन्ति यद् यतयो वीतरागाः । यमिच्छन्तो ब्रह्मचर्य्यं चरन्ति, तत् ते पदं सङ्ग्रहेण प्रवक्ष्ये" ॥११॥

अर्थः—यदक्षरं=न क्षरति,न विनश्यतीति व्युत्पत्तेरक्षरम् अविनाशि यत् पदं "तद् विष्णोः परमं पदं, सदा पश्यन्ति सूरयः" (ऋ०१।२२।२०) इत्यादिमन्त्रोदितं विष्णोर्व्यापकस्य ब्रह्मणः परमं पदं, प्राप्तव्यं परमं स्वरूपं,वेदविदः=वेदस्य वेत्तारः "ऋचो अक्षरे परमे व्योमन्" ( ऋ० १ । १६४ । ३९ ) इत्यादिवेदस्य हिन्दुधर्मपुस्तकस्य भगवतः ऋग्वेदस्य ज्ञातारो बोद्धारो,वदन्ति="अथ परा, यया तदक्षरमाधिगम्यते" ( मुण्डको० १ । १ । ५ ) "एतद् वै तदक्षरं गार्गि! ब्राह्मणाः अभिवदन्ति" ( बृ० उ० ३ । ८ । ८ ) इत्यादिश्रुतिवाक्यैः कथयन्ति, यत्=यत् पदं,वीतरागाः=विगतफलकामाः निःस्पृहाः,यतयः=यत्नशीलाः कर्तव्यबुद्ध्या कर्मणामनुष्ठातारः कर्मयोगिनो, विशन्ति=प्रविशन्ति, सरिदिव समुद्रं प्राप्नुवन्ति । यद्=यत्पदम्,इच्छन्तः=प्राप्तुमिच्छन्तो, ब्रह्मचर्य्यं=ब्रह्मचर्य्याख्यं व्रतं,चरन्ति=गुरौ अनुतिष्ठन्ति, तत्=अदः, पदं=पदनीयं प्रापणीयं ब्रह्मणो विष्णोः परमं स्वरूपं,ते=तुभ्यं,सङ्ग्रहेण=

संक्षेपेण, प्रवक्ष्ये = प्रवक्ष्यामि, वचने प्रकर्षः प्राप्त्युपायोक्तिः, तत्पुरस्सरं कथयिष्यामीत्यर्थः ॥ ११ ॥

अथ प्रतिज्ञातमर्थमाह द्वाभ्याम्—

"सर्वद्वाराणि संयम्य, मनो हृदि निरुध्य च।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम्" ॥१२॥

अर्थः—सर्वद्वाराणि=सर्वाणि सकलानि विषयोपलब्धौ द्वाराणि श्रोत्रादीनीन्द्रियाणि, संयम्य=निगृह्य, स्वस्वविषयेभ्यः शब्दस्पर्शादिभ्यः प्रत्याहृत्य, संयमनं निग्रहणं प्रत्याहरणम्, च = तथा, मनः=चित्तम्, अन्तःकरणं, हृदि = हृदयप्रदेशे निरुध्य=निर्व्यापारमापाद्य, एकाग्रं कृत्वा बाह्यविषयस्मरणमविधाय, अकृत्वा, आत्मनः=स्वस्य प्राणं=क्रियाद्वारं प्राणवायुं मूर्ध्नि=भ्रुवोर्मध्ये, आधाय=आरोप्य, संस्थाप्य, योगधारणां= हृदि मनोनिरोधो योगः, तस्य धारणा स्थैर्यं, स्थिरता, तां स्थैर्यलक्षणां योगधारणाम्, आस्थितः=आश्रितः अभ्युपगतः सन् ॥१२॥

"ओमित्येकाक्षरं ब्रह्म, व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं, स याति परमां गतिम्" ॥१३॥

अर्थः—ओमित्येकाक्षरम्=एकं च तदक्षरं च, एकाक्षरम्, एकवर्णात्मकम्, ओमित्येवंरूपं, ब्रह्म=ब्रह्मनामत्वात् "तस्य वाचकः प्रणवः" (यो० १ । २८) इति स्मृतेरीश्वरसंज्ञाशब्दत्वाद् ब्रह्म, ब्रह्मणोऽकालमूर्तेरीश्वरस्याभिधानभूतमोङ्कारं, व्याहरन्=उच्चारयन्, मां=तदभिधेयभूतं, तद्वाच्यं मामीश्वरम्, अनुस्मरन्=अनुचिन्तयन्, अधीयन्, यः=यो मनुष्यः, देहम् = उपात्तमिमं कायं, त्यजन् = परित्यजन्, प्रयाति = प्रैति, म्रियते, सः = असौ मनुष्यः, परमां गतिं=परमं गन्तव्यं, विष्णोरीश्वरस्य परमं पदं स्वरूपं, याति=गच्छति, प्राप्नोतीत्यर्थः ॥ १३ ॥

ननु सुलभः कश्चिदीश्वरप्राप्त्युपायो वक्तव्यः, कृतमनेन कठिनेन बह्वायाससाध्येनोपायद्वयेन ? तत्राह—

अनन्यचेताः सततं, यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ! नित्ययुक्तस्य योगिनः" ॥१४॥

अर्थः--पार्थ = हे पृथापुत्र ! यः = यो मनुष्यः, अनन्यचेताः = न विद्यतेऽन्यस्मिन्नर्थे विषये चेतो यस्य, स मदेकचित्तः ईश्वरनिष्ठः, सर्वेषु भूतेष्वेकब्रह्मदर्शी, सततं = निरन्तरं, नित्यशः = नित्यं सर्वदाऽहर्निशं, माम् = ईश्वरं मां स्मरति = परमेण प्रेम्णाऽध्येति, चिन्तयति, भजति, मदेकान्तभक्त इति यावत्, तस्य = अमुष्य, नित्ययुक्तस्य = सदासमाहितचित्तस्य योगिनः = कर्मयोगिनः, सुलभः = सुखेनानायासेन लभ्यः, सर्वेषु कालेषु सुप्राप्योऽहम् = ईश्वरोऽहमित्यर्थः ॥ १४ ॥

ननु तव लाभे किं स्यात् ? तत्राह—

"मामुपेत्य पुनर्जन्म, दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः, संसिद्धिं परमां गताः" ॥१५॥

अर्थः—महात्मानः = महानुभावाः, सर्वदा सर्वत्र ब्रह्मदृष्टयो मद्भक्ताः कर्मयोगिनो, माम् = ईश्वरं माम्, उपेत्य = उपगत्य, प्रपद्य, परमां = प्रकृष्टां सर्वोत्कृष्टां, संसिद्धिं = मुक्तिमुभयीं, गताः = प्राप्ताः दुःखालयं = जरामरणादिदुःखागारम्, अशाश्वतं = न शश्वद्भवम्, अनवस्थितं, पुनर्जन्म = द्वितीयवारं जन्म, अभिनवदेहेन्द्रियादिसम्बन्धं, पुनरावृत्तिं, नाप्नुवन्ति = न प्राप्नुवन्तीत्यर्थः ॥ १५ ॥

अथ ब्रह्मलोकान्तेषु सर्वेषु लोकेषु पुनरावृत्तिं कथयन्नुक्तमेवार्थं निश्चाययति—

"आ ब्रह्मभुवनाल्लोकाः, पुनरावर्तिनोऽर्जुन ! ।
मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते" ॥१६॥

अर्थः-अर्जुन-हे अर्जुन! आ ब्रह्मभुवनात्=अभिविधावाकारः, भुवनं लोकः, भवन्ति भूतानि यस्मिन्निति तद्व्युत्पत्तेः, ब्रह्मणो हिरण्यगर्भस्य महत्तत्त्वोपाधेः परमेष्ठिनो लोकः, तमारभ्य, तमभिव्याप्य, लोकाः = भूलोकान्ताः सर्वे लोकाः, पुनरावर्तिनः = पुनरावर्तनशीलाः, पुनरावृत्तिः पुनर्जन्म, तत्स्वभावाः । कौन्तेय = हे कुन्तीपुत्र ! माम् = ईश्वरं माम्, उपेत्य तु = उपगम्य च, प्राप्य च, पुनर्जन्म = पुनरुत्पत्तिः पुनरावृत्तिर्न विद्यते = न भवतीत्यर्थः ॥१६॥

अथ ब्रह्मलोकपर्यन्तानां सर्वेषां लोकानां पुनरावर्तित्वे हेतुं कालपरिच्छेदं दर्शयितुमनाः ब्रह्मणोऽहोरात्रस्य परिमाणमाह—

**"सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।**
**रात्रियुगसहस्रान्तां, तेऽहोरात्रविदो जनाः" ॥१७॥**

अर्थः - ते=अमी प्रसिद्धाः, अहोरात्रविदः=मनुष्यादिब्रह्मान्तानां प्राणिनामहोरात्रस्याहोरात्रपरिमाणस्य वेत्तारो,ज्ञातारो,जनाः=मनुष्याः ज्योतिर्विदः, ज्यौतिषिकाः, ब्रह्मणः=ब्रह्मलोकस्वामिनो हिरण्यगर्भस्य, यदहः=यद् दिनं, तत्,सहस्रयुगपर्यन्तं=युगानि चतुर्युगानि,सहस्रं च चतुर्युगाणि च,तत्पर्यन्तं, तत्पर्यवसानं,चतुर्युगसहस्रपरिमाणं,या तस्य रात्रिस्तां रात्रिं=निशां, युगसहस्रपर्यन्तां=चतुर्युगसहस्रपरिमाणां विदुः=विदन्ति जानन्तीत्यर्थः ।

मनुष्याणां यः संवत्सरः,स देवानाहोरात्रः। तत्रोत्तरायणं दिनं, दक्षिणायनं रात्रिः। तादृशैरहोरात्रैः पक्षमासादिगणनया द्वादशभिर्वर्षसहस्रैश्चतुर्युगसहस्रं भवति,चतुर्युगसहस्रं च ब्रह्मणःपरमेष्ठिनो दिनं,तावत्परिमाणैव रात्रिः। तादृशैश्चाहोरात्रैःपक्षमासादिगणनया वर्षशतं ब्रह्मणः परमायुः, एवं वर्षशतान्तेन कालेन परिच्छिन्नस्य तस्य, विनाशावश्यम्भावात् तल्लोकं गतानामपि विनाशसम्भवात्,पुनरावृत्तिर्युज्यते तराम्। यदा हि ब्रह्मलोकं गतानां पुनरावृत्तिर्बोभवीति, तदा ततोऽधस्तनेषु लोकेषु वसतां पुनरावृत्तेः का कथेति युक्तमुच्यते "ब्रह्मलोकेन सहिताः सर्वे लोकाः पुनरावर्तिनः" इति ॥ १७ ॥

अथ ब्रह्मलोकाधिपतेर्ब्रह्मणो योऽहोरात्रः, तत्र यद् यद् भवति, तदाह—

**"अव्यक्ताद् व्यक्तयः सर्वाः, प्रभवन्त्यहरागमे ।**
**रात्र्यागमे प्रलीयन्ते, तत्रैवाव्यक्तसंज्ञके" ॥१८॥**

अर्थ—अहरागमे=अन्हो ब्रह्मदिवसस्यागमनमागमः, तस्मिन्, ब्रह्मदिवसारम्भे,सर्वाः=निखिलाः,व्यक्तयः=भोक्तृभोग्यलक्षणाः आकृतयः, व्यज्यन्तेऽभिव्यज्यन्ते,इति तद्व्युत्पत्तेश्चेतनाचेतनात्मिकाः सर्वाः मूर्त्तयः, अव्यक्तात्=व्यक्तं कार्यं,ततो भिन्नमव्यक्तं कारणं त्रिगुणा प्रकृतिः,तस्मात् प्रकृत्याख्यात्कारणात्, प्रभवन्ति=प्रादुर्भवन्ति, प्रादुर्भावोऽभिव्यक्तिः, अभिव्यक्तीभवन्ति, रात्र्यागमे=निद्रागमने,तदारम्भे, तत्रैव=तस्मिन्ने-

वाव्यक्तसंज्ञके=अव्यक्ताख्ये तस्मिन् कारणे प्रकृतौ, प्रलीयन्ते=प्रलयं गच्छन्ति, तिरोभवन्तीत्यर्थः ॥१८॥

अथ जडचेतनभूतव्यक्तीनां प्रभवप्रलययोः प्रवाहेणानादित्वं वक्तुकामो बीजाङ्कुरवदनिशमनुवर्तमानत्वमाह—

"भूतग्रामः स एवायं, भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ !, प्रभवत्यहरागमे" ॥१९॥

अर्थः—पार्थ=हे पृथापुत्र ! स एव=यो ब्रह्मणो हिरण्यगर्भस्य पूर्वस्मिन् दिवसेऽवर्तिष्ट, स एव, नान्य इत्यवधारणार्थः, अयम्=एष, भूतग्रामः=भूतानां भोक्तृभोग्यरूपाणां ग्रामः समुदायः, भोक्तृभोग्य-लक्षणो भूतसमूहः, भूत्वा भूत्वा=प्रादुर्भूय प्रादुर्भूय, पुना रात्र्यागमे=रात्र्यागमने, निद्रारम्भे, प्रलीयते=प्रलयं गच्छति, तिरोभवति, अहरा-गमे=ब्रह्मणोऽह्नो दिवसस्यागमे, दिनोद्गमे, दिनारम्भे चावशः=न वशो न स्वतन्त्रो, न स्वाधीनः, पराधीनः, कर्माधीनः, प्रभवति=प्रादुर्भवति, आविर्भवतीत्यर्थः ॥ १९ ॥

अथ भोक्तृभोग्यलक्षणानां सर्वेषां भूतानामभिव्यक्तिप्रलययोराश्रयात् प्रकृत्याख्यादव्यक्तात् परं, तस्याप्यभिव्यक्तिप्रलययोराश्रयभूतमन्य-मव्यक्तमीश्वरमाह—

"परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः ।
यः स सर्वेषु भूतेषु, नश्यत्सु न विनश्यति" ॥२०॥

अर्थः—तस्मात्=अमुष्मात् पूर्वोक्तात्, तु=पुनरव्यक्तात्=प्रकृत्याख्यादव्यक्तात्, परः=प्रकृष्टः श्रेष्ठो योऽन्यः=इतरः, सनातनः=चिरन्तनोऽनादिः, अव्यक्तः=प्रकृतिनाम्नोऽव्यक्तस्याप्यभिव्यक्तिकारणत्वा-दतिशयेनाव्यक्तः, प्रमाणमात्रस्यागोचरः, प्रत्यक्षादिसर्वप्रमाणाविषयः, भावः=अक्षराख्यः पदार्थः, सः=असौ, सर्वेषु=समस्तेषु भूतेषु=जड-चेतनेषु भोक्तृभोग्यलक्षणेषु, नश्यत्सु = विनश्यत्सु तिरोभवत्सु, प्रादुर्भवत्सु च, न विनश्यति=न तिरोभवति न प्रादुर्भवति । यथाह्य-व्यक्तमव्यक्तकार्यं च सर्वं तिरोभवति, प्रादुर्भवति च, न तथाऽयं केनापि प्रकारेण स्वरूपेण वा, धर्मेण वा, तिरोभवति प्रादुर्भवति चेत्यर्थः ॥२०॥

अथाव्यक्तात्परो योऽव्यक्तो भावः,स एवाक्षरः,स एव परमा गतिरित्याह–

**"अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते, तद्धाम परमं मम" ॥२१॥**

अर्थः—अव्यक्तः = यः पूर्वत्राव्यक्तो भावः कथितः,स एवाक्षरः इत्युक्तः = " अक्षरं ब्रह्म परमम् " इत्यत्राक्षरः इत्यभिहितो वेदितव्यः, तं = तमेवाव्यक्तमक्षरं भावं,परमां=प्रकृष्टां गतिं = पुरुषार्थविश्रामभूमिं, गन्तव्यं प्राप्तव्यं परमं पदम्,आहुः = वेदविदःप्रब्रुवन्ति कथयन्ति "पुरुषात् न परं किञ्चित् सा काष्ठा सा परा गतिः" (कठो० ३ । ११) "एषाऽस्य परमा गतिः, एषाऽस्य परमा सम्पद् " ( बृ० उ० ४।३।३२ ) इत्यादिश्रुतिवचोभिः । यं = यमव्यक्तमक्षरं भावं, प्राप्य=प्रगत्य, न निवर्तन्ते = न पुनरावर्तन्ते, न पुनः संसारे पनीपत्यन्ते, तद् = विधेयापेक्षया नपुंसकम्,स एवाव्यक्तोऽक्षरो भावो,मम = ईश्वरस्य मम,परमम्= उत्तमम् उत्कृष्टतरं,धाम=गृहं, स्वरूपम्। मम धामेति षष्ठी राहोः शिरः, आत्मनश्चैतन्यमित्यादिवदौपचारिकी विकल्पमात्रम्, अहमेवाव्यक्तोऽक्षरो भावः, अहमेव परमा गतिः,मामेव प्राप्य न निवर्तन्ते, इत्यर्थः ॥२१॥

ननु श्रुतिषु पुरुषः परा गतिः श्रूयते,नाव्यक्तोऽक्षरो भावः?,तत्राह—

**"पुरुषः स परः पार्थ !, भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि, येन सर्वमिदं ततम्" ॥२२॥**

अर्थः - पार्थ = हे पृथापुत्र ! सः=योऽव्यक्तोऽक्षरो भावः,स एव परः=प्रकृत्याख्यादव्यक्तात् परःप्रकृष्टः श्रेष्ठः,उत्तमः, पुरुषः=पुरि शरीरे ब्रह्माण्डाख्ये शयनात् वर्तनात् पुरुषः सर्वान्तरात्मा ईश्वरः, तु = स च, अनन्यया = न विद्यतेऽन्यो भक्तव्यो यस्यां भक्तौ,साऽनन्या,तयाऽनन्यया, अव्यभिचारिण्या,भक्त्या=परमप्रेमरूपया भक्त्या,लभ्यः=प्राप्यः। यस्य= अव्यक्ताक्षरस्य भावस्य पुरुषस्य परमकारणस्येश्वरस्य यस्यान्तःस्थानि= मध्यस्थानि, कार्याणां कारणान्तर्वर्तित्वनियमाद् अन्तर्वर्तीनि, कारणात् पृथक्स्थितिप्रवृत्त्यनर्हाणि, भूतानि=भोक्तृभोग्यलक्षणानि कार्यभूतानि सर्वाणि भूतानि, येन=परेणाक्षरेण पुरुषेण येन,इदम्=एतत्, सर्वं=विश्वं

जगत्, ततं=विस्तारितं, व्यञ्जितं, व्यक्ततां नीतम्, उदपादीत्यर्थः ॥२२॥
अथानावृत्तौ पुनरावृत्तौ च मरणकालोऽपि कारणमिति प्रचलितां लोकदृष्टिमाद्रियमाणस्तं वक्तुं प्रतिजानीते—

**"यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।**
**प्रयाताः यान्ति तं कालं, वक्ष्यामि भरतर्षभ!" ॥२३॥**

अर्थः—तुना लोकदृष्टेरेषोऽनुवादो नात्ममतमिति द्योत्यते, कर्मयोगमार्गे, मरणे कालविशेषस्याकिञ्चित्करत्वात् । भरतर्षभ=हे भरतकुलश्रेष्ठ! यत्र=यस्मिन्, काले=समये, प्रयाताः=प्रकर्षेण याताः गताः, मरणं प्राप्ताः, योगिनः=कर्महीनाः ज्ञानयोगिनः, योगिनः=ज्ञानहीनाः कर्मयोगिनश्च, द्विरावृत्तिरावृत्त्यनावृत्तिभ्यां योगिनामन्वयार्थम्, अन्यथाऽन्वयानुपपत्तेः, ब्रह्मविदां योगिनामावृत्तेरनभ्युपगमात् । अनावृत्तिम्=अपुनरावृत्तिं, च=तथाऽऽवृत्तिं=पुनरावृत्तिम्, एव=निश्चयेन, यान्ति=यन्ति, गच्छन्ति, प्राप्नुवन्ति, कर्महीनज्ञानयोगिनोऽपुनरावृत्तिं, ज्ञानहीनकर्मयोगिनश्च पुनरावृत्तिं प्राप्नुवन्ति, तं कालं=समयं, वक्ष्यामि=कथयिष्यामीत्यर्थः२३
अथ प्रतिज्ञातयोरपुनरावृत्तिपुनरावृत्तिकालयोरपुनरावृत्तिकालमाह—

**"अग्निर्ज्योतिरहः शुक्लः, षण्मासाः उत्तरायणम् ।**
**तत्र प्रयाताः गच्छन्ति, ब्रह्म ब्रह्मविदो जनाः" ॥२४॥**

अर्थः—अग्निः=अग्निकालः, अग्न्युद्बोधकालः, प्रातःकालः, ज्योतिः= उदयं प्राप्तो गतो ज्योतिः सूर्यः, तत्कालः, सूर्योदयकालः, अहः=दिनं, शुक्लः=शुक्लपक्षः, उत्तरायणं=सूर्यस्योत्तरतो गतिरूपं, षण्मासाः= माघादिमासषट्कम् । तत्र=तेषु कालेषु, तेषामन्यतमे काले, प्रयाताः=प्रकर्षेण याताः गताः मृताः, ब्रह्मविदः=ब्रह्मवेत्तारः कर्महीनाः कर्मसंन्यासिनो ज्ञानयोगिनो, ब्रह्मज्ञानिनो, जनाः=मनुष्याः, ब्रह्म=ब्रह्मलोकं, परं ब्रह्म, गच्छन्ति=प्राप्नुवन्ति, तेषां न पुनरावृत्तिरित्यर्थः ॥२४॥
अथ पुनरावृत्तिकालमाह—

**"धूमो रात्रिस्तथा कृष्णः, षण्मासाः दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते" ॥२५॥**

अर्थः—धूमः=धूमकालः, सायं कालः, रात्रिः=रजनी, नक्तं, तथा कृष्णः=कृष्णपक्षः, दक्षिणायनं=सूर्यस्य दक्षिणतो गतिरूपं,षण्मासाः= श्रावणादिमासषट्कम् । तत्र=तेषु कालेषु, तेषामन्यतमे काले, प्रयातो योगी=ज्ञानहीनः कर्मयोगी,स्वर्गादिफलमुद्दिश्य कर्मकरो जनो मनुष्यः, चान्द्रमसं=चन्द्रमसि स्वर्गे भवं, ज्योतिः=ज्योतिरिव ज्योतिः कर्मफलं, प्राप्य = उपलभ्य, भुक्त्वा, निवर्तते=पुनरावर्तते, इत्यर्थः ॥२५॥

अथोक्तमर्थं निगमयति—

"शुक्लकृष्णे गती ह्येते, जगतः शाश्वते मते ।
एकया यात्यनावृत्तिम्, अन्ययाऽऽवर्तते पुनः" ॥२६॥

अर्थः—हि=निश्चयेन, एते=इमे प्रागुक्ते, शुक्लकृष्णे=प्रकाशान्धकारात्मिके, गती=सरणी, पद्धती, जगतः=जंगमस्य ज्ञानिजनस्य कर्मिजनस्य च निखिलस्य लोकस्य,शाश्वते=शश्वद्भवे,अनादिकालिके, मते=लोकसंमते।तयोरेकया=प्रथमया शुक्लया गत्या सरण्याऽनावृत्तिम्= अपुनरावृत्तिं,याति=गच्छति,प्राप्नोति,अन्यया=द्वितीयया कृष्णया गत्या, पुनरावर्तते=पुनरावृत्तिं याति, गच्छति, प्राप्नोतीत्यर्थः ॥२६॥

अथ द्विविधगत्युक्तेः प्रयोजनमाह—

"नैते सृती पार्थ ! जानन्, योगी मुह्यति कश्चन ।
तस्मात् सर्वेषु कालेषु, योगयुक्तो भवार्जुन !" ॥२७॥

अर्थः—पार्थ=हे पृथापुत्र ! एते=इमे पूर्वोक्ते, सृती=अनावृत्त्यावृत्तिफले शुक्लकृष्णे गती,जानन्=स्वरूपतः फलतो विदन्, प्रजानन्, कश्चन=कोऽपि,योगी=कर्मयोगी,न मुह्यति=न विपर्यस्यति, न विवेकं त्यजति, केवलं ज्ञानं, कर्म वा केवलं, नोपादेयत्वेन प्रत्येति, कर्मयोगान्न भ्रश्यति,योगभ्रष्टो न भवति,तस्मात्=यस्मादेते द्विविधे सृती प्रजानन् कोऽपि कर्मयोगी योगभ्रंशकरं मोहं न प्राप्नोति, तस्मादर्जुन=हे अर्जुन ! त्वमपि मोहं परित्यज्य, सर्वेषु कालेषु=यावज्जीवं सर्वास्ववस्थासु, योगयुक्तः=कर्मयोगयुक्तः, भव=एधीत्यर्थः ॥२७॥

अथार्जुनस्य कर्मयोगे श्रद्धातिशयसम्पत्त्यर्थं तन्माहात्म्यं श्रावयन्न-ध्यायमुपसंहरति—

"वेदेषु यज्ञेषु तपस्सु चैव, दानेषु यत् पुण्यफलं प्रदिष्टम्। अत्येति तत् सर्वमिदं विदित्वा, योगी परं स्थानमुपैति चाद्यम्" ॥२८॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽक्षरब्रह्मयोगो नामाष्टमोऽध्यायः ॥८॥

अर्थः—वेदेषु = सम्यगधीतेषु पठितेषु वेदेषु "अग्निमीडे पुरोहितम्" इत्यादिषु वेदमन्त्रेषु, दर्भपवित्रपाणिप्राङ्मुखत्वादिसाहित्यं वेदाध्ययने सम्यक्त्वम्, यज्ञेषु = श्रद्धयाऽङ्गोपाङ्गसाहित्येन साद्गुण्येनानुष्ठितेषु दर्शपूर्णमासचातुर्मास्यज्योतिष्टोमादिनामकेषु क्रतुषु, च = तथा, तपःसु = यथाविधि सुतप्तेषु तपस्सु, एव = निश्चयेन, दानेषु = शास्त्रविहितेषु सत्पात्रदानेषु, यत् पुण्यफलं = पुण्यप्रभवं स्वर्गादिफलं, प्रदिष्टं = निर्दिष्टं, शास्त्रेऽभिहितं, कथितम्। तत् = अदः, सर्वं = समस्तं पुण्यफलम्, इदं विदित्वा = सर्वमिदं फलं गतिमत्, पुनरावृत्तिमदित्येतद् ज्ञात्वा, मत्वा, अत्येति = अतिक्रामति, नितान्तमल्पं तुच्छमिदं सर्वं फलमिति बुद्ध्वा, न जातु फलकामनया किमपि कर्मानुतिष्ठति, निर्वर्तयति, यावदायुः कर्तव्य-बुद्ध्याऽनुतिष्ठन् निर्वर्तयन् च कर्मजातं, योगी = कर्मयोगी, परं = प्रकृष्टं, स्थानं = सर्वभूतनिवासस्थानम्, आद्यम् = आदौ भवं, सर्वस्य जगतः कारणं परं ब्रह्म परमात्मानम्, उपैति = परिसमाप्ते प्रारब्धकर्मण्युपगच्छति, प्राप्नोति, मुच्यते, इत्यर्थः ॥२८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्र-निष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्येऽष्टमोऽध्यायः ॥८॥

———

## "अथ नवमोऽध्यायः" ।

अष्टमाध्याये प्रथमप्रश्नस्योत्तरत्वेनाभिहितस्य परमाक्षरस्य ब्रह्मणः परमेश्वरस्य, कर्मयोगाङ्गभूतं ज्ञानं, विज्ञानेन सहोपदेष्टुं, नवमाध्यायमारभमाणः प्रतिशृणोति—

"श्रीभगवानुवाच"

**"इदं तु ते गुह्यतमं, प्रवक्ष्याम्यनसूयवे ।**
**ज्ञानं विज्ञानसहितं, यज्ज्ञात्वा मोक्ष्यसेऽशुभात्" ॥१॥**

अर्थ—तुशब्दः प्रागुक्ताज्ज्ञानादस्य ज्ञानस्य वैशिष्ट्यमाह, इदम्=एतद्-अग्रे वक्ष्यमाणं, गुह्यतमं=रहस्यतमं, धर्मज्ञानं गुह्यं, ततो देहादिव्यतिरिक्तात्मज्ञानं गुह्यतरं, ततोऽपि ब्रह्मज्ञानमतिरहस्यत्वाद् गुह्यतमम्, अतिशयेन गुह्यमतिगोप्यं, परमरहस्यं, गोप्यं गुह्यं रहस्यमित्यनर्थान्तरम्, ज्ञानं=ब्रह्मगोचरं ज्ञानं, विज्ञानसहितं=विविधपदार्थज्ञानेन संयुक्तम्, अनसूयवे=गुणेषु दोषदृष्टिरहिताय, ते=तुभ्यं, प्रवक्ष्यामि=प्रकर्षेण, येन ते बोधो भवेत् तेन प्रकारेण, कथयिष्यामि। यत्=यज्ज्ञानं, ज्ञात्वा=लब्ध्वा, प्राप्य, 'पाकं पचति, इत्यादिवत् सामान्यार्थविवक्षया प्रयुक्तस्यैव पुनः प्रयोगः, अशुभात्=अमङ्गलरूपात् स्ववर्णोचितकर्मणि पापबुद्धिलक्षणाद् व्यामोहाद् विपर्ययज्ञानात्, मोक्ष्यसे=मोक्षं लप्स्यसे, न पुनरवश्यकर्तव्येषु स्ववर्णोचितकर्मसु पापबुद्धिलक्षणं व्यामोहमापत्स्यसे, इत्यर्थः ॥१॥

अथार्जुनस्याभिमुख्याय वक्ष्यमाणं ज्ञानं स्तौति—

**"राजविद्या, राजगुह्यं पवित्रमिदमुत्तमम् ।**
**प्रत्यक्षावगमं, धर्म्यं सुसुखं कर्तुमव्ययम्" ॥२॥**

अर्थः—इदम्=एतद् वक्ष्यमाणं ब्रह्मविषयं ज्ञानं, राजविद्या=विद्यानां राजा, विद्या ज्ञानं, सर्वेषु ज्ञानेषु राजवदुत्कृष्टं श्रेष्ठं, राजगुह्यं=गुह्यानां रहस्यानां गोप्यानां पदार्थानां राजा, गुह्येषु रहस्येषु गोप्येषु सर्वेषु पदार्थेषु राजवदुत्कृष्टं श्रेष्ठं, पवित्रं=पावनं, सर्वेषां पापमलानां निरवशेषेण निवर्तकत्वात् परमशुद्धिकारणम्, उत्तमम्=उच्चतमविषयत्वादुच्चतमं, प्रत्यक्षावगमं=प्रत्यक्षोऽवगमोऽवबोधो यस्य, तत् सुखादिवदपरोक्षावबोधं, स्वानुभवसिद्धं, धर्म्यं=धर्मादनपेतं, धर्मं पुण्यम्, अनेकजन्मा-

जितपुण्यलभ्यं, सुसुखम्=अतिसुखं यथा भवति, तथा, कर्तुं=निर्वर्तयितुं सम्पादयितुं शक्यम्, अतीवसुखसम्पाद्यं, न जातु धर्मादिवद् दुःखसम्पादम्, अव्ययम्=अव्ययफलं चेत्यर्थः ॥२॥

ननु यथोक्तं ज्ञानमिदं ये मनुष्याः न श्रद्दधते, तेषां किं भवति ?, तत्राह—

**"अश्रद्दधानाः पुरुषाः, धर्मस्यास्य परंतप ! ।**
**अप्राप्य मां निवर्तन्ते, मृत्युसंसारवर्त्मनि" ॥३॥**

अर्थः—परन्तप=हे शत्रुतापन ! अस्य=एतस्य प्रतिज्ञातस्य वक्ष्यमाणस्य, धर्मस्य=ज्ञानरूपधर्मस्य, अश्रद्दधानाः=श्रद्धामकुर्वाणाः इमं धर्ममश्रद्दधन्तः, आस्तिकभावेनास्वीकुर्वन्तः, पुरुषाः=मनुष्याः, माम्=ईश्वरं मामप्राप्य=अनुपगम्य, मृत्युसंसारवर्त्मनि=मृत्युमति संसारनाम्नि वर्त्मनि पथि, निवर्तन्ते=नितरां वर्तन्ते, वरीवृत्यन्ते, मृत्युव्याप्ते संसारमार्गे परितो बम्भ्रमतीत्यर्थः ॥३॥

अथ प्रतिश्रुतं कर्मयोगाङ्गभूतंज्ञानं सह विज्ञानेनोपदेष्टुमारभते—

**"मया ततमिदं सर्वं, जगदव्यक्तमूर्तिना ।**
**मत्स्थानि सर्वभूतानि, न चाहं तेष्ववस्थितः ॥४॥**

अर्थः—अव्यक्तमूर्तिना=अव्यक्ता न व्यक्ता, इन्द्रियगोचरा, अदृश्या, मूर्तिः स्वरूपं यस्य, तेनाव्यक्तस्वरूपेणेन्द्रियागोचरेण, अदृश्यात्मना, मया=ईश्वरेण मयका, इदम्=एतत् सर्वं=कृत्स्नं जगत्=चराचरं विश्वं, ततं=विस्तारितं, व्यञ्जितं, व्यक्ततां नीतं दृश्यतामापादितम् । सर्वभूतानि=सर्वाणि व्यज्यमानानि दृश्यतामापन्नानि चराचरात्मकानि भूतानि, मत्स्थानि=मय्यवस्थितानि, मदाधाराणि, कार्यस्य कारणाधारत्वनियमात्, नहि कारणं परिहाय कार्यं क्वचित् कदाचिदवस्थातुमर्हति, च=तथाऽहम्=ईश्वरोऽहं तेषु=अमीषु व्यक्तेषु दृश्येषु सर्वेषु भूतेषु पदार्थेषु, नावस्थितः=नाधेयत्वेनावस्थितो, न तदाधारोऽवतिष्ठे, इत्यर्थः ॥४॥

नन्वसंगस्य तव "मत्स्थानि सर्वभूतानि" इत्युक्तिर्न संगच्छते ?, तत्राह—

**"नच मत्स्थानि भूतानि, पश्य मे योगमैश्वरम् ।**
**भूतभृत् न च भूतस्थो, ममात्मा भूतभावनः" ॥५॥**

अर्थः—भूतानि=सर्वाणि भूतानि चेतनाचेतनात्मकानि,न च=नैव, मत्स्थानि=मयि स्थितानि, मत्स्थानि सन्त्यपि नैव मत्स्थानि,सर्वसङ्ग-विवर्जितेऽसङ्गे मयि स्थितानि भवन्त्यपि तानि नैव मयि स्थितानि,तदेतद् मत्स्थानामपि भूतानाममत्स्थत्वं,मत्स्थत्वाभावरूपं, मे=मम, ऐश्वरम्= ईश्वरस्य मम भावमिममैश्वरं,योगम्=अयोगयोगम्,अघनघटनं,निरति-शयज्ञानक्रियाशक्तिप्रभावं, पश्य=ईक्षस्व, बुध्यस्व, न चेकमेवेमम्, अन्यमपि पश्य ममैश्वरं योगम्,भूतभृत्=भूतानां भर्ता पोषयिता 'भूतानि बिभर्ति धारयति पोषयतीति तद्व्युत्पत्तेः, तथा भूतभावनः=भूतानां भावनः उत्पादकः, भूतानि भावयति-उत्पादयतीति तद्व्युत्पत्तेः, सर्व-भूतजनकः सन्नपि, ममात्मा=ममेश्वरस्यात्मा स्वरूपं, न च भूतस्थः= अहंममाभिमानलक्षणसङ्गाभावाद् भूतेषु स्थितोऽपि नैव भूतेषु स्थितः, विकारहेतोः स्थितेरेव स्थितित्वाभ्युपगमादित्यर्थः ॥५॥

अथैतदेव लौकिकेन दृष्टान्तेनोपपादयति—

**"यथाऽऽकाशस्थितो नित्यं, वायुःसर्वत्रगो महान् ।**
**तथा सर्वाणि भूतानि, मत्स्थानीत्युपधारय" ॥६॥**

अर्थः—यथा=येन प्रकारेण, सर्वत्रगः=सर्वत्रगतिकः, सर्वत्रो-र्ध्वाधस्तिर्यग् गच्छतीति तद्व्युत्पत्तेः,महान्=परिमाणतो महान्,वायुः= वातः, नित्यं=सदाऽऽकाशस्थितः=अवकाशात्मकेऽसङ्गस्वभावे भूता-काशे व्योम्नि स्थितः, तथा=तेन प्रकारेण,सर्वाणि=सकलानि भूतानि= चराचरात्मकानि भूतानि, मत्स्थानि=मयीश्वरेऽसङ्गस्वभावे नित्यमव-स्थितानीति=एवम्, उपधारय=अवधारय, विजानीहीत्यर्थः ॥६॥

अथ सर्वेषां भूतानां स्थितिहेतुरिव सृष्टिप्रलययोर्हेतुरप्यहमेवास्मीत्याह—

**"सर्वभूतानि कौन्तेय ! प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये, पुनस्तानि, कल्पादौ विसृजाम्यहम्" ॥७॥**

अर्थः—कौन्तेय=हे कुन्तीपुत्र ! कल्पक्षये=कल्पान्ते,प्रलयकाले, सर्वभूतानि=सर्वाणि चराचरात्मकानि ब्रह्मादिस्तम्बपर्यन्तानि भूतानि, मामिकां=मदीयां, प्रकृतिं=जगत्कारणभूतां स्वधापरपर्यायां मायां, "मायां तु प्रकृतिं विद्यात्" (श्वे० उ० ४ । १०) "आनीदवातं

स्वधया तदेकम्" (ऋ० १०। १२९।२) इत्यादिमन्त्रप्रतिपाद्यां, यान्ति=प्रयान्ति, स्वं स्वं रूपं हित्वा त्यक्त्वा प्रकृतिरूपतां प्राप्नुवन्ति, प्रकृतौ लयं गच्छन्ति, तत्र तिरोभवन्ति, पुनः=पश्चात् कल्पादौ=कल्पारम्भे, सृष्टिकाले, तानि=अमूनि प्रकृतिलीनानि सर्वाणि भूतानि चेतनाचेतनात्मकानि, अहम्=ईश्वरोऽहं, विसृजामि=विविच्योत्पादयामि, कर्मविवेकपूर्वकं प्रादुर्भावयामि, यथायथमभिव्यनज्मीत्यर्थः ॥७॥

अथास्य सृष्टिप्रलयक्रमस्य प्रवाहरूपेणानादित्वमाह—

"प्रकृतिं स्वामवष्टभ्य, विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नम्, अवशं प्रकृतेर्वशात्" ॥८॥

अर्थः—स्वां=स्वीयां, प्रकृतिं=मायाम्, अवष्टभ्य=आश्रित्याधिष्ठाय, इमम्=एतं, प्रकृतेः=स्वस्वकर्मरूपायाः प्रकृतेर्वशात्=वशवर्तित्वादधीनत्वादवशम्=अस्वतन्त्रं, स्वस्वकर्मरूपप्रकृतितन्त्रं, सर्वथा कर्माधीनं, कृत्स्नं=निखिलं, भूतग्रामं=जडचेतनात्मकं भूतसमुदायं, पुनः पुनः=मुहुर्मुहुर्विसृजामि=प्रतिसृजामि, विसृजामि चेत्यर्थः ॥८॥

नन्वेवं नानाविधानि विषमाणि कर्माणि कुर्वतस्ते जीवात्मवत् कर्मबन्धः किं न स्यात्? तत्राह—

"न च मां तानि कर्माणि, निबध्नन्ति धनञ्जय!।
उदासीनवदासीनम्, असक्तं तेषु कर्मसु" ॥९॥

अर्थः—धनञ्जय=हे धनजित्। तानि=अमूनि, कर्माणि=सृष्टिस्थितिप्रलयाख्यानि नानाविधानि कर्माणि, विषमाणि निर्घृणानि भवन्त्यपि माम्=ईश्वरं मां, न निबध्नन्ति=न विसिन्वन्ति, न संस्पृशन्ति, न बन्धमापादयन्ति, न पुण्यपापोत्पत्त्या ममानिष्टकारीणि भवन्ति। तत्र हेतुगर्भं विशेषणद्वयम्-उदासीनवदासीनं=यः पुरुषो न क्वचिद् रज्यति, न वा कश्चिद् द्वेष्टि, यस्य न कस्मिँश्चिद् रागो न केन चिद् द्वेषः, स उदासीनः, उपेक्षको निष्पक्षस्तटस्थस्तेन तुल्यं सदृशमासीनं सृष्ट्यादिकर्मसु तिष्ठन्तं, रागद्वेषाभ्यां विना संनिधिमात्रेण तत्तत्कर्मनिर्वर्तकं, तथा तेषु=अमीषु, कर्मसु=सृष्ट्यादिकर्मसु, असक्तं=कर्तृत्वाभिमानः सक्तिः सङ्गः, तद्रहितम्। यो हि रागद्वेषाभ्यां कर्मसु प्रवर्तते, तेषां कर्मणां कर्तारं चात्मानम-

भिमन्यते, निःसन्देहं तं पुरुषं कर्माणि निबध्नन्ति, यस्य तु न कर्मफले रागो, न वा कर्मफले द्वेषो, न च कर्मसु कर्तृत्वाभिमानः, न तं कर्माणि कचित् कदाचित् संस्पृशन्ति, न कालत्रयेऽपि तं बन्धमापादयन्ति, सृष्ट्यादि-कर्मसु सक्तिरहितमसक्तम्, उदासीनवदासीनं च मामीश्वरं तानि कर्माणि न निबध्नन्तीति किमु वक्तव्यमित्यर्थः ॥ ९ ॥

अथैतदेवोपपादयति—

**"मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।**
**हेतुनाऽनेन कौन्तेय! जगद्‌ विपरिवर्तते" ॥१०॥**

अर्थः— कौन्तेय=हे कुन्तीपुत्र !, मया=मयकाऽव्यक्तमूर्तिना, अध्यक्षेण=अधिष्ठात्रा स्वामिना "यो अस्याध्यक्षः परमे व्योमन्" (ऋ० १० । १२९ । ७) इति मन्त्रवर्णात्, अयस्कान्तमणिकल्पेनाधि-पतिना, प्रकृतिः=अधीक्षिताऽधिष्ठिता, सन्निधिमात्रेण प्रवर्तिता माया-नाम्नी प्रकृतिः, सचराचरं=चरं जङ्गमम्, अचरं स्थावरं, तेन सहितं सर्वं जगत्, सूयते=सूते, जनयते । अनेन=एतेन मदधिष्ठितेन, हेतुना=प्रकृतिरूपेण कारणेन, जगत्=सचराचरं जगत्, विपरिवर्तते=विना विलम्बं पर्यावर्तते, परिचंक्रम्यते, पुनःपुनर्जायते च प्रलीयते चेत्यर्थः ॥ १० ॥

ननु योगमायायाः प्रकृतेरध्यक्षं सचराचरस्य जगतः सृष्ट्यादिकारण-मीश्वरं त्वां कस्मात् सर्वे मनुष्या नाद्रियन्ते ? तत्राह—

**"अवजानन्ति मां मूढाः, मानुषीं तनुमाश्रितम् ।**
**परं भावमजानन्तो मम भूतमहेश्वरम्" ॥११॥**

अर्थः—मूढाः=मूर्खाः क्षुद्रात्मानोऽविवेकिनो मनुष्याः, मम=मे, परं=प्रकृष्टं, भावम्=आत्मानं स्वरूपम्, अजानन्तः=अविदन्तो, भूत-महेश्वरं=भूतानां चेतनाचेतनानां महान्तमीश्वरं, मां=जगतः सृष्ट्यादि-हेतुं योगमायाप्रकृत्यध्यक्षं माम्, मानुषीं=मनुष्यसम्बन्धिनीं, तनुं=मूर्ति-माकृतिम्, आश्रितम्=आश्रितवन्तं, मनुष्यमित्येतत् जानन्तोऽवजानन्ति=अवमतया प्रतियन्ति, अवमानयन्ति, नाद्रियन्ते, न भजन्त इत्यर्थः ॥११॥

अथावजानतां मनुष्याणां मूढत्वे हेतुं दर्शयितुं तान् विशिनष्टि—

**"मोघाशाः मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव, प्रकृतिं मोहिनीं श्रिताः" ॥१२॥**

अर्थः—मोघाशाः=मोघाः व्यर्था निष्फलाः आशाः आशिषो वांछितवस्तुविषयाः अभिलाषाः येषां, ते निष्फलाशासनाः, नहि लोके वाञ्छितवस्तुविषया आशाः क्वचित् कदाचित् पूर्यन्ते, मोघकर्माणः= मोघानि व्यर्थानि निष्फलानि कर्माणि शास्त्रविधिमुत्सृज्य दम्भमात्रेण क्रियमाणानि यज्ञादीनिकर्माणि येषां,ते निष्फलकर्माणः, नहि मूढाना-मयथाविधि, केवलं दम्भार्थं, क्रियमाणानि यज्ञादीनि, कर्माणि क्वचित् कदाचित् पंफुल्यन्ते, मोघज्ञानाः=मोघं व्यर्थं निष्फलम् अयथार्थं ज्ञानं कर्मकर्मफलतद्दातृविषयं वेदनं येषां, ते निष्फलसर्ववेदनाः, अयथार्थ-निखिलज्ञानाः, ज्ञानस्य निजबुद्धिमात्रप्रभवात्वात् । नहि मनुष्याणां, तत्रापि मूढानां केवलबुद्धिप्रभवं किमपि ज्ञानं यथार्थं सम्बोभूयते। कुतः एतत् त्रयं ? यतस्ते विचेतसः=विगतचित्ताः, क्षुद्रात्मानोऽल्पबुद्धयः, कुत एतत् ? यतो राक्षसीं = रक्षितव्यमेभ्यः स्वमिति रक्षसः, स्वार्थेऽणि राक्षसाः क्रूरकर्माणः पापजीवनाः, तत्सम्बन्धिनीं राक्षसीं, च=तथा, आसुरीम्=असुषु प्राणेषु रताः, प्राणपोषणनिरताः उदरम्भरयः पशु-जीवनाः असुराः, तेषामिमाम्, एव=निश्चयेन, मोहनीं=मोहकरीं, विवेकज्ञाननाशिनीं,प्रकृतिं=स्वभावं,श्रिताः=आश्रिताः, यस्मादेवंभूतास्ते मूढाः, तस्मात् मामवजानन्तीत्यर्थः ॥ १२ ॥

ननु के तर्हि त्वां नावजानन्ति, प्रत्युत भजन्ति ?, तत्राह—

**"महात्मानस्तु मां पार्थ !, दैवीं प्रकृतिमाश्रिताः ।**
**भजन्त्यनन्यमनसो, ज्ञात्वा भूतादिमव्ययम्" ॥१३॥**

अर्थः—पार्थ = हे पृथापुत्र ! महात्मानस्तु=विचेतसो मूढा-स्तु ना व्यवच्छिद्यन्ते,ये महात्मानोऽक्षुद्रचेतसो विशालबुद्धयस्ते, दैवीं= देवानां देवभक्तानां ज्ञानिनां कर्मयोगितामिमां प्रकृतिम्=अभयशम-दमदयाशान्त्यादिलक्षणं स्वभावम्,आश्रिताः=अधिष्ठिताः,अभ्युपगताः, माम्=ईश्वरं मां, भूतादिं=भूतानां जडचेतनानां सर्वेषामादिं कारणम्,

अव्ययम्=व्ययरहितम्, अविनाशिनं, ज्ञात्वा=विदित्वाऽनन्यमनसः=नास्ति, मद्व्यतिरेकेणान्यस्मिन् मनश्चित्तमन्तःकरणं येषामिति तद्व्युत्पत्तेर्मदेक-चित्ताः सन्तो भजन्ते=सेवन्ते, मदाज्ञामनुवर्तन्ते, मामाद्रियन्ते, नाव-मन्यन्ते, इत्यर्थः ॥ १३ ॥

अथ तेषां भजनप्रकारमाह—

**"सततं कीर्तयन्तो मां, यतन्तश्च दृढव्रताः ।**
**नमस्यन्तश्च मां भक्त्या, नित्ययुक्ताः उपासते" ॥१४॥**

अर्थः—माम्=ईश्वरं मां, सततम्=अजस्रं, सर्वदा, कीर्तयन्तः= कथयन्तः, स्वरूपेण, गुणेन, कर्मणा च, सभासु, समाजेषु समाशेषु, च, तथा परिवारेषु च व्याहरन्तः, च=तथा, दृढव्रताः=स्थिराहारविहारादिनियमाः यतन्तः=शरीरेन्द्रियमनसां निग्रहे निरोधे सततं यतमानाः । च=तथा, माम्=ईश्वरं मां, भक्त्या=परयाऽनुरक्त्या, नितान्तप्रीत्या, नमस्यन्तः= "सहस्रं साकमर्चत" (ऋ०१।८०।९) इत्यादिमन्त्रवर्णात् प्रातःसायं यथासम्भवं यथावकाशं सङ्गत्य मिलित्वा यथाविधि मन्त्रोच्चारणपूर्वकं नमस्कुर्वन्तः, सत्कुर्वन्तोऽर्चयन्तो नित्ययुक्ताः=नित्यं सर्वदा कर्तव्य-बुद्ध्या देशजात्यात्मोन्नतिसाधनेषु स्ववर्णोचितेषु लोकवेदसम्मतेषु कर्मसु युक्ताः संयुक्ताः संलग्नाः, मामुपासते=भजन्ते, सेवन्ते इत्यर्थः ॥१४॥

नन्वतोऽन्येऽपि सन्ति केचन त्वद्भक्ताः ?, तत्राह—

**"ज्ञानयज्ञेन चाप्यन्ये, यजन्तो मामुपासते ।**
**एकत्वेन पृथक्त्वेन, बहुधा विश्वतोमुखम्" ॥१५॥**

अर्थः—च=तथाऽन्येऽपि=पूर्वोक्तेभ्यः कर्मयोगिभक्तेभ्योऽपरेऽपि, कर्मसंन्यासिनो ज्ञानयोगिनो, ज्ञानयज्ञेन=ज्ञानरूपयज्ञेन, यजन्तः= पूजयन्तः सत्कुर्वन्तो विश्वतोमुखं=सर्वतोमुखं, सार्वविभक्तिकस्तसिः, विश्वतो विश्वं सर्वं, मुखं "तदस्य रूपं प्रतिचक्षणाय" (ऋ०६।४७। १८) इति मन्त्रवर्णात् मुखमिव दर्शनीयं रूपं यस्य, स तथा, तंनिश्वरूपं सर्वरूपं, माम्=ईश्वरं माम्, एकत्वेन=अभेदेन, पृथक्त्वेन=भेदेन, बहुधा=बहुप्रकारेण नानाप्रकारेण, भेदाभेदेनेत्येतद्, उपासते= भजन्तेऽनुसन्दधते, इत्यर्थः ॥ १५ ॥

अथोक्तं विश्वतोमुखत्वमात्मनः प्रपञ्चयति चतुर्भिः—

"अहं क्रतुरहं यज्ञः, स्वधाऽहमहमौषधम्।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्" ॥१६॥

अर्थः—अहम्=अहमेवेश्वरः, क्रतुः=सोमयज्ञो ज्योतिष्टोमादिः, अहम्=अहमेवेश्वरो यज्ञः=त्यहं सवगृहमेधिनिर्वर्त्यः पञ्चमहायज्ञाख्यो यज्ञः, अहम्=अहमेवेश्वरः स्वधा=पितृभ्यो देयमन्नम्, अहम्=अहमेवेश्वरः, औषधं=देवेभ्यो देयमन्नं चरुपुरोडाशप्रकृतिव्रीहियवादिकम्। अहम्=अहमेवेश्वरो मन्त्रः=येन मन्त्रेण देवेभ्यो हविर्दीयते, स याज्यापुरोऽनुवाक्यादिर्मन्त्रः, अहमेवाज्यं=देवेभ्यः पितृभ्यश्च देयं संस्कृतं घृतम्, अहम्=अहमेवेश्वरोऽग्निः=यस्मिन्नग्नौ हविर्हूयते, सोऽग्निः, अहम्=अहमेवेश्वरो हुतं=हवनं कर्म ॥ १६ ॥

"पिताऽहमस्य जगतो, माता धाता पितामहः।
वेद्यं पवित्रमोङ्कारः, ऋक् साम यजुरेव च" ॥१७॥

अर्थः—अहम्=ईश्वरोऽहम्, अस्य=एतस्य प्रत्यक्षादिसन्निधापितस्य, जगतः=स्थावरजंगमात्मकस्य विश्वस्य प्रपञ्चस्य, पिता=जनयिता, माता=जनयित्री, यत्रेदमाम्नायते "त्वं हि नः पिता वसो! त्वं माता शतक्रतो! बभूविथ। अधा ते सुम्नमीमहे" (ऋ० ८।८७-९८।११) इति, धाता=सर्वेभ्यः प्राणिभ्यो जीवेभ्यो यथायथं कर्मफलस्य दाता, पितामहः=ब्रह्मादीनामपि सर्वलोकपितॄणां पिता। वेद्यं=वेदितव्यं ज्ञातव्यं, प्राप्तव्यं च परं ब्रह्म, पवित्रं=पूयतेऽनेनेति व्युत्पत्त्या पावनं शरीरेन्द्रियमनसां परिशुद्धिकारणं कर्म तपःआदिकम्, ओङ्कारः=वेदितव्यस्य ब्रह्मणः परस्येश्वरस्य वाचकः शब्दः प्रणवः, ऋक्=ऋक्संज्ञं मन्त्रजातं, साम=गीयमानं मन्त्रवृन्दं, च=तथा यजुः=यजुराख्यं मन्त्रकदम्बकम्, एव=निश्चयेनाहमेवास्मीत्यर्थः।

त्रेधा खलु सर्वे वेदमन्त्राः विभज्यन्ते ऋक् साम यजुरिति। यज्ञकर्मण्युपयुक्ताः याज्यापुरोऽनुवाक्यानामानो मन्त्राः यजुरिति नाम्ना समाख्यायन्ते, यज्ञकर्मणि गीयमानाः मन्त्राः सामेति शब्देन संज्ञायन्ते, ततोऽवशिष्टाः सर्वे मन्त्राः ऋच इति व्यपदिश्यन्ते। स एष त्रिविधो मन्त्र-

विभागः ऋग्वेदे पुरुषसूक्ते स्पष्टमाम्नायते । तैत्तिरीयब्राह्मणे शतपथ-ब्राह्मणे च बहुधा पापठ्यते । यत्रैतदुदाहृतं भवति "अहेर्बुध्निय! मन्त्रं मे गोपाय, यमृषयस्त्रयीविदो विदुः । ऋचो यजूँषि सामानि, सा हि श्रीरमृता सताम्" ( तै० ब्रा० १।२।१।२६ ) "सा वा एषा वाक् त्रेधा विहिता ऋचो यजूँषि सामानि" (शत० ४ । ६ । ७ । १) (शत० १० । ५ । १ । २) इति । सैषैव मन्त्रत्रयी त्रयीविद्येत्यन्यत्र विस्तरः ॥ १७ ॥

**"गतिर्भर्ता प्रभुः साक्षी, निवासः शरणं सुहृत् ।**
**प्रभवः प्रलयः स्थानं, निधानं बीजमव्ययम्" ॥१८॥**

अर्थः—गतिः = कर्मफलं, गम्यते प्राप्यते प्राणिभिरिति तद्व्युत्पत्तेः, भर्ता=पोषणकर्ता, कर्मफलदानेन पोषयिता पालयिता, प्रभुः=नियन्ता, स्वामी, साक्षी=प्राणिनां शुभाशुभयोः कर्मणोः साक्षाद् द्रष्टा, निवासः = सर्वभूतनिवासस्थानं, निवसन्त्यस्मिन्निति तद्व्युत्पत्तेः, शरणम्=आश्रयः, रक्षास्थानम्, शीर्यते दुःखमस्मिन्निति तद्व्युत्पत्तेः, प्रपन्नानां पुंसामार्तिहृत्, सुहृद्=प्रत्युपकारानपेक्षः सन्नुपकारी । प्रभवः=उत्पत्तिकर्ता, स्रष्टा, प्रकर्षेण भवत्यनेन सर्वमिति तद्व्युत्पत्तेः, प्रलयः=प्रलयकर्ता, संहर्ता, प्रलीयतेऽनेनेति तद्व्युत्पत्तेः, स्थानं=स्थितिकारणं, स्थीयतेऽनेनेति तद्व्युत्पत्तेः, निधानं= निधिर्निक्षेपस्थानं, सर्वेषामैश्वर्याणामाश्रयः, निधीयते निक्षिप्यतेऽस्मिन्निति तद्व्युत्पत्तेः, बीजं = कारणं, तदुभयविशेषणम् अव्ययं= व्ययो विनाशस्तद्रहितं बीजं निधानं चाहमेवास्मीत्यर्थः ॥१८॥

**"तपाम्यहमहं वर्षं, निगृह्णाम्युत्सृजामि च ।**
**अमृतं चैव मृत्युश्च, सदसच्चाहमर्जुन!" ॥१९॥**

अर्थः—अर्जुन=हे अर्जुन ! अहम्=अहमेवेश्वरस्तपामि=तापं करोमि, ग्रीष्मे सूर्यात्मना सर्वं जगत् तापयामि, च=तथाऽहम्=अहमेवेश्वरो वर्षं=वृष्टिं, निगृह्णामि=निरुणध्मि, निरोधयामि, च=तथा, उत्सृजामि=प्रावृषि विमुञ्चामि, प्रक्षिपामि च=किञ्चामृतं=जीवितं सर्वप्राणिनां, च=तथा, मृत्युः= जीवितहरः कालः, एव=निश्चयेन, सद् = व्यक्तं दृश्यं कार्यम्, च=तथा, असद् = अव्यक्तमदृश्यं कारणम्, अहम् = अहमेवेश्वरोऽस्मीत्यर्थः ॥१९॥

अथ यथोक्तं विश्वरूपं मामीश्वरं स्वेन स्वेन कर्मणा पूजयन्तोऽपि केवलं निष्कामाः मनुष्याः मुच्यन्ते, न सकामाः, इति दिदर्शयिषुराह—

"त्रैविद्याः मां सोमपाः पूतपापाः, यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते । ते पुण्यमासाद्य सुरेन्द्रलोक-मश्नन्ति दिव्यान् दिवि देवभोगान्" ॥२०॥

अर्थः—त्रैविद्याः=ऋग्यजुःसामाख्यास्तिस्रो विद्याः अधीयते, तथा विदन्ति जानन्ति ये, ते त्रैविद्याः, वेदत्रयनिर्वर्त्ययज्ञकर्मानुष्ठानतत्पराः याज्ञिकाः, यज्ञैः=अग्निष्टोमादिभिः सोमयज्ञैः,मां=वसुरुद्रादित्यरूपेणा-वस्थितं माम्, इष्ट्वा=सवनत्रये क्रमेण पूजयित्वा, सोमपाः=यज्ञशेषस्य सोमस्य सोमरसस्य पानं कुर्वन्तः,पूतपापाः=सोमपानेन तेन स्वर्गप्राप्तौ प्रतिबन्धकात् पापात् पूताः शुद्धाः निर्मुक्ताः,शुद्धकिल्बिषाः,विधूतपापाः, सन्तः, स्वर्गतिं = स्वर्गगमनं, स्वर्गप्राप्तिं, प्रार्थयन्ते=याचन्ते । ते=अमी यज्ञैरग्निष्टोमादिभिरीश्वरस्य मम यष्टारः,पूजकाः स्वर्गकामिनो याज्ञिकाः, पुण्यं=यज्ञजन्यपुण्यफलं,सुरेन्द्रलोकं=सुराणां देवानामिन्द्रो राजा तस्य स्वर्गनामानं लोकम्, आसाद्य=सम्प्राप्य,दिवि=द्युलोके स्वर्गलोके दिव्यान्= दिवि भवान् अलौकिकान्,देवभोगान्=देवानां भोगान् भोक्तव्यान् पदार्थान्, भुज्यन्ते, इति तद्व्युत्पत्तेः, अश्नन्ति=भुञ्जते,इत्यर्थः ॥ २० ॥

ननु ततः किम् ? तत्राह—

"ते तं भुक्त्वा स्वर्गलोकं विशालं, क्षीणे पुण्ये मर्त्यलोकं विशन्ति। एवं त्रयीधर्ममनुप्रपन्नाः,गता-गतं कामकामाः लभन्ते" ॥२१॥

अर्थः—ते=अमी स्वर्गमासन्नाः प्राप्ताः याज्ञिकाः,तम्=अमुं पुण्य-लब्धं,विशालं=विपुलं,विस्तीर्णं स्वर्गं,स्वर्गस्थं भोग्यजातं भुक्त्वा=अशित्वा, पुण्ये=स्वर्गप्राप्तिहेतौ यज्ञनिर्वृत्ते पुण्ये धर्मे, क्षीणे=नष्टे,भोगेन परिसमाप्ते, मर्त्यलोकं=मनुष्यलोकमिमं, विशन्ति=आविशन्ति, प्राप्नुवन्ति।एवम्= अमुना प्रकारेण, त्रयीधर्मं=वेदत्रय्या निर्वर्त्यं यज्ञधर्मम्, अनुप्रपन्नाः=

फलकामनयाऽनुसृतवन्तोऽनुतिष्ठन्तः, कामकामाः=कामान् विषयान्, भोगान् कामयमानाः विषयकामुकाः भोगेच्छवो, जनाः, गतागतं=द्वन्द्वैकवद्भावः, यातायातं, मुहुर्मुहुर्गमनागमनं, लभन्ते=विन्दन्ते, न कदाचिद् विश्राममयन्ते इत्यर्थः ॥२१॥

ननु ये निष्कामाः कर्मयोगिनस्तेषां किं भवति ? तत्राह—

"अनन्याश्चिन्तयन्तो मां, ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां, योगक्षेमं वहाम्यहम्" ॥२२॥

अर्थः—ये जनाः=ये मनुष्याः, अनन्याः=नविद्यतेऽन्योऽपरो मद्व्यतिरिक्तो लौकिकोऽलौकिको वा प्राप्यः कश्चित् पदार्थो येषां, तेऽनन्यमनसो निष्कामाः सन्तो, माम्=ईश्वरं मां, चिन्तयन्तः=सर्वेषु पदार्थेष्वन्तरात्मरूपेण ध्यायन्तः, पर्युपासते=परितः सर्वतः कायेन वाचा मनसा भजन्ते, सेवन्ते, शुश्रूषन्ते, मदाज्ञामनुवर्तन्ते । तेषाम्=अमीषां, नित्याभियुक्तानां= नित्यं सततमभितः सर्वतः शरीरेन्द्रियमनोभिः कर्मसु युक्ताना लग्नानां नित्यकर्मयोगिनां, योगक्षेमम्=अप्राप्तस्यप्राप्तिर्योगः, प्राप्तस्यरक्षणं क्षेमः, योगश्च क्षेमश्च, योगक्षेमं, द्वन्द्वैकवद्भावः, अहम्=ईश्वरोऽहं वहामि= निर्वहामि, ते योगक्षेमकृतविक्षेपाभावात् सदा समाहितचित्ताः मोक्षसुखमेवानिशमनुभवन्ति, तेषां न परलोके गमनं, न वा ततः पुनरागमनं भवतीत्यर्थः ॥ २२ ॥

नन्वन्यदेवताभक्ताः अपि सर्वरूपस्य तवैव भक्ताः, तेषां योगक्षेमं किं न वहसि ? तत्राह—

"येऽप्यन्यदेवताभक्ताः, यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय!, यजन्त्यविधिपूर्वकम्" ॥२३॥

अर्थः—कौन्तेय=हे कुन्तीपुत्र ! येऽपि=ये चापि केचिदैहिकामुष्मिकार्थकामिनो जनाः मनुष्याः शास्त्रज्ञानविधुरत्वादन्यदेवताभक्ताः= अन्यासां मतो भेदेन कल्पितानां कासांचिद्देवतानां भक्ताः सेवकाः, श्रद्धया=कामितार्थप्रदाने समर्थाः इमाः देवताः, इत्यास्तिक्यबुद्ध्या, अन्विताः=युक्ताः, यजन्ते=अन्याः देवताः पूजयन्ते। तेऽपि=अमी देवतान्तरपूजकाः अपि, मामेव=तत्तद्देवतात्मनाऽवस्थितं वर्तमानं मामीश्वरमेव,

यजन्ति = पूजयन्ति यद्यपि, तथाप्यविधिपूर्वकम् = "ईश्वर एव सर्वान्तरात्मा, सर्वदा सर्वत्रोपासितव्यः पूजयितव्यः" इति हि शास्त्रीयो विधिः, यत्रैतदुदाहृतं भवति "आत्मेत्येवोपासीत" (बृ० उ० १।४।७) "आत्मानमेव लोकमुपासीत" (बृ० उ० १।४।१५) इत्यादि, तत्पूर्वकं मां न यजन्ति। सर्वान्तरात्मा परब्रह्म परमेश्वर एव तत्तद्देवतारूपेणावस्थितस्तत्तद्देवतानामभिः समाख्यायते, यत्रैतदुदाहृतं भवति "यो देवानां नामधाः एक एव" ( ऋ० १० । ८२ । ३) इति, "एकं सद् विप्राः बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः" (ऋ० १।१६४।४६) इति च, ततोऽतिरिक्ता कापि देवता यष्टव्या वोपासितव्या वा नास्ति, इत्येतदज्ञात्वा मत्तो भिन्नत्वेनाशास्त्रीयया स्वबुद्ध्या तास्ताः देवताः परिकल्प्य श्रद्धया परया पूजयन्ति, तस्मात् ते देवताभक्ताः एव सन्ति, न मद्भक्ताः, इति नाहं तेषां योगक्षेमं वहामीत्यर्थ ॥ २३ ॥

ननु श्रद्धया परया तास्ताः देवताः यजन्तस्ते जनाः कस्माद् विधिपूर्वकं न यजन्ति ? तत्राह—

## "अहं हि सर्वयज्ञानां, भोक्ता च प्रभुरेव च ।
## न तु मामभिजानन्ति, तत्त्वेनातश्च्यवन्ति ते" ॥२४

अर्थः—सर्वयज्ञानां=सर्वेषां श्रौतानां स्मार्तानां च यज्ञानां, भोक्ता= पालयिता, रक्षिता, च=तथा, प्रभुः=स्वामी, फलप्रदाता, च = उभयम्, एव=निश्चयेन, अहं हि=अहमेवेश्वरोऽस्मि भवामि । तु = परन्तु, ते= अमी अन्यदेवताभक्ताः, तत्त्वेन = सर्वयज्ञानां भोक्तृरूपेण प्रभुरूपेण च, माम्=ईश्वरं मां, नाभिजानन्ति=नाधिगच्छन्ति, न विदन्ति, अतः= अस्य हेतोश्च्यवन्ति=परमपुरुषार्थाद् भ्रश्यन्ति, पुरुषजन्मना यत् प्राप्यं, तन्न प्राप्नुवन्ति, सर्वजगत्स्वामिनं सर्वभूतान्तरात्मानं, सर्वेभ्यः कर्मफलस्य दातारं, मामीश्वरं मुञ्चमानाः, स्वबुद्धिकल्पितास्तास्ताः क्षुद्रदेवताः श्रद्दधानाः प्रत्यहमैहिकामुष्मिकफलकामनया यजन्ति, श्रद्धया पूजयन्ति, निःसन्देहं शास्त्रविधिमुत्सृजन्ति, नूनं यद् विदधति, सर्वं तदविधिपूर्वकं विदधति, तदेतदेव तेषां परमपुरुषार्थात् प्रच्युतेः कारणम्। अत एव ते पुरुषैः प्राप्तव्यात् परमपुरुषार्थात् प्रच्यवन्ते, मनुष्यजन्मनो लक्ष्याद् परमाद् [illegible], इत्यर्थः ॥ २४ ॥

अथाविधिपूर्वककरणेन परमपुरुषार्थच्यवनमेव तेषां स्पष्टयन्नाह—

"यान्ति देवव्रताः देवान्, पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्याः, यान्ति मद्याजिनोऽपि माम्"

अर्थः—इह पितृभूतग्रहणं निदर्शनार्थम्, अनुपक्रान्तत्वात् । देवव्रताः=देवानां देवतानां यजनं पूजनं व्रतं नियतं कर्म येषां, ते देवयजनव्रताः, नियमेन देवतापूजकाः, देवान् = देवदेयान् वाञ्छितार्थान्, यान्ति=प्राप्नुवन्ति, पितृव्रताः=पितृपूजनव्रताः, पितृपूजकाः, पितॄन्=पितृदेयान् वाञ्छितार्थान्, यान्ति=विन्दन्ति, भूतेज्याः=भूतानां जडचेतनानामिज्या यजनं पूजनमुपासनं यथायोग्यसेवनमस्ति येषां, ते भूतयाजकाः, भूतानि = भूतदेयानि वस्तूनि, यान्ति=गच्छन्ति, चार्थेऽपिः, च=तथा, मद्याजिनः=मामीश्वरं यष्टुं शीलं येषां, ते मत्पूजनस्वभावाः, मदुपासनपरायणाः, मदाज्ञानुवर्तिनो, मां=मद्देयां पुनरावृत्तिवर्जितां परमां गतिं, यान्ति=व्रजन्ति, सैव परमपुरुषार्थः, न क्षणभंगुराः स्वबाहुबलसम्पाद्याः क्षुद्राः सांसारिकाःपदार्थाः, स्वबुद्धिकल्पितैर्मिथ्याभूतैर्देवैर्देया इत्यर्थः ॥२५॥

अथान्यदेवतायजनस्य सर्वथा परित्यागार्थमीश्वरयजनस्य तदपेक्षया सुकरत्वमाह—

"पत्रं पुष्पं फलं तोयं, यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतम्, अश्नामि प्रयतात्मनः" ॥२६॥

अर्थः – य=यो मनुष्यः, पत्रं=पल्लवं, पुष्पं=कुसुमं, फलं= सस्यं, तोयम्=उदकं, तदेतत् समुच्चितं, तेषां वा किञ्चिदेकं, मे = मह्यं सर्वान्तरात्मने परब्रह्मणे परमेश्वराय, भक्त्या=परमप्रेम्णा, प्रयच्छति= प्रददाति, समर्पयति, तद्=अदः पत्रपुष्पादिकं, प्रयतात्मनः=शुद्धमनसो भक्त्युपहृतं=भक्त्या परमप्रेम्णोपहृतं दत्तं समर्पितम्, अहम्=ईश्वरोऽहमश्नामि=अभ्यवहरामि, गृह्णामि, प्रसन्नचेतसा स्वीकरोमि, भक्तिरेव मत्प्रसादकारणं, न पत्रपुष्पादिकं, न वा सांसारिकं वस्त्वन्तरं किञ्चित् मत्प्रसन्नताहेतुरित्यर्थः ॥ २६ ॥

अथार्जुनस्य कर्तव्यमाह—

"यत् करोषि यदश्नासि, यद् जुहोषि ददासि यत् ।
यत् तपस्यसि कौन्तेय ! तत् कुरुष्व मदर्पणम्" ॥२७॥

अर्थः—कौन्तेय=हे कुन्तीपुत्र ! यत्=यत् कर्म, करोषि=त्वं निर्वर्तयसि, यद्=यदन्नम्, अश्नासि=त्वमभ्यवहरसि, यद्=यदाज्यं वा, काष्ठं वा, जुहोषि=होमयसि, यद्=यत् न्यायार्जितं द्रव्यं, ददासि= विद्वद्भ्यो वेदविद्भ्यो यच्छसि, यत् तपस्यसि=यदात्मजातिदेश-गौरवरक्षणार्थं द्वन्द्वसहनलक्षणं तपश्चरसि, तत्=सर्वं तत्, मदर्पणं= कर्मणि प्रत्ययः, मदर्पितं, मयि समर्पितं, दत्तं, कुरुष्व=विधत्स्व, फल-कामनामुज्झित्वा केवलकर्तव्यबुद्ध्या सर्वं कर्म निर्वर्तयस्वेत्यर्थः ॥२७॥
नन्वेवं कुर्वतो मे किं भविष्यसि ? तत्राह ।

**"शुभाशुभफलैरेवं, मोक्ष्यसे कर्मबन्धनैः ।**
**संन्यासयोगयुक्तात्मा, विमुक्तो मामुपैष्यसि" ॥२८॥**

अर्थः—एवं=यथोक्तप्रकारेण मयीश्वरे सर्वकर्मार्पण कुर्वाणस्त्वं, शुभाशुभफलैः=इष्टानिष्टफलकैः, शुभाशुभे इष्टानिष्टे फले येषामिति बहुव्रीहिः, कर्मबन्धनैः=कर्माण्येव शुभाशुभफलानि बन्धनानि, तैः, क्रियमाणैर्हिंसालक्षणैरहिंसालक्षणैर्वा कर्मभिर्बन्धनैर्मोक्ष्यसे = विमो-क्ष्यसे, परित्यक्ष्यसे, न जातु सम्भत्स्यसे, कर्मभिस्तत्फलैश्च न संस्रक्ष्यसे, विमुक्तः=शुभाशुभफलैः कर्मबन्धनैः परित्यक्तः, संन्यासयोगयुक्तात्मा= संन्यासः फलसंन्यासः, योगः कर्मयोगः, फलसंन्यासपूर्वकेण कर्मयोगेन युक्तः संयुक्तः संलग्नः समन्वितः आत्मा मनोऽन्तःकरणं यस्य, स त्वं निष्कामकर्मयोगयुक्तमनाः, माम्=ईश्वरं मां, परमां गतिमुपैष्यसि= प्राप्स्यसि, देहपाते मामागमिष्यसीत्यर्थः ॥ २८ ॥
अथ मत्प्राप्तौ ज्ञानपूर्विका भक्तिरेव मुख्यं साधनं, भक्तिश्च मदाज्ञानु-वर्तनमिति विवक्षुराह—

**"समोऽहं सर्वभूतेषु, न मे द्वेष्योऽस्ति न प्रियः ।**
**ये भजन्ति तु मां भक्त्या, मयि ते तेषु चाप्यहम्" ॥२९॥**

अर्थः—अहम्=ईश्वरोऽहं, सर्वभूतेषु=सर्वेषु स्थावरजंगमेषु भूतेषु प्राणिषु, समः=अन्तरात्मरूपेण समानस्तुल्यः, अतएव मे=मम, न द्वेष्यः=न कश्चिद् द्वेषविषयः, न प्रियः=न कश्चित् प्रीतिविषयोऽस्ति= भवति । तु=परन्तु, ये=ये, जनाः, मां=सर्वभूतान्तरात्मानमीश्वरं मां, भक्त्या=परमप्रेम्णा, भजन्ति=भजन्ति, मदाज्ञामनुवर्तन्ते, फलत्यगेन

केवलकर्तव्यबुद्धया सर्वेषु स्ववर्णोचितकर्मसु यावज्जीवं निरलसः सन्तो वर्तन्ते, ते=अमी कर्मयोगिनो भक्ताः, मयि=ममात्मत्वात् सर्वभूतान्तरात्मनीश्वरे मयि, तिष्ठन्ति, न क्वचित् कदाचिन्मां विस्मरन्ति, यथाऽहं तत्त्वतोऽस्मि, तथा मां सर्वदा सर्वत्र साक्षात् पश्यन्ति, च=तथाऽहमपि = सर्वभूतान्तरात्माऽहमीश्वरोऽपि, तेषु=तदात्मत्वात् तेषु कर्मयोगिभक्तेषु तिष्ठामि, न तान् क्वचित् कदाचिद् विस्मरामि, सर्वदा सर्वत्र तेषां योगक्षेमवहो भवन् अनुगृह्णामीत्यर्थः ॥ २९ ॥

अथान्यदीश्वरभक्तेर्माहात्म्यं श्रावयति द्वाभ्याम्—

**"अपि चेत सुदुराचारो, भजते मामनन्यभाक् ।**
**साधुरेव स मन्तव्यः, सम्यग्व्यवसितो हि सः" ॥३०॥**

अर्थः—भिन्नक्रमोऽपिः, चेत्=यदि कश्चित, सुदुराचारोऽपि=सुष्ठ नितान्तं दुष्टः प्रतिषिद्धः आचारः आचरणं चरित्रं वृत्तं क्रियाजातं यस्य, सोऽतीवकुत्सितकर्मकलापोऽपि भूत्वा, अनन्यभाक्=नान्यं मद्व्यतिरिक्तं कञ्चिद् भजते यः, स तथा, अनन्यभक्तः सन्, माम्=ईश्वरं मां, भजते=सेवते, मदाज्ञामनुवर्तते । सः=असौ, एव=निश्चयेन, साधुः=पूर्वमसाधुः सन्नप्यधुना साधुः सम्यग्वृत्तः, सदाचारः साधुकर्मा, मन्तव्यः=बोद्धव्यः, हि=यस्मात्, सः=असौ, सम्यग्व्यवसितः=सञ्जातसमीचीनव्यवसायः, भगवद्भक्तिपूर्वकं निष्कामभावेन स्ववर्णोचितकर्मानुष्ठानमेव श्रेयोमार्गः इति शोभनमध्यवसायं निश्चयमकार्षीदित्यर्थः ॥३०॥

**"क्षिप्रं भवति धर्मात्मा, शश्वच्छान्तिं निगच्छति ।**
**कौन्तेय! प्रतिजानीहि, न मे भक्तः प्रणश्यति" ॥३१**

अर्थः—असौ सम्यग्व्यवसायवान् मद्भक्तः, क्षिप्रं=शीघ्रं, धर्मात्मा=धर्मः सनातनो धर्मः कर्मयोगः, तत्रात्मा चित्तं मनो यस्य, स धर्मचित्तः, कर्मयोगमनाः, भवति=बोभूयते, शश्वत्=नित्यं, शान्ति=दुराचारनिवृत्तिं, दुराचारजन्यनिखिलपापहानिं च निगच्छति=नितराम् अत्यन्तं याति, कौन्तेय=हे कुन्तीपुत्र! प्रतिजानीहि=मद्वचनादूर्ध्वबाहुर्भूत्वा संगिरस्व, किं ? मे=ममेश्वरस्य भक्तः=भक्तिमान् कर्मयोगी, न प्रणश्यति=नेहामुत्र कर्हिचिद् दुर्गतिं गच्छति, न जातु श्रीहीनतां दरिद्रतां प्राप्नोति, न क्वचित् कदाचिदनीश्वरो भवतीत्यर्थः ॥ ३१ ॥

किमधिकेन—

"मां हि पार्थ ! व्यपाश्रित्य, येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्राः,तेऽपि यान्ति परां गतिम्"३२

अर्थः—पार्थ = हे पृथापुत्र ! हि=निश्चयेन, माम् = ईश्वरं मां, व्यपाश्रित्य=भक्तव्यत्वेन समाश्रित्य, येऽपि स्युः = भवेयुः, पापयोनयः= पापा पापबहुला मातापितृलक्षणा योनिः येषां, ते योनितो मातापितृतो पापबहुलाःम्लेच्छाः,स्त्रियः=गृहकार्यासक्ताः निरवकाशाः योषितः,वैश्याः= वाणिज्यनिमग्नाः वैश्यवृत्तयो विशः,तथा शूद्राः=शु-द्रवाः,आशु-द्रवणाः, विद्याहीनाः कर्मकराः,तेऽपि=ते चत्वारोऽपि,यथा प्रागुक्ताः सुदुराचार- स्तथेत्यपेरर्थः,परां प्रकृष्टां श्रेष्ठामुत्तमां गतिं=मत्प्राप्तिं,यान्ति=गच्छन्ति, प्राप्नुवन्तीत्यर्थः ॥३२॥

"किं पुनर्ब्राह्मणाः पुण्याः, भक्ताः राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्" ॥३३॥

अर्थः—पुण्याः=पुण्यकर्माणः, कर्मयोगिनो, भक्ताः=भक्तिमन्तो ब्राह्मणाः=ब्रह्म मन्त्रो वेदः,तमधीयते विदन्ति वा,वेदविद्वांसोऽनूचानाः शुश्रुवांसो जनाः, तथा=तद्विधाः कर्मयोगिनो भक्ताः राजर्षयः=राज- कर्मार्हाःवेदार्थदर्शिनो बाहुबलाः क्षत्रियाः, परां गतिं यान्ति गच्छन्तीति किंपुनः=किं पुनर्वक्तव्यम् । अतोऽनित्यम्=अध्रुवम्,असुखम्=अनित्य- सुखम्, इमम्=एतं, लोकं=देहं, लोक्यते भुज्यते कर्मफलमस्मिन्निति तद्व्युत्पत्तेः, प्राप्य=प्रगत्य,लब्ध्वा, माम्=सर्वभूतान्तरात्मानमीश्वरं मां, भजस्व = सेवस्व, मदाज्ञामनुवर्तस्वेत्यर्थः ॥३३॥

अथ भजस्वेत्युक्तं विवृण्वन्नुपसंहरति—

"मन्मनाः भव मद्भक्तो, मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवम्, आत्मानं मत्परायणः" ॥३४॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा- र्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ।

अर्थः=मन्मनाः=मयि मनश्चित्तं यस्य, स मन्मनाः, मच्चित्तः, सर्वत्र-मद्दर्शी, भव=एधि, मद्भक्तः=मयि भक्तिमान्, मदाज्ञानुवर्ती, भव, मद्याजी=मद्यजनशीलः यजनं पूजनं सत्करणमुपासनम्, मामीश्वरं यष्टुं पूजयितुं शीलमस्येति तद्व्युत्पत्तेः, भव, एधि, मां नमस्कुरु=मामेवेश्वरं प्रातः सायं नमस्कारं विधत्स्व। एवम्=उक्तप्रकारेण, मत्परायणः=अहं परमयनं गतिर्यस्य, स तथा, मदेकाश्रयः, मदेकशरणो भवन्, युक्त्वा=कर्मयोगं कृत्वा, कर्मयोगेन जीवनदिनानि क्षपयित्वा, मामेवात्मानं=सर्वभूतान्तरात्मानं मामीश्वरमेवैष्यसि = आगमिष्यसि, प्राप्स्यसीत्यर्थः ॥३४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्र-
निष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते
भगवद्गीतोपनिषद्वैदिकभाष्ये नवमोऽध्यायः ॥९॥

---

# "अथ दशमोऽध्यायः" ।

नवमाध्यायेऽर्जुनं भगवान् श्रीकृष्णः कर्मयोगाङ्गभूतं विज्ञानेन सहेश्वरज्ञानं, कर्मयोगाङ्गभूतां चेश्वरभक्तिमुपादिक्षत्। सम्प्रति भक्तेर्दार्ढ्यार्थमीश्वरस्य निरङ्कुशं सर्वैश्वर्यं, तद्विभूतिनिरूपणेन, निरूपयितव्यम्, तदर्थं दशमाध्यायमारभमाणः प्रथममर्जुनस्य रुचिमुत्पादयन्नाह–

"श्रीभगवानुवाच" ।

**"भूय एव महाबाहो !, शृणु मे परमं वचः ।**
**यत् तेऽहं प्रीयमाणाय, वक्ष्यामि हितकाम्यया" ॥१॥**

अर्थः—महाबाहो=हे महाभुज ! भूयः=पुनः, एव=निश्चयेन सावधानचित्तः सन्, मे=मम, परमं=प्रकृष्टं, प्रकृष्टवस्तुविषयं, वचः=वचनं, वाक्यं, शृणु=आकर्णय । यद्=यद् वचोऽहम्=ईश्वरोऽहं प्रीयमाणय= मद्वचनश्रवणे प्रीतिं प्रतिपद्यमानाय, तृप्तिं प्राप्नुवते, सन्तोषमनुभवते, श्रवणोत्सुकाय, ते=तुभ्यं हितकाम्यया=हितकामनया, प्रियप्राप्तिकांक्षया, वक्ष्यामि=कथयिष्यामीत्यर्थः ॥ १ ॥

ननु किं तद्वचः ?, तत्राह—

**"न मे विदुःसुरगणाः प्रभवं न महर्षयः ।**

**अहमादिर्हि देवानां, महर्षीणां च सर्वशः" ॥२॥**

अर्थः—मे=ममेश्वरस्य, प्रभवं=प्रभावं, सामर्थ्यं, सृष्टिसंहारादि-शक्त्यतिशयं, सुरगणाः=सुराणां देवानां देवलोकनिवासिनां गणाः समूहाः, न विदुः=न जानन्ति, न महर्षयः=न महान्तः ऋषयो वेद-मन्त्रणामृचां द्रष्टारो वसिष्ठविश्वामित्रप्रभृतयो, विदुः=जानन्ति । हि=यस्मादहम्=ईश्वरोऽहं, सर्वशः=सर्वेषां देवानां=सुराणा, च=तथा, महर्षीणां=सर्वेषां महर्षीणाम, आदिः=उत्पत्तिकारणमस्मि, नहि मज्जाताः सर्वे देवाः, महर्षयश्च सर्वे, मम पितुः प्रभावं, शिशव इव जनयितुः, क्वचित्, कदाचित्, कथञ्चिद् वेदितुं ज्ञातुमर्हन्ति। समाम्नातं चैतदृग्वेदे हिन्दुधर्मपुस्तके "को अद्धा वेद क इह प्रवोचत, कुत आजाता कुत इयं विसृष्टिः । अर्वाग् देवाअस्य विसर्जनेन, अथा को वेद यत आबभूव" ( ऋ० १० । १२९ । ६ ) इति। तस्मादवहितमनाः शृणु सर्वेषामुत्पत्तिकारणस्य मे मम परमं वचः, इत्यर्थः ॥२॥

अथैवंभूतस्येश्वरस्य वेदने फलमाह—

**"यो मामजमनादिं च, वेत्ति लोकमहेश्वरम् ।**

**असंमूढः स मर्त्येषु, सर्वपापैः प्रमुच्यते" ॥३॥**

अर्थः—यः=यो मनुष्यः, माम्=ईश्वरं माम् , अनादिं=न विद्यते आदिः कारणं यस्य, तं कारणवर्जितं, सर्वकारणम, अत एवाजं=न जायमानं, जन्मशून्यं, च=तथा, लोकमहेश्वरं=लोकानां लोक्यमानानां स्थावरजंगमानां निखिलानां भूतानां प्राणिनां महान्तमीश्वरं, यत्रैत-च्छ्रूयते " तमीश्वराणां परमं महेश्वरं, तं देवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम्" ( श्वे० उ०६।७ ) इति, वेत्ति=जानाति । सः=असौ, मर्त्येषु=मनुष्येषु, असंमूढः=न संमूढः, न विवेकशून्यः, संमोहोऽविवेकः, तद्रहितो विवेकवान् पण्डितः, सर्वपापैः ... पूर्वकृतैश्च

निखिलैर्ज्ञाताज्ञातैः कल्मषैर्दुरितैः, प्रमुच्यते=प्रकर्षेणात्यन्तं मुच्यते, मुक्तः सम्पद्यते, पापैः पापकार्यैश्च सर्वैर्न सम्बध्यते, इत्यर्थः ॥३॥

अथोक्तं स्वस्येश्वरस्य सर्वलोकमहेश्वरत्वं विस्तारयति—

"बुद्धिर्ज्ञानमसंमोहः, क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवोऽभावो, भयं चाभयमेव च" ॥४॥

अर्थः—बुद्धिः=कार्याकार्यावगतिः, ज्ञानं=याथातथ्येनात्मादिपदार्थानां प्रत्ययः,असंमोहः=संमोहोऽविवेको भ्रमो विपर्ययः,तदभावः, क्षमा=सहिष्णुता, आक्रुष्टस्य ताडितस्य वाऽविकृतचित्तता, सत्यं=यथार्थभाषणं,यथादृष्टं यथाश्रुतं,तस्य परबुद्धिसङ्क्रान्तये तथैवोच्चारणं, दमः=बाह्येन्द्रियनिग्रहः,शमः=मनःसंयमः,सुखम्=आह्लादः,दुःखं=सन्तापः, भवः=उद्भवः उत्पत्तिः, अभावः=तद्विपर्ययो विनाशः, च=तथा, भयं=त्रासः, च=तथा, एव=निश्चयेनाभयं=तद्विपरीतं त्रासाभावः ॥४॥

"अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावाः भूतानां, मत्त एव पृथग्विधाः" ॥५॥

अर्थः—अहिंसा=प्राणिनां पीडनं हिंसा, तद्विपरीता, प्राणिनामपीडनं, समता=सुखदुःखयोर्हानिलाभयोर्जयपराजययोः समचित्तता, तुष्टिः=तोषः सन्तोषः, लब्धेऽर्थेऽलंप्रत्ययः, तपः=शीतोष्णादिद्वन्द्वानां सहनं,दानं=धर्मार्जितस्य नानाविधस्य वित्तस्य यथाशक्ति सत्पात्रे समर्पणं, यशः=सद्गुणनिमित्ता लोकप्रशंसारूपा प्रसिद्धिः,अयशः=अपगुणनिमित्ता लोकनिन्दारूपा प्रसिद्धिः, एते, पृथग्विधाः=नाना विधाः, भावाः=धर्माः, भूतानां=प्राणिनां, मत्त एव=मदीश्वरादेव, नान्यस्मादित्यवधारणार्थः, भवन्ति=जायन्ते इत्यर्थः ॥ ५ ॥

अथ भूतानां प्राणिनां भावा इव,भूतानि प्राणिनोऽपि मत्त एव भवन्तीत्याह

"महर्षयः सप्त पूर्वे, चत्वारो मनवस्तथा ।
मद्भावाः मानसाः जाताः, येषां लोके इमाः प्रजाः" ॥६॥

अर्थः—पूर्वे=पूर्वजाः,आरम्भजाः,सप्त=सप्तसंख्याकाः महर्षयः=महान्तः पूज्यतमाः श्रेष्ठाः कश्यपात्रिभरद्वाजविश्वामित्रगोतमजमदग्निवसिष्ठसंज्ञकाः मूलगोत्रर्षयः सर्वभूतसृष्टिकर्तारोऽस्माकं पितरः, यत्रैत-

दमाम्नायते "अस्माकमत्र पितरस्त आसन् सप्तऋषयो दौर्गहे बध्य-माने। त आयजन्त त्रसदस्युमस्याः इन्द्रं न वृत्रतुरमर्धदेवम्" (ऋ० ४।४२।८) इति, तथा पूर्वे=प्राथमिकाश्चत्वारः=चतुःसंख्यकाः मनवः=स्वायम्भुवस्वारोचिषादयो भूतरक्षितारो भूतपालाः प्रजापतयः, पूर्वेषामुत्तरापेक्षया प्राधान्यात् चत्वार इत्युक्तिः, इतरेषामुपलक्षण-विधयाऽपि ज्ञानसम्भवात्, वर्तमानो मनुर्वैवस्वतः सप्तर्षिसमसमयः, ततः पूर्वे स्वायम्भुवस्वारोचिषौत्तमितामसरैवतचाक्षुषनामानः षट् मनवः, तेषां प्रधानाः आद्याश्चत्वार इति गीताकृतामभिप्रायः, मद्भावाः= मद्भावकाः, मद्भावसमन्विताः, मम भावो भावो येषामिति तद्व्युत्पत्तेः, भावो धर्मः स्रष्टृत्वं रक्षितृत्वं च, तदुभयधर्मयुक्ताः, मद्दत्तसृष्टिरक्षा-सामर्थ्यद्वयोपेताः, मानसाः=मनसोऽपत्यानि पुमांसः, मनो महत्तत्त्वं, "महदाख्यमाद्यं कार्यं, तन्मनः" (सां० १। ७१) इत्यादिस्मृतेः, तदुपाधिकस्य हिरण्यगर्भात्मनो ममापत्यभूताः, जाताः=विराडादि-सृष्टिक्रमेणाजनिषत, सत्त एवोदपत्सत, येषां=मनूनां महर्षीणां च येषामिमाः=एताः प्रत्यक्षाः, लोके=अस्मिन् लोके, प्रजाः=सन्ततिभूताः पुत्रपौत्रादिलक्षणाः सर्वाः प्रजाः, सर्वे प्राणिनाः। पूर्वैर्महर्षिभिर्मनुभिश्च पूर्वैरहमेवेश्वरः सर्वेषां भूतानां प्राणिनां स्रष्टा रक्षिता संहर्ता चेत्यर्थः।

धर्मपुस्तके हि "विराजोऽधिपूरुषः" (ऋ० १०। ६०। ५) इति समाम्नातम्। तत्र विराजः केन क्रमेणाजनि पूरुषः पुरुषो मनुष्यः, इति न विज्ञायते, क्रमेण च भवितव्यम्। स मनीषिभिः शाखान्तरादवगन्तव्यः। अत्राध्येतॄणां बोधस्य वैशद्यार्थं प्रथमजीवोत्पत्तिविषयाः परम्परा-प्राप्ताः द्वित्राः श्लोकाः लिख्यन्ते—

"सर्गादौ वर्तुलाकारः, सत्त्वोऽणीयान् त्वगिन्द्रियः।
मूलं विश्वस्य सत्त्वस्य, जज्ञे भगवदिच्छया" ॥ १ ॥
"शब्दरागाच्छ्रोत्रमस्य, जायते भावितात्मनः।
रूपरागात्तथा चक्षुः, घ्राणं गन्धजिघृक्षया" ॥ २ ॥
"पादौ विहरणेच्छायां, हस्तावादातुमिच्छया।
रसनं रसकांक्षायां, जायते वाग् विवक्षया ॥ ३ ॥ इति।

बह्वृचानामैतरेयोपनिषदि यः पुरुषोत्पत्तिक्रमः श्रूयते, तेन तुल्योऽयं पारम्पर्येणागतः प्रथमजीवोत्पत्तिक्रमः, इति प्रतीमः। संज्ञाभेदस्याकिञ्चित्करत्वात् ॥ ६ ॥

ननु भूतभावानां भूतानां च सर्वेषां त्वमेवेश्वरः स्रष्टा रक्षिता संहर्ता च, किमनेनास्माकं ? तत्राह —

**"एतां विभूतिं योगं च, मम यो वेत्ति तत्त्वतः ।**
**सोऽविकम्पेन योगेन, युज्यते नात्र संशयः" ॥७॥**

अर्थः—यः=यो मनुष्यः, मम=ईश्वरस्य मम, एताम्=इमां पूर्वोक्तां विभूतिं=विविधाकारेण भवनं, नानारूपेणावस्थानं, भूतरूपेण, भूतभावरूपेण चावस्थितिं, च=तथा, योगम्=अयोगयोगम्, अघटनघटनं, निरतिशयज्ञानक्रियाशक्तिलक्षणं विविधभवनसामर्थ्यं, परमैश्वर्यं, तत्त्वतः= याथातथ्यतः, यथावदित्येतद्, वेत्ति=जानाति। स=असौ, अविकम्पेन= अविचलेन दृढेन वेदविहितेन मत्प्रियेन, सनातधर्मेण, योगेन=कर्मयोगेन, युज्यते=संयुज्यते, सम्बध्यते, अत्र=अस्मिन्नर्थे, संशयः=सन्देहो, न= नास्तीत्यर्थः ॥ ७ ॥

अथोक्तमर्थं स्पष्टयन्नाह—

**"अहं सर्वस्य प्रभवो, मत्तः सर्वं प्रवर्तते ।**
**इति मत्वा भजन्ते मां, बुधाः भावसमन्विताः" ॥८॥**

अर्थः—अहम्=ईश्वरोऽहं, सर्वस्य=निखिलस्य जगतः, प्रभवः= प्रभवहेतुः, प्रभवत्यस्मादिति तद्व्युत्पत्तेः, उत्पत्तिः प्रभवः, तत्कारणम्, उत्पादयिता, जनयिता, मत्तः=मदीश्वरादेव, सर्वं=समस्तं जगत्, प्रवर्तते=चेष्टते, इष्टानिष्टप्राप्तिपरिहारानुकूलां क्रियां कुरुते । इति=एवं, यथोक्तं तथा, सर्वस्य जगतो जनयिता प्रवर्तयिता चेश्वर एवेत्येतत्, मत्वा=ज्ञात्वा, बुद्ध्वा, बुधाः=अवगततत्त्वार्थाः, ज्ञानिनो मनुष्याः, भावसमन्विताः=भावेन प्रेम्णा समनुगताः, समुपेताः, मां=परमेश्वरं मां, भजन्ते=सेवन्ते, मदाज्ञामनुवर्तन्ते, दिवानिशमनुवर्तितुमीहन्ते, इत्यर्थः।

अथ भावेन प्रेम्णा भजमानान् विशिनष्टि—

**"मच्चित्ताः मद्गतप्राणाः, बोधयन्तः परस्परम् ।**
**कथयन्तश्च मां नित्यं, तुष्यन्ति च रमन्ति च" ॥९॥**

अर्थः—नित्यं = सर्वदेति प्रत्येकमन्वेति, मच्चित्ताः=मयि सर्वान्तरात्मनि परमेश्वरे परब्रह्मणि, चित्तं मनोऽन्तःकरणं येषां, ते तथा, मद्गोचरान्तःकरणाः, चित्तेनान्तःकरणेन मामेवान्तरात्मानं परमेश्वरं सर्वदा सर्वत्रानुभवन्तः, मद्गतप्राणाः=मां सर्वात्मकं सर्वरूपेणावस्थितं परमात्मानं गताः प्राप्ताः प्राणाश्चक्षुरादीनि करणानि येषां, ते तथा, मद्गोचराखिलबाह्यकरणाः, बाह्यैश्चक्षुरादिभिरिन्द्रियैः, करणैः, "पुरुष एवेदं सर्वम्" (ऋ० १० । ९० । २) "तदेवाग्निस्तदादित्यः" (यजु० ३२ । १) "सर्वं खल्विदं ब्रह्म" (छां० उ० ३ । १४ । १) इत्यादिश्रुतिशतसाक्षिकं सर्वं समस्तं चराचरं वस्तुजातं मामेव नित्यमवलोकयन्तः, समाम्नायते च " रूपं रूपं मघवा बोभवीति " (ऋ० ३ । ५३ । ८) " तदस्य रूपं प्रतिचक्षणाय " ( ऋ० ६।४७।१८ ) इति, परस्परम्= अन्योऽन्यं, बोधयन्तः=ज्ञापयन्तः, सर्वसामर्थ्योपेतं निरतिशयज्ञानक्रियाशक्तिं सर्वस्य स्रष्टारं संहर्तारं च मामेव नित्यमवगमयन्तः, च= तथा, नित्यं=सर्वदा, मां=यथोक्तस्वरूपं मां, कथयन्तः=ब्रुवन्तः, शिष्यान् जनान् च सर्वान् नित्यमुपदिशन्तः, तुष्यन्ति च=लब्धेऽर्थे, यथाकालं प्राप्ते वस्तुनि, नन्दन्ति च, प्रसीदन्ति च, न कदाचित् खिद्यन्तीति चार्थः, रमन्ति च=स्वे स्वे कर्मणि बाला इव क्रीडन्ति च, न कदाचिदायासं मन्यमानाः विरमन्ति, नित्यं स्ववर्णोचितं कर्म कुर्वन्तीत्यर्थः ॥९॥

अथ तथाविधानां भजमानानां फलमाह—

"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं, येन मामुपयान्ति ते" ॥१०॥

अर्थः—तेषाम्=अमीषां, सततयुक्तानां=चित्तेनेन्द्रियैश्च मयि नित्याभियुक्तानां, सर्वदा मल्लग्नान्तरबाह्यकरणानां, प्रीतिपूर्वकं=प्रीतिः प्रेमा स्नेहः, तत्पूर्वकं, न कयाचित्फलकामनया, भजतां = भजमानानां, सेवमानानां, मदाज्ञामनुवर्तमानानां, ददामि = यच्छामि, तम् = अमुं, बुद्धियोगं=समत्वबुद्धियोगलक्षणं कर्मयोगं, येन=मद्दत्तेन समत्वबुद्धियोगलक्षणेन कर्मयोगेन येन, ते=अमी यावज्जीवं वर्तमानाः कर्मयोगिनो, माम्=ईश्वरं मामुपयान्ति=उपगच्छन्ति, वर्तमाने देहे ध्वस्ते नद्यः इव समुद्रमाविशन्तीत्यर्थः ॥ १० ॥

ननु हार्दतमोनाशाभावे कथं त्वदुपगमः स्यात् ?, तत्राह—

**"तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता" ॥११॥**

अर्थः—तेषाम्=अमीषां प्रीतिपूर्वकं भजतां सततयुक्तानां कर्मयोगिनाम्, एव=निश्चयेनानुकम्पार्थम्=अनुग्रहार्थं, दयाहेतोः, अहम्=ईश्वरोऽहम्, आत्मभावस्थः=आत्मनो भावे भवने मनोमन्दिरे स्थितः, भास्वता=प्रकाशवता, देदीप्यमानेन, ज्ञानदीपेन=ज्ञानलक्षणेन प्रदीपेन, अज्ञानजम्=अज्ञानादविवेकाज्जातमुत्थितं, तमः=मिथ्याप्रत्ययलक्षणं मोहान्धकारं, नाशयामि=अज्ञाननाशेन नाशयामि, निवर्तयामीत्यर्थः॥११॥
अथ संक्षेपेणोक्तं योगं विभूतिं च श्रुत्वा विस्तरेण श्रोतुकामोऽर्जुनो भगवन्तं स्तुवन्नाह सप्तभिः—

"अर्जुनः उवाच"

**"परं ब्रह्म परं धाम, पवित्रं परमं भवान् ।**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम्" ॥१२॥**
**आहुस्त्वामृषयः सर्वे, देवर्षिर्नारदस्तथा ।**
**असितो देवलो व्यासः, स्वयं चैव ब्रवीषि मे" ॥१३॥**

अर्थः—भवान्=तत्रभवान्, परं ब्रह्म=प्रकृतितत्कार्येभ्यः परः पुरुषः परमात्मा, परं=प्रकृष्टं, धाम=गृहं, सर्वेषां भूतानां निवासस्थानम्, उत्तमाश्रयः, परमं=प्रकृष्टं, पवित्रं=पावनं, पावनानामपि पावनम् । त्वां=भवन्तं त्वां, पुरुषं=पुरिशयं, सर्वत्र पूर्णं, सर्वेषु भूतेष्वन्तरात्मतया स्थितं, शाश्वतं=शश्वद्भवं, सनातनं, दिव्यं=दिविभवमलौकिकम्, आदिदेवं=देवानामादिं कारणं ब्रह्मादिसर्वदेवजनयितारम्, अजम्=अजन्मानं, जन्मशून्यं, विभुं=विविधभवनसमर्थं, विविधं भवतीति तद्व्युत्पत्तेः, आहुः=ब्रुवन्ति, कथयन्ति, सर्वे=सकलाः, ऋषयः=मन्त्रद्रष्टारो महर्षयः, तथा देवर्षिर्नारदोऽसितो देवलः, तथा व्यासः=व्यासोपनामा कृष्णद्वैपायनो मुनिः, आह=ब्रवीति, कथयति, च=तथा, एव=निश्चयेन, स्वयं=साक्षात् त्वं, मे=मह्यं ब्रवीषि=कथयसि, वदसीत्यर्थः ॥१३॥

**"सर्वमेतदृतं मन्ये, यन्मां वदसि केशव !**
**न हि ते भगवन्! व्यक्तिं विदुर्देवाः न दानवाः" ॥१४**

अर्थः—केशव=हे प्रशस्तकेश ! सर्वमेतद्=एतत् सर्वम्,ऋतं= सत्यं, मन्ये—अहं जाने,यन्मां=यदर्जुनं मां, वदसि=गदसि,स्वविषयं भाषसे। भगवन्=हे परमैश्वर्यवन्! हि=निश्चयेन,ते तव, व्यक्तिं=स्वरूपं व्यज्यतेऽभिव्यज्यते प्रकाशते भक्तानां दृष्टौ सर्वदा सर्वत्र,व्यनक्ति वा सर्वं भूतजातमिति तद्व्युत्पत्तेः, न देवाः=सुराः, सुमनसः, विदुः=जानन्ति,न दानवाः=न दनुपुत्राः, असुराः, पूर्वदेवाः, विदुः=जानन्तीत्यर्थः ॥१५॥

**"स्वयमेवात्मनाऽऽत्मानं, वेत्थ त्वं पुरुषोत्तम !।**
**भूतभावन ! भूतेश ! देवदेव ! जगत्पते ! "॥१५॥**

अर्थः—पुरुषोत्तम=हे पुरुषेषूच्चतम !, हे क्लेशकर्मविपाकाशयै-रपरामृष्टपुरुषविशेष!, भूतभावन=हे भूतोत्पादक! हे सर्वभूतपितः ! भूतानि सर्वाणि भावयत्युत्पादयतीति तद्व्युत्पत्तेः,भूतेश =हे भूताना-मीशितः ! हे सर्वभूतनियन्तः ! देवदेव=हे देवाधिदेव ! "यो देवेष्व-धिदेव एकः" ( ऋ० १० । १२१ । ८ ) इति मन्त्रवर्णात्, जगत्पते= हे जगत्पालक !,हे विश्वम्भर !,यत्रेदमाम्नातं भवति " नकिर्वक्ता न दादिति " ( ऋ०८।३२।१५) इति,स्वयमेव त्वं=साक्षात् त्वमेव,नान्यः कश्चिदित्यवधारणार्थः,आत्मना=स्वेन,आत्मानं=स्वं,वेत्थ=जानासीत्यर्थः ॥

**"वक्तुमर्हस्यशेषेण, दिव्याः ह्यात्मविभूतयः ।**
**याभिर्विभूतिभिर्लोकान्,इमांस्त्वं व्याप्य तिष्ठसि"॥१६**

अर्थः—हि=निश्चयेन, यास्ते तव,दिव्याः=अलौकिक्यः अद्भुताः, आत्मविभूतयः=आत्मनः स्वस्य विविधाकारेण स्थितयः,याभिर्विभूति-भिस्त्वम्,इमान्=एतान्,लोकान्=समस्तान् भूरादीन् लोकान्, व्याप्य= आपूर्य, पूरयित्वा, तिष्ठसि=वर्तसे, ताः सर्वाः विभूतीरशेषेण= निःशेषेण, वक्तुं=कथयितुमर्हसि=योग्योऽसीत्यर्थः ॥१६॥

"कथं विद्यामहं योगिन् !, त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु, चिन्त्योऽसि भगवन् ! मया" ॥१७॥

अर्थः—योगिन् = हे योगमायाविन् ! हे अद्भुतसामर्थ्य ! सदा= सर्वदा, परिचिन्तयन् = परिचिन्तयिष्यन्—चिन्तनं ध्यानं संस्मरण-मित्यनर्थान्तरम्, ध्यायिष्यन्, संस्मरिष्यन्, अहम् = अर्जुनोऽहं, त्वाम्= अनन्तशक्तिमीश्वरं त्वां, कथं = केन प्रकारेण, केन धर्मेण, केन च रूपेण, विद्यां=जानीयां, परिचिन्तनीयं निश्चिनुयां, केन प्रकारेण परिचिन्तयेयं, केन धर्मेण ध्यायेयं, केन रूपेण संस्मरेयम् ? । च = तथा, केषु केषु भावेषु= भावः पदार्थो वस्तु, जडानां पदार्थानां मध्ये केषु पदार्थेषु वस्तुषु, चेतनानां पदार्थानां मध्ये केषु पदार्थेषु वस्तुषु, मया = अर्जुनेन मयका, भगवन् = हे निरतिशयैश्वर्यवन् ! त्वं चिन्त्यः=चिन्तयितव्यश्चिन्तयितुमर्हः, ध्यातुं स्मर्तुं योग्योऽसि=भवसि, जडचेतनात्मकानां पदार्थानां वस्तूनां मध्ये कस्य कस्य पदार्थस्य वस्तुनो दर्शनेन त्वां चिन्तयिष्यामि, संस्मरिष्यामि तवेत्यर्थः ॥१७॥

अथात्मकथनमुपसंहरति—

"विस्तरेणात्मनो योगं, विभूतिं च जनार्दन ! ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम्" ॥१८॥

अर्थः—जनार्दन = हे दुष्टजनमर्दन ! आत्मनः=स्वस्य, योगम्= ऐश्वर्यातिशयं, च = तथा विभूतिं=विविधभवनं, वैभवं, विस्तरेण = सप्तमे नवमे संक्षेपेनोक्तमपि सम्प्रति विस्तरेण, अशेषेण, भूयः=पुनः, कथय = श्रावय, हि=यस्मात, अमृतं=त्वदीयं वचनामृतं, शृण्वतः = श्रोत्राभ्यां पिबतो मे=मम, तृप्तिः=अलंबुद्धिर्नास्ति=न भवति, श्रवणेच्छा न निवर्तते, इत्यर्थः ॥१८॥

अथार्जुनेन प्रार्थितो भगवान् पृष्टस्योत्तरं वदितुं सङ्गिरते—

"श्रीभगवानुवाच" ।

"हन्त ते कथयिष्यामि, दिव्याः ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ ! नास्त्यन्तो विस्तरस्य मे" ॥१९॥

अर्थः—हन्त=वत,ओम्, ते=तुभ्यं, कथयिष्यामि=वदिष्यामि, हि=निश्चयेन, याः दिव्याः=दिविभवाः,अप्राकृताः,अलौकिक्यः,आत्मविभूतयः=आत्मनः स्वस्य मम विविधैर्भावैरवस्थितयः,ताः प्राधान्यतः=प्राधान्येन, दिव्यानामात्मविभूतीनां याः प्रधानभूताः विभूतयः, ताः विभूतीः कथयिष्यामीत्यन्वयः,नाशेषेण कथयिष्यामि,यत्कारणं कुरुश्रेष्ठ=हे कौरवोत्तम! मे=मम विस्तरस्य=वैभवस्य विभूतिप्रपञ्चस्य, विभूतीनां व्यासस्य, अन्तः=अवसानं, समाप्तिरवधिर्नास्ति=न विद्यते, अतो नाशेषतःसर्वास्ताः वर्षशतेनापि वक्तुं शक्यन्ते,तेन प्राधान्येन काश्चिद् वक्ष्यामीत्यर्थः ॥ १९ ॥

अथ प्रथमं "कथं विद्यामहं योगिन्" इति प्रश्नस्योत्तरमाह—

**"अहमात्मा गुडाकेश! सर्वभूताशयस्थितः।**
**अहमादिश्च मध्यं च, भूतानामन्त एव च" ॥२०॥**

अर्थः—गुडाकेश=हे जितनिद्र! सर्वभूताशयस्थितः=सर्वेषां भूतानां प्राणिनामाशये हृदि देशे स्थितोऽवस्थितः, आत्मा=प्रत्यगात्मा, क्षेत्रज्ञात्मा,अहम्=अहमेवेश्वरोऽस्मि, भूतानां सर्वेषामन्तर्हृदये प्रत्यगात्मरूपेण क्षेत्रज्ञात्मना मां सर्वदा चिन्तनीयं त्वं विद्याः, सर्वप्राणिनिकायान् पश्यन् प्रत्यागात्मत्वेन प्रकारेण मामीश्वरं स्मर्तव्यं विजानीहि। च=किञ्च, भूताना=सर्वेषां भूतानां स्थावरजंगमानाम्, एव=निश्चयेन, आदिः=जन्म, च=तथा, मध्यं=स्थितिः, च=तथा, अन्तः=प्रलयः, संहारोऽहम्=अहमेवेश्वरोऽस्मि, स्थावरजङ्गमानां भूतानां जन्मस्थितिप्रलयः न जातु मत्तो व्यतिरिच्यन्ते, सर्वभूतात्मनाऽहमेवोद्भवामि, तिष्ठामि,प्रलिनामि च, सर्वभूतान्तरात्मनि योगमायापतौ मय्येवेश्वरे सर्वेषां भूतानां जन्मस्थितिप्रलयाः, सरित्पतौ समुद्रे तरङ्गाणां जन्मस्थितिप्रलयाः इव, यथाकालं बोभूयन्ते, तस्मात् सर्वभूतादिमध्यान्तात्मना मामीश्वरं सर्वदा चिन्तयितव्यं प्रत्यवेयाः, इत्यर्थः ॥२०॥

अथ "केषु केषु च भावेषु" इत्यस्योत्तरं वक्तुमुपक्रमते—

**"आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्।**
**मरीचिर्मरुतामस्मि, नक्षत्राणामहं शशी" ॥२१॥**

अर्थः—आदित्यानाम्=अदितिपुत्राणां द्वादशानां सूर्याणां मध्ये, विष्णुः=व्यापकरश्मिर्मध्यान्हकालो विष्णुनामा सूर्योऽहम्=अहमस्मि, ज्योतिषां=प्रकाशानामग्न्यादीनां मध्ये, अंशुमान्=प्रचण्डदीधितिरंशुः, तद्वान्, तीव्रातपो मध्यान्हभवो नैदाघो रविः=सूर्योऽहमस्मि । मरुतां=वृष्ट्यावहवायूनां,मरीचिः=विद्युद्गर्भा मरुद्, अहमस्मि=भवामि, नक्षत्राणाम्=अश्विनीभरण्यादिसंज्ञानां चन्द्रपथवर्तिताराणानां शशी=चन्द्रोऽहमस्मीत्यर्थः ॥२१॥

**"वेदानां सामवेदोऽस्मि, देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि, भूतानामस्मि चेतना" ॥२२॥**

अर्थ—वेदानां=वेदनाम्ना प्रसिद्धानाम् ऋग्वेदादीनां मध्ये, सामवेदः=गानात्मको गीयमानगीतिमको वेदः,अस्मि=अहमस्मि,भवामि, देवानां=दिवौकसां, वासवः=वसोरपत्यं पुमान् देवाधिपतिरिन्द्रोऽहमस्मि=भवामि। च=तथा,इन्द्रियाणां=श्रोत्रादीनामेकादशानां वाह्यान्तःकरणानां मध्ये मनः=तत्प्रवर्तकमन्तरिन्द्रियं मनश्चित्तमहमस्मि, भूतानां=शेषे षष्ठी, सर्वेषां भूतानां प्राणिनां सम्बन्धिनी, सर्वेषां प्राणिनां देहेषु वर्तमाना,चेतना=चैतन्यं,जीवितं, ज्ञानशक्तिरहमस्मि=भवामीत्यर्थः ।

"गीतिषु सामाख्या" (मी०२।१।३६) इति जैमिनीसूत्राद् ऋग्वेदस्य या ऋचो मन्त्रा यज्ञे कर्मणि गीयन्ते, तासां सामवेदसंज्ञेति विस्पष्टम् । श्रूयते च "ऋच्यध्यूढं साम गीयते"( छां० उ० १।६।२ ) इति । तासां सर्वासामृग्वेदादुद्धृत्य संहिताकारेण सामवेदनाम्ना पृथक्करणमुद्गातॄणां सुविधार्थमित्यधिगन्तव्यम् । ईश्वरस्य स्तुतौ च चित्तैकाग्र्यहेतुत्वेन गानस्य प्रधानाङ्गत्वाभ्युपगमाद् इह गीतायां "वेदानां सामवेदोऽस्मि" इति पठ्यते,न तु पृथग्धर्मपुस्तकाभिप्रायेण,धर्मपुस्तकं त्वेकलो भगवान् ऋग्वेद एवेति निश्चितो धर्ममार्गः। यजुर्वेदस्तु यज्ञपद्धतिरूपेण प्रमाणमभ्युपेयते, न धर्मपुस्तकरूपेण । परिवर्तनशीलत्वात् । नह्यद्ययावदेको यजुर्वेदोऽविच्छिन्नरूपेण वरीवृत्त्यते,यथा भगवान् ऋग्वेदः। पञ्चषाणां भिन्नभिन्नसमये भिन्नभिन्नरूपेण परिवर्तितानां यजुर्वेदानामद्याप्युपलम्भात् । अथर्ववेदस्त्वाधुनिकत्वात् त्रयीबाह्यत्वाच्च साहित्यदृष्ट्या कथञ्चित्

प्रमाणं भवन्नपि न धर्मपुस्तकदृष्ट्या कर्हिचित् प्रमाणम्। गीताप्रणयनसमये वेदबहुत्वप्रसिद्धेः "वेदानाम्" इति पठितं वेदितव्यम्। अत्रैते संग्रहश्लोकाः-

वेदाश्चत्वार इत्याहुर्याज्ञवल्क्याश्च मुण्डकाः।
अनन्ता इति ते चाहुः शाखिनस्तैत्तिरीयकाः ॥१॥
वेदास्त्रय इति प्राहुर्धर्मशास्त्रप्रवर्तकाः।
मनुजैमिनिमुख्याश्च, तथाऽन्ये वेदचिन्तकाः ॥२॥
मन्त्रदृष्ट्या विभागोऽयं, मुनिभिः परिकीर्त्यते।
ऋग्यजुःसामनामानो मन्त्रास्त्रेधेति गीयते ॥३॥
तेषां समूह ऋग्वेदः, स एव धर्मपुस्तकम्।
हिन्दूनामार्यधर्माणां, सर्वेषामिति निश्चितम् ॥४॥
यज्ञार्थत्वात् प्रमाणं तु, यजुःसामाभिधं द्वयम्।
साहित्यरूपतश्चान्यः, इति वेदविदां मतम् ॥५॥

**"रुद्राणां शङ्करश्चास्मि, वित्तेशो यक्षरक्षसाम्।**
**वसूनां पावकश्चास्मि, मेरुः शिखरिणामहम्" ॥२३॥**

अर्थः—च=तथा, रुद्राणां=प्रजापतिपुत्राणां तातप्यमानरूपाणां मरुत्तातानामेकादशानां मध्ये, शङ्करः=शान्तिकरः संहारकरः शम्भुनामा रुद्रोऽहमस्मि, यक्षरक्षसां=यक्षानां रक्षसां राक्षसानां च मध्ये, वित्तेशः= धनेशो धनपाः निधिपाः कुबेरोऽहमस्मि। च=तथा, वसूनां=वास-हेतूनामग्निभेदानामष्टानां, पावकः=पावनकरोऽग्निरहमस्मि, शिखरिणां= शिखरं शृङ्गं, तद्वतामत्युच्छ्रितानां मेरुः=उत्तरमेरुः सुमेरुरहमस्मीत्यर्थः॥२४

**"पुरोधसां च मुख्यं मां, विद्धि पार्थ! बृहस्पतिम्।**
**सेनानीनामहं स्कन्दः, सरसामस्मि सागरः" ॥२४॥**

अर्थः—पार्थ=हे पृथापुत्र! पुरोधसां=पुरोहितानां मध्ये, मुख्यं= प्रधानं पुरोधसं, बृहस्पतिं=देवराजपुरोहितं बृहस्पतिनामानं मां विद्धि= जानीहि। सेनानीनां=सेनापतीनां मध्ये स्कन्दः=देवसेनापतिः, कार्तिकेयः, सरसां=जलाशयानां देवखातानां मध्ये, सागरः=समुद्रः,

अहमस्मि = भवामीत्यर्थः ॥२४॥

"महर्षीणां भृगुरहं, गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि, स्थावराणां हिमालयः" ॥२५॥

अर्थः—महर्षीणां=पूज्यानां सप्तानां गोत्रर्षीणां वसिष्ठविश्वामित्रादीना मध्ये, भृगुः=परशुरामजनको जमदग्निः प्रज्वलिताग्निर्महातेजा ऋषिरहमस्मि, गिरां=वाचां, सार्थकानां पदरूपाणां वाणीनां मध्ये, एकमक्षरम्=एकोवर्णः प्रणवः, ओङ्कारोऽहमस्मि=भवामि। यज्ञानां=श्रौतस्मार्तयज्ञानां मध्ये, जपयज्ञः=स्वाध्याययज्ञः, स्थावराणां=स्थितिमतामचलानां, हिमालयः=हिमालयनामा पर्वतराजोऽहमस्मि=भवामीत्यर्थः ॥२५॥

"अश्वत्थः सर्ववृक्षाणां, देवर्षीणा च नारदः ।
गन्धर्वाणां चित्ररथः, सिद्धानां कपिलो मुनिः" ॥२६॥

अर्थः—सर्ववृक्षाणां=सर्वेषां वृक्षाणां शाखिनां मध्येऽश्वत्थः=पिप्पलः, च=तथा, देवर्षीणां=जातितो देवाः, मन्त्रद्रष्टृत्वाद् ऋषयः, देवाश्च ते ऋषयश्च, तेषामसितदेवलप्रभृतीनां मध्ये, नारदः=नारदो नाम देवर्षिरहमस्मि । गन्धर्वाणां=गानधर्माणां देवगायकानां मध्ये, चित्ररथः=चित्ररथनामा देवगायकः, सिद्धानां=ज्ञानसिद्धिं प्राप्तानाम, आत्मज्ञानिनां मध्ये, कपिलो मुनिः=सांख्यशास्त्रस्य प्रवर्तकः कपिलाख्यो मुनिरहमस्मीत्यर्थः ॥२६॥

"उच्चैःश्रवसमश्वानां, विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां, नराणां च नराधिपम्" ॥२७॥

अर्थः—अश्वानां=वाजिनां हयानां मध्ये, अमृतोद्भवं=जलोत्पन्नं, समुद्रादाविर्भूतम, आगतम, उच्चैःश्रवसम्=उच्चतरकर्णत्वादुच्चैःश्रवोनामानम अश्वं मां विद्धि=जानीहि। गजेन्द्राणां=हस्तीश्वराणां राजहस्तिनां मध्ये, ऐरावतम्=इरावत्याः अपत्यम्-इरावतीतटप्रभवं गजेन्द्रं, च=तथा, नराणां=मनुष्याणां मध्ये, नराधिपं=मनुष्याधिपतिं, राजानं, मां विद्धि=जानीहीत्यर्थः ॥ २७ ॥

"आयुधानामहं वज्रो, धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः, सर्पाणामस्मि वासुकिः" ॥२८॥

अर्थः—आयुधानम्=आकृष्य युद्धसाधनानां शस्त्राणां मध्ये, वज्रः="वज्रो वै असिः" (शत० ३।८।२।१२) इति श्रुतेरसिः खड्गोऽहमस्मि, धेनूनां=दोग्ध्रीणां गवां, कामधुक्=कामधेनुः यथेष्टदोग्ध्री, नवसूतिका गौरहमस्मि=भवामि। च=तथा, प्रजनः=प्रजनयिता, प्रजोत्पत्तिहेतुः, कन्दर्पः=कामो मन्मथोऽहमास्मि=भवामि, सर्पाणां= सर्पणवतां पादोदराणां मध्ये, वासुकिः=सर्पराजो वासुकिनामा भुजगोऽहमस्मि=भवामीत्यर्थः ॥२८॥

"अनन्तश्चास्मि नागानां, वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि, यमः संयमतामहम्" ॥२९॥

अर्थः—च=तथा, नागानां=फणिनां सर्पभेदानां मध्ये, अनन्तः= अनन्तफणः शेषाख्यो नागराजोऽहमस्मि=भवामि, यादसां=जलजन्तूनां मकरादीनां मध्ये, वरुणः=यादसां पतिर्वरुणोऽहमस्मि । पितॄणां= बर्हिषदग्निष्वात्तादिपितॄणां मध्येऽर्यमा=पितृराजोऽर्यमाऽहमस्मि, च= तथा, संयमतां=नियमतां, नियमनं दुष्टनिग्रहं कुर्वतां मध्ये, यमः= धर्मराजाख्यो यमोऽहमस्मीत्यर्थः ॥ २९ ॥

"प्रह्लादश्चास्मि दैत्यानां, कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं, वैनतेयश्च पक्षिणाम्" ॥३०॥

अर्थः—च=तथा, दैत्यानां=दितिपुत्राणां दानवानां, प्रह्लादः= हिरण्यकशिपुपुत्रः प्रह्लादोऽहमस्मि=भवामि, कलयतां=कलनं संख्यानं, गणनं, तत् कुर्वतां, कालः=प्रत्येकमायुर्दिनानां कलयिता गणयिताऽहोरात्रादिलक्षणः कालः समयोऽहमस्मि । च=तथा, मृगाणां=वन्यपशूनां हरिणादीना सर्वेषां मध्ये, मृगेन्द्रः=मृगराजो व्याघ्रो वा सिंहो वाऽहमस्मि, च=तथा पक्षिणां=पक्षवतामाकाशचारिणां विहगानां मध्ये, वैनतेयः=विनतापुत्रः पक्षिराजो गरुडोऽहमस्मीत्यर्थः ॥३०॥

**"पवनः पवतामस्मि, रामः शस्त्रभृतामहम् ।**
**झषाणां मकरश्चास्मि, स्रोतसामस्मि जाह्नवी" ॥३१॥**

अर्थः—पवतां=पावयितॄणां, पवनः=वायुरहमस्मि=भवामि, शस्त्रभृतां=शस्त्रधारिणां वीराणां क्षत्रियाणां, रामः=दशरथतनयो रामोऽहमस्मि । च=तथा, झषाणां=मत्स्यानां, मकरः=मत्स्यविशेषो नक्रस्तिमिङ्गिलोऽहमस्मि, स्रोतसां=प्रवाहणां, प्रवाहोदकानां, स्रवन्तीनामपां, जाह्नवी=जन्हुतनया भागीरथी गङ्गाऽहमस्मि=भवामीत्यर्थः ३२

**"सर्गाणामादिरन्तश्च, मध्यं चैवाहमर्जुन ! ।**
**अध्यात्मविद्या विद्यानां, वादः प्रवदतामहम्" ॥३२॥**

अर्थः—अर्जुन=हे अर्जुन ! सर्गाणां=सृष्टीनाम्, आदिः=उत्पत्तिः, जन्म, च=तथाऽन्तः=नाशः प्रलयः, च=तथा, मध्यं=स्थितिरेव=निश्चयेनाहमेवास्मि । पूर्वत्र भूतानामित्युक्तम्, इह तु सर्वस्यैव सर्गमात्रस्येति विशेषः। सर्गात्मना व्यज्यमानोऽहमुत्पत्तिस्थितिरूपः, प्रलीयमानश्च प्रलयरूपो भवामि, न मम व्यक्ताव्यक्तरूपाभ्यां भिन्नाः सर्गाणामुत्पत्तिस्थितिप्रलयाः बोभुवति । तथा, विद्यानां=परापरभेदेन भिन्नानां विविधानां विद्यानां मध्येऽध्यात्मविद्या=आत्मसम्बन्धिनी विद्या, ब्रह्मविद्या, परविद्याऽहमस्मि, तथा प्रवदतां=प्रकर्षेण वादजल्पवितण्डाभेदेन कथाविशेषेण वदनं कथनं कुर्वतां, वादजल्पवितण्डाख्यास्तिस्रः कथाः कथयतां वादिनां, सम्बन्धी, शेषे षष्ठी विभक्तिः, यो वादः=अर्थनिर्णयहेतुर्वादसंज्ञकः कथाविशेषः, सोऽहमस्मीत्यर्थः ।

तिस्रः कथाः भवन्ति वादो जल्पो वितण्डा च । तत्रार्थनिर्णयप्रयोजना कथा वादः, स्वपक्षस्थापनपूर्वकपरपक्षनिरसनप्रयोजना कथा जल्पः, यत्र स्वपक्षो न स्थाप्यते, परपक्ष एव छलजातिनिग्रहस्थानैर्दूष्यते, सा कथा वितण्डा । तासां तिसृणां कथानां जल्पवितण्डे विजिगीषमाणयोर्वादिप्रतिवादिनोः शक्तिपरीक्षामात्रफले, वादस्तु याथातथ्येनार्थनिर्णयफल इति विवेकः ॥ ३२ ॥

**"अक्षराणामकारोऽस्मि, द्वन्द्वः सामासिकस्य च ।**
**अहमेवाक्षयः कालो, धाताऽहं विश्वतोमुखः" ॥३३॥**

अर्थः—अक्षराणां=वर्णानाम्, अकारः=सर्ववर्णादिमो वर्णोऽकारः, अहमस्मि=भवामि, सामासिकस्य=समाससमूहस्य मध्ये,द्वन्द्वः=उभय-पदार्थप्रधानो द्वन्द्वनामा समासः, पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तर-पदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिः,तेषामुभयपदार्थ-प्राधान्याभावेनापकृष्टत्वादुभयपदार्थप्राधान्येनोत्कृष्टो द्वन्द्वाख्यश्चतुर्थः समासोऽहमस्मि=भवामि । अक्षयः=क्षयो विनाशोऽन्तस्तद्रहितः,कालः= "ज्ञः कालकालो गुणी सर्वविद् यः" ( श्वे० उ० ६ । १६ ) इति श्रुत्युक्तः कालकालो महाकालः, एव = निश्चयेनाहमस्मि, तथा, विश्वतो-मुखः=सर्वतोवदनः,सर्वोपरिलोचनः,सर्वेषां पुण्यापुण्यकर्मणामभितो द्रष्टा धाता=कर्मफलस्य दाता "अहं दधामि द्रविणं हविष्मते"(ऋ०१०।१२५।२ इति मन्त्रवर्णाद् अहमस्मीत्यर्थः । दधामि = ददामि, द्रविणं = धनं, कर्मफलं, हविष्मते=हविषां द्रव्ययज्ञानां कर्त्रे, कर्मिणे ॥ ३३ ॥

**"मृत्युः सर्वहरश्चाहम्, उद्भवश्च भविष्यताम् ।**
**कीर्तिः श्रीर्वाक् च नारीणां,स्मृतिर्मेधा धृतिः क्षमा" ३४**

अर्थः—च=तथा,सर्वहरः=विश्वप्रलयकरः,मृत्युः=मृत्युराजोऽ-हमस्मि । च=तथा, भविष्यताम् = उद्भविष्यताम्, उद्भवोऽभ्युदयः, लौकिकमैश्वर्यम्,अभीष्टानामर्थानामुदयः उद्गमः प्राप्तिरिति तद्व्युत्पत्तेः, भविष्यति वर्तमाने चाभ्युदयिनाम्,अभ्युदयप्राप्तिमतां मनुष्याणां,शेषे षष्ठी,यः उद्भवः=अभ्युदयः,उत्कर्षः, सोऽहमस्मि । च=तथा, नारीणां= शेषे षष्ठी, स्त्रीणां, स्त्रीसम्बन्धिनी, स्त्रीषु महिलासु वर्तमाना, कीर्तिः= पातिव्रत्यधर्मनिमित्ता ख्यातिः, श्रीः = शरीर श्रीः,शरीरैश्वर्यं, सौन्दर्यं, वाक्=मधुरा वाणी, स्मृतिः=अनुभूतार्थस्मरणशक्तिः, मेधा=श्रुतार्थ-धारणशक्तिः,धृतिः = केनचित् कारणेन चापल्यप्राप्तावपि शरीरेन्द्रिय-सङ्घातस्तम्भनशक्तिः, क्षमा=श्वशुरश्वश्रूपतिपुत्राद्यपराधसहिष्णुता, अहमेवास्मीत्यर्थः ॥३४॥

**"बृहत् साम तथा साम्नां, गायत्री छन्दसामहम् ।**
**मासानां मार्गशीर्षोऽहम्,ऋतूनां कुसुमाकरः" ॥३५॥**

अर्थः—तथा, साम्नां=गीतीनाम्, ऋचामुपरि गीयमानानां

गानविशेषाणां 'गायत्र-रथन्तर-वामदेव्य-बृहद्-वैरूप-वैराज-शाक्कर-रैवत-यज्ञायज्ञीय-प्रभृतीनां मध्ये, बृहद् = "त्वामिद् हि हवामहे" (ऋ० ६।४६।१) इत्यास्यामृचि गीयमानं=बृहन्नामकं, साम=गीति-भेदो गानविशेषोऽहमस्मि,तथा छन्दसां=वैदिकानां वर्णवृत्तानां गायत्री-उष्णिग्-अनुष्टुब्-बृहती-पङ्क्ति-त्रिष्टुब्-जगतीनां सप्तानां वृत्तानां मध्ये, गायत्री=चतुर्विंशत्यक्षरा गायत्री, गायत्रीनाम छन्दोऽहमस्मि। छन्दांसि द्विविधानि मात्राछन्दांसि,वर्णछन्दांसि च। तेषामार्याप्रभृतीनि मात्रा-छन्दांसि लोकविषयत्वाल्लौकिकानि, गायत्रीप्रभृतीनि वर्णछन्दांसि वेदविषयत्वाद् वैदिकानि। तानि चैतान्यवान्तरभेदेन प्रत्येकमनेकानि भवन्त्यपि मूलतः सप्तैव भवन्ति। यत्रेदं श्रूयते "सप्त वै छन्दांसि" (शत० ३।८।१६) "गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तिस्त्रिष्टुब्जगत्यै" (अथर्व० १९।२१।१) इति। तेषां सप्तानां छन्दसां प्रथमछन्दो गायत्री,सैवा-हमस्मीत्याह भगवान् प्राथम्यसाम्यात्। मासानां=चैत्रादीनां द्वाद-शानां मासानां मध्ये,मार्गशीर्षः=मृगशीर्षेण नक्षत्रेण युक्ता पौर्णमासी यस्मिन् मासे, स मार्गशीर्षः आग्रहायणो नाम मासोऽहमस्मि,नक्षत्रना-मानः खलु सर्वे मासाः,येन येन नक्षत्रेण युक्ता पौर्णमासी यस्मिन् यस्मिन्= मासे वर्तते,तेन तेन नक्षत्रेण सस मासः समाख्यायते,यथा चित्रा-नक्षत्रेण चैत्रः,विशाखया वैशाखः, तथा मृगशीर्षनक्षत्रेणाग्रहायणिको मार्गशीर्षः, स च शीतातपसमत्वेन सस्यादिसम्पन्नत्वेन च सर्वेभ्यो मासेभ्यः श्रेष्ठः। ऋतूनां=शिशिरादीनां षण्णामृतूनां मध्ये,कुसुमाकरः वसन्तोऽहमस्मि, पुष्पाकरत्वेन शोभनतमत्वादित्यर्थः ॥ ३५ ॥

"द्यूतं छलयतामस्मि, तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि, सत्त्वं सत्त्ववतामहम्" ॥३६

अर्थः-छलयतां=छलं वञ्चनं,सर्वस्वहरणं,तस्य कर्तॄणां,वञ्चकानाम्, अन्योऽन्यवञ्चनपराणां,शेषे षष्ठी,द्यूतं=सर्वस्वहरणहेतुरक्षदेवनादिकम्, अस्मि=अहमस्मि भवामि, सर्वस्वहरणहेतुतासाम्यात्,तेजस्विनां=तेजः प्रतापः प्रागल्भ्यं, पराभवसामर्थ्यं, तद्वतां प्रतापिनां सम्बन्धि तेजः= प्रागल्भ्यं प्रतापोऽहमस्मि। जयोऽस्मि=जयिनां जेतॄणां जयोऽहमस्मि,जयः

उत्कर्षः, व्यवसायोऽस्मि=व्यवसायिनामुद्यमिनामुद्योगिनां सम्बन्धी व्यवसायः उद्यमः उद्योगोऽहमस्मि, सत्त्ववतां=सत्त्वं साहसं, मनोबलातिशयस्तद्वतां, साहसिकानां सम्बन्धि, सत्त्वं=साहसं निरतिशयमनोबलमहमस्मीत्यर्थः ॥३६॥

"वृष्णीनां वासुदेवोऽस्मि, पाण्डवानां धनञ्जयः।
मुनीनामप्यहं व्यासः, कवीनामुशना कविः"॥३७॥

अर्थः—वृष्णीनां=वृष्णिवंश्यानां यादवानां मध्ये वासुदेवः= वसुदेवापत्यं पुमान् कृष्णोऽहमस्मि, पाण्डवानां=पाण्डुपुत्राणां मध्ये धनञ्जयः=धनजिदर्जुनोऽहमस्मि। अपि=तथा, मुनीनां=वेदार्थमननशीलानां जैमिनिप्रभृतीनां मुनीनां मध्ये, व्यासः=वेदव्यासः कृष्णद्वैपायनो मुनिरहमस्मि, तथा, कवीनां=क्रान्तदर्शिनां पण्डितानां कविरुशना= क्रान्तदर्शी दीर्घदर्शी भृगुपुत्रो दैत्यगुरुः शुक्रोऽहमस्मीत्यर्थः ॥ ३७ ॥

"दण्डो दमयतामस्मि, नीतिरस्मि जिगीषताम्।
मौनं चैवास्मि गुह्यानां, ज्ञानं ज्ञानवतामहम्"॥३८॥

अर्थः—दमयतां=दमनकर्तॄणाम् अदान्तान् उत्पथवर्तिनो जनान् दण्डेन पथि प्रवर्तयतां, दण्डयतां, सम्बन्धी, दण्डः=दमनहेतुर्दण्डोऽहमस्मि, दमनं निग्रहः, जिगीषतां=जेतुमिच्छतां सम्बन्धिनी नीतिः= सामदानदण्डभेदलक्षणा नीतिरहमस्मि। च=तथा, गुह्यानां=रहस्यानां गोप्यानां, प्रकाशानर्हाणामर्थानाम्, एव=निश्चयेन मौनं=गोपनोपायो, वाचोयमस्तूष्णीम्भावोऽवचनमहमस्मि, तथा ज्ञानवतां=ज्ञानिनां ज्ञानं= सम्यग् ज्ञानमहमस्मीत्यर्थः ॥ ३८ ॥

"यच्चापि सर्वभूतानां, बीजं तदहमर्जुन!।
न तदस्ति विना यत् स्यात्, मया भूतं चराचरम्"॥३९

अर्थः—अर्जुन=हे अर्जुन! यच्चापि=यदपि च, सर्वभूतानां= सर्वेषां भूतानां चराणामचराणां जंगमानां स्थावराणां, बीजं=निदानम् उत्पत्तिकारणं, तत्=तदपि, अहम्=अहमेवास्मि। न=नैव, चराचरं= चरं चाचरं च किञ्चित्, तद्=अदो भूतमस्ति, यद् मया विना=मयेश्वरेण

कारणेन विना, मदीश्वरात् कारणादृते, स्यात् = भवेत्, सर्वेषां भूतानां जडचेतनानामहमेवेश्वरोऽस्मि बीजं कारणमित्यर्थः ॥३९॥

"नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप!।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया" ॥४०॥

अर्थः—परन्तप=हे शत्रुतापन ! मम=ईश्वरस्य मम, दिव्यानाम्= अलौकिकीनामद्भुतानां, विभूतीनां = विविधभवनानां विविधैर्भावैः स्थितीनाम्, अन्तः = समाप्तिरियत्ता नास्ति = न विद्यते । एष तु= विभूतिप्रवचनस्य व्यवहितत्वं तुना व्यवच्छिद्यते, अयं तु, अव्यवधानेनोक्त-पूर्वस्तु, विभूतेः=विविधभवनस्य वैभवस्य, विस्तरः=विस्तारो व्यासः, उद्देशतः=नाममात्रतः संक्षेपतः, प्रोक्तः=प्राधान्येनोक्तः कथितः, मया= ईश्वरेण मयकेत्यर्थः ॥ ४० ॥

अथानुक्तस्य विभूतिमात्रस्यावगत्यर्थं साधारणं विभूतिलक्षणमाह—

"यद् यद् विभूतिमत् सत्त्वं, श्रीमदूर्जितमेव वा ।
तत् तदेवावगच्छ त्वं, मम तेजोंऽशसम्भवम्" ॥४१॥

अर्थ—यद् यत् सत्त्वं=प्राणि, विभूतिमत्=पुत्र-पौत्र-धन-धान्यसमृद्ध्यादिनानाविधैश्वर्यं विभूतिस्तद्युक्तं, श्रीमद्=राज्यैश्वर्यं श्रीः, तया युक्तं, वा=अथवा, एव=निश्चयेन, ऊर्जितम्=ऊर्जं बलं शक्तिरुत्साहः उद्योगः, तत्समन्वितम्, आरम्भेषु सर्वेषूद्युक्तं, तत् तत्=अदोऽदः सत्त्वं प्राणि, एव=निश्चयेन, मम=ईश्वरस्य मम, तेजोंऽशसम्भवं=तेजसः प्रतापस्य शक्तेरंशेन सम्भवो जन्म यस्य, तत् सर्वं मत्तेजोंऽशसम्भूतं त्वमवगच्छ= अवेहि, जानीहित्यर्थः ॥ ४१ ॥

अथोपसंहरन्नाह—

"अथवा बहुनैतेन किं ज्ञातेन तवार्जुन!।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" ॥४२॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥१०॥

अर्थः—अथवा=यद्वा, अर्जुन=हे अर्जुन! एतेन=अनेन, बहुना=विस्तरेण, पृथक् पृथक्, ज्ञातेन=अवगतेन विभूतिजातेन, तव=ते, किं=किं कार्यम्, पश्य! इदम्=एतत्, कृत्स्नं=सकलं, निःशेषं, जगत्=जंगमं स्थावरं विश्वं भुवनम्, एकांशेन=एकावयवेन, सर्वभूतात्मकेनैकेन पादेन, यत्रेदमाम्नायते "पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि" (ऋ० १०।९०।३) इति, विष्टभ्य=विधृत्य, सस्तंभ्य, स्थितः=द्योतनात्मके स्वे रूपेऽवस्थितोऽहमस्मीत्यर्थः ॥४२॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्ये दशमोऽध्यायः ॥१०॥

---

# "अथैकादशोऽध्यायः" ।

दशमेऽध्यायेऽर्जुनेन प्रार्थितो भगवानात्मयोगज्ञप्तिहेतुभूताः योगजाः अनेका विभूतीः प्राधान्येनाख्यत्, समाप्तौ च कृतस्नमिदं जगदेकांशेन विष्टभ्य स्थितोऽहमित्यचकथत्, तदुपश्रुत्य विश्वस्य चराचरस्य जगतो विष्टम्भकं विधारकमैश्वरं विश्वात्मकं रूपं द्रष्टुकामोऽर्जुनः प्रागुक्तमभिनन्दन्नाह चतुर्भिः—

"अर्जुनः उवाच" ।

"मदनुग्रहाय परमं, गुह्यमध्यात्मसंज्ञितम् ।
यत् त्वयोक्तं वचस्तेन, मोहोऽयं विगतो मम" ॥१॥

अर्थः—मदनुग्रहाय=ममानुग्रहार्थं, परमम्=उत्कृष्टं, गुह्यं=गोप्यं, रहस्यम्, अध्यात्मसंज्ञितम्=आत्मानं परमात्मानमधिकृत्य स्थितमध्यात्मं, सा संज्ञा संजाताऽस्येति व्युत्पत्तेराध्यात्मनामकं यद् वचः=वचनं, वाक्यं, त्वयोक्तम्=अवाचि, तेन=तेन वचसा, मम=मेऽयम्=एष युद्धवेलायामुपस्थितो मोहः=स्वबन्धुविषयो हन्तृहन्तव्यलक्षणश्चित्तविभ्रमोऽविवेको मिथ्याप्रत्ययो विगतः=वीतो विनष्ट इत्यर्थः ॥१॥

"भवाप्ययौ हि भूतानां, श्रुतौ विस्तरशो मया।
त्वत्तः कमलपत्राक्ष ! माहात्म्यमपि चाव्ययम्" ॥२॥

अर्थः—कमलपत्राक्ष = हे कमलपत्रवद् विशालनेत्र ! कमलस्य पद्मस्य पत्रे इव विशाले विस्तीर्णे अक्षिणी नेत्रे यस्येति तद्व्युत्पत्तेः, त्वत्तः=त्वत् सकाशात्, भूतानां = जडचेतनानां सर्वेषां भूतानां, हि= प्रसिद्धौ, भवाप्ययौ = भवः उत्पत्तिः, अप्ययः प्रलयः, तौ उत्पत्तिप्रलयौ, मया = अर्जुनेन मयका, विस्तरशः = विस्तरेण श्रुतौ = अश्रावि षाताम्। च = तथा, अव्ययम् = अक्षयं, क्षयो विनाशस्तद्रहितं, माहात्म्यं= महात्मनस्तव भावो निरतिशयैश्वर्यलक्षणो योगोऽपि श्रुतोऽश्रावित्यर्थः॥२॥

"एवमेतद् यथाऽऽत्थ त्वमात्मानं परमेश्वर !।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम !" ॥३॥

अर्थः-परमेश्वर=हे परमैश्वर्यवन् ! यथा=येन प्रकारेण, त्वं=वासुदेवस्त्व-मात्मानं=स्वम्, आत्थ=ब्रवीषि, सर्वजगदाधारं कथयसि, वदसि, एवं=तथा, सत्यम्, एतद्=इदं तव कथनं वचो यद्यपि, तथापि पुरुषोत्तम=हे पुरुषाणा-मुत्कृष्टतम ! अहं, ते = तव, ऐश्वरम् = ऐश्वर्यसम्पन्नं, सकलैश्वर्योपेतं, रूपं=विश्वाधारं विश्वात्मकं रूपं द्रष्टुमिच्छामि=दिदृक्षामीत्यर्थः।

"मन्यसे यदि तच्छक्यं, मया द्रष्टुमिति प्रभो!।
योगेश्वर ! ततो मे त्वं, दर्शयात्मानमव्ययम्" ॥४॥

अर्थः—प्रभो=हे समर्थ ! तद्=अदो विश्वाधारभूतं विश्वात्मकं रूपं, मया=अर्जुनेन मयका, द्रष्टुं=लोकितुमीक्षितुं, शक्यं=योग्यं, पार्य-मिति = एवं, यदि = चेद्, मन्यसे=जानीषे, बुध्यसे, ततः=तर्हि, योगेश्वर= हे योगमायेश्वर! मे=मम, मह्यं वा, अव्ययम्=अक्षयं नित्यम्, आत्मानं= विश्वाधारभूतं विश्वात्मकं स्वं, दर्शय=प्रार्थनायां लोट्, ईक्षय, दृष्टिविषयं कारयेत्यर्थः॥ ४॥

अथैवं प्रार्थितो भगवान् स्वकमद्भुतं विश्वात्मकं रूपं दिदर्शयिषुरर्जुनं तावदाश्वसायन्नाह चतुर्भिः—

" श्रीभगवानुवाच " ।

"पश्य मे पार्थ! रूपाणि, शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि, नानावर्णाकृतीनि च" ॥५॥

अर्थः—पार्थ=हे पृथापुत्र ! मे=मम, शतशः=शतानि, अनेकानि, अथ=तथा, सहस्रशः=सहस्राणि, बहूनि, असंख्यातानि, नानाविधानि=अनेकप्रकाराणि, च=तथा, नानावर्णाकृतीनि=वर्णाः शुक्लकृष्णादयः, आकृतयः आकाराः अवयवसन्निवेशविशेषाः, ते नानाऽनेकेऽन्योन्य-विलक्षणाः येषां रूपाणां स्वरूपाणां, तानि नानावर्णाकाराणि, दिव्यानि=दिविभवानि अलौकिकानि, अद्भुतानि, आश्चर्यमयानि, रूपाणि=स्वरूपाणि पश्य=निरीक्षस्व, अवलोकयेत्यर्थः ॥ ५ ॥

"पश्यादित्यान् वसून् रुद्रान्, अश्विनौ मरुतस्तथा।
बहून्यदृष्टपूर्वाणि, पश्याश्चर्याणि भारत !" ॥६॥

अर्थः—भारत=हे भरतवंशोद्भव ! आदित्यान्=अदितिपुत्रान् सूर्यान् द्वादश "पञ्चपादं पितरं द्वादशाकृतिम्" ( ऋ० १।१६४।१२) इति मन्त्रवर्णात्, वसून्=वासहेतून्, अग्न्यादीनष्टौ देवान्, रुद्रान्=द्युपुत्रान् प्रचण्डतापरूपान्, मरुदुत्पादकान्, एकादशसंख्याकान् रुद्र-देवान्, अश्विनौ=द्यावापृथिव्यौ "इमे वै द्यावापृथिवी प्रत्यक्षमश्विनौ" (शत० ४ । १ । ५ । १६ ) इति श्रुतेः, तथा मरुतः=सप्तसप्तगणान् " सप्तगणाः वै मरुतः " ( तै० सं० २ । ३ । १ ) " सप्त सप्त वै मारुतोगणः" ( शत० ५ । ४ । ३ १७) इत्यादिश्रुतिभ्यः, वृष्ट्यावहान् मानसूनेतिभाषितान्, "उदीरयथा मरुतः ! समुद्रतो यूयं, वृष्टिं वर्षयथा पुरीषिणः ! । न वो दस्राः ! उपदस्यन्ति धेनवः,, शुभं यातामनु रथाः अवृत्सत " ( ऋ० ५।५५।५ ) इति मन्त्रवर्णात् मरुदाख्यान् वायुदेवान्, तथा, बहूनि=अनेकानि, अदृष्टपूर्वाणि=त्वयका, त्वेत्तो

वाऽन्येन केनचित्,पूर्वं न दृष्टानि, प्राक् नावलोकितानि, आश्चर्याणि= आश्चर्यमयानि, अद्भुतानि, पश्य=लोचयेत्यर्थः ॥ ६ ॥

"इहैकस्थं जगत् कृत्स्नं, पश्याद्य सचराचरम्।
मम देहे गुडाकेश ! यच्चान्यद् द्रष्टुमिच्छसि" ॥७॥

अर्थः—गुडाकेश=हे निद्राजित्! इह=अस्मिन्, मम=मामके, देहे=शरीरे, एकस्थम्=एकस्मिन् प्रदेशेऽवस्थितं, सचराचरं=सह चरेणाचरेण च वर्तमानं,स्थावरजंगमसर्वभूतसहितं,कृत्स्नं=समस्तं,जगत्= विश्वम्,अद्य=इदानीम्,अधुनैव,पश्य=निरीक्षस्व। च=तथा, यदन्यद्= अपरं जयपराजयवृत्तं द्रष्टुमिच्छसि=दिदृक्षसि, तदपि पश्येत्यर्थः॥७॥

"न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः, पश्य मे योगमैश्वरम्" ॥८॥

अर्थः—तु=परन्तु, अनेनैव=अन्ययोगव्यवच्छेदोऽवधारणार्थः, एतेनैव प्राकृतेन लौकिकेन,स्वचक्षुषा=स्वकीयेन नेत्रेण,मां=विश्वरूपधरं मां, द्रष्टुं=लोकितुं न शक्यसे=शक्नोतेर्दैवादिकः श्यन्, न शक्ष्यसे, न समर्थयिष्यसे,समर्थो न सम्पत्स्यसे, अतस्ते=तुभ्यं, दिव्यं=दिव्यरूपदर्शनक्षमम्, अप्राकृतमलौकिकं चक्षु=नेत्रं, ददामि=प्रयच्छामि, तेन दिव्येन चक्षुषा, मे=मम, ऐश्वरम्=ईश्वरसम्बन्धिनं योगम्= अयोगयोगम्,अघटनघटनं,निरतिशयसामर्थ्यं, पश्य=लोकयेत्यर्थः॥८॥

ननु तदनु किं जातमिति पृष्टः संजयो धृतराष्ट्रमाह षड्भिः—

"सञ्जय उवाच"।

"एवमुक्त्वा ततो राजन् ! महायोगेश्वरो हरिः।
दर्शयामास पार्थाय परमं रूपमैश्वरम्" ॥९॥

अर्थः—राजन्=हे राजेन्द्र ! एवम्=अमुना प्रकारेण, उक्त्वा= उदित्वा, ततः=तत्पश्चात्, तदनन्तरं, महायोगेश्वरः=योगो योगमाया, ईश्वरः स्वामी, महाँश्चासौ योगमायास्वामी, हरिः=साधूनां दुःखस्य हर्ता,पार्थाय=पृथापुत्राय,ऐश्वरम्=ईश्वरसम्बन्धि,परमं=प्रकृष्टं,दिव्यं, रूपं=विश्वरूपं,विश्वात्मकं स्वरूपं,दर्शयामास=दर्शयाम्बभूवेत्यर्थः ॥९॥

अथैश्वरं रूपं विशिनष्टि द्वाभ्याम्—

**"अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।**
**अनेकदिव्याभरणं, दिव्यानेकोद्यतायुधम्" ॥१०॥**

अर्थः—अनेकवक्त्रनयनम्=अनेकानि वक्त्राणि मुखानि,नयनानि नेत्राणि चक्षूंषि च यस्मिन्, तत्-नानामुखनेत्रम्, अनेकाद्भुतदर्शनम्=अनेकानामद्भुतानां विस्मयहेतूनां दर्शनं यस्मिन्,तदनेकाश्चर्यमयदर्शनम, अनेकदिव्याभरणम्=अनेकानि नानाविधानि दिव्यानि दिवि भवानि, लोकविलक्षणानि, आभरणानि भूषणानि यस्मिन्. तदनेकदिव्यभूषणं, दिव्यानेकोद्यतायुधं=दिव्यान्यनेकानि नानाविधानि,उद्यतानि उद्धृतानि आयुधानि शस्त्राणि यस्मिन्, तदनेकोद्धृतशस्त्रम ॥१०॥

**"दिव्यमाल्याम्बरधरं, दिव्यगन्धानुलेपनम्।**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम्" ॥११॥**

अर्थः—दिव्यमाल्याम्बरधरं=दिव्यान्यलौकिकानि माल्यानि, दिव्यानामलौकिकानां पुष्पानां,दिव्यानां रत्नानां च मालाः, अम्बराणि वस्त्राणि च दिव्यानि,धारयति,ध्रियन्ते वा येन, तद् दिव्यमालावस्त्रधरं, दिव्यगन्धानुलेपनं=दिव्यं गन्धानुलेपनं यस्य तद् दिव्यगन्धानुलेपनकम्। सर्वाश्चयमयं=स्वार्थे मयट्, सर्वमशेषमाश्चर्यात्मकं, देव=दीव्यमानं प्रकाशमानं, द्योतमानं, दीव्यते प्रकाशते, इति तद्व्युत्पत्तेः, प्रकाशो दीप्तिर्द्योतनं भाः इत्यनर्थान्तराम, अनन्तम्=अपरिछिन्नं, विश्वतोमुखं=विश्वतः सर्वतो मुखानि यस्य तत् सर्वदिग्वर्तिमुखं, रूपं दर्शयामासेत्यर्थः ॥११॥

अथ भगवतो विश्वरूपस्य दीप्तेर्निरुपमत्वमाह—

**"दिवि सूर्यसहस्रस्य भवेद् युगपदुत्थिता।**
**यदि भाः सदृशी सा स्याद्, भासस्तस्य महात्मनः" १२**

अर्थः—यदि=चेद्, दिवि=आकाशे, सूर्यसहस्रस्य=सूर्याणां सहस्रं, सूर्यसहस्रं, तस्यापरिमितसूर्यसमूहस्य, युगपदुदितस्य, युगपदुत्थिता=समकालोदिता, भाः प्रभा प्रकाशो दीप्तिर्भवेत्=स्यात्,

सम्भावनायां लिङ्, तदा, सा=असौ युगपदुत्थिता सूर्यसहस्रस्य भाः, तस्य=अमुष्य, महात्मनः=विश्वरूपस्य भगवतो भासः=दीप्तेः प्रकाशस्य सदृशी=तुल्या स्याद्=भवेत् । न दिवि सूर्यसहस्रम् उदियात्, न तद्भाः महात्मनस्तस्य भासः सदृशी स्यादित्यर्थः ॥१२॥

ननु ततः किं वृत्तमित्यपेक्षायामाह सञ्जयः—

**"तत्रैकस्थं जगत् कृत्स्नं, प्रविभक्तमनेकधा ।**
**अपश्यद् देवदेवस्य शरीरे पाण्डवस्तदा" ॥१३॥**

अर्थः—तदा=विश्वरूपप्रदर्शनवेलायां, पाण्डवः=पाण्डुपुत्रोऽर्जुनः, तत्र=तस्मिन् विश्वरूपे, देवदेवस्य=देवानां देवस्य हरेः, शरीरे=देहे, एकस्थम्=एकस्मिन् प्रदेशे स्थितम्, अनेकधा=अनेकैर्देवमनुष्यादिभिः प्रकारैः, प्रविभक्तं=प्रविभागेन भेदेन स्थितं, पृथक् पृथगवस्थितं, कृत्स्नं=समस्तं, जगत्=चेतनाचेतनात्मकं जगत, अपश्यत्=अलोकयदित्यर्थः ॥१३॥

ननु दर्शनतः पश्चादर्जुनः किमकरोत् ? तत्राह—

**"ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।**
**प्रणम्य शिरसा देवं, कृताञ्जलिरभाषत" ॥१४॥**

अर्थः—ततः=तस्माद् दर्शनादनन्तरं, विस्मयाविष्टः=आश्चर्यधीर्विस्मयः, तेनाविष्टो युक्तो व्याप्तो, हृष्टरोमा=हृष्टान्युत्पुलकितानि रोमाणि लोमानि तनुरुहाणि यस्य, स उत्पुलकिततनुरुहः, रोमाञ्चितगात्रः, सः=असौ, धनञ्जयः=धनजिदर्जुनः, देवं=देवाधिदेवं भगवन्तं विश्वरूपं, शिरसा=मस्तकेन भूमिलग्नेन, प्रणम्य=प्रकर्षेण भक्तिश्रद्धातिशयेन नत्वा, नमस्कृत्य, कृताञ्जलिः=कृतो विहितोऽञ्जलिः करसम्पुटो येन, स संपुटीकृतहस्तयुगलोऽभाषत=व्याकशास्तेत्यर्थः ॥१४॥

ननु किमभाषतार्जुनः ? तत्राह सप्तदशभिः—

"अर्जुन उवाच" ।

**"पश्यामि देवांस्तव देव! देहे सर्वांस्तथा भूतविशेषसङ्घान्**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान्"**

अर्थः—देव=हे द्योतमानानां द्योतमान ! तव=ते, देहे=विश्वरूपेऽस्मिन् शरीरे, सर्वान्=समग्रान्, देवान्=आदित्यरुद्रवस्वादिकान् सुरान्, तथा भूतविशेषसङ्घान् = भूतविशेषाणां प्राणिभेदानां स्थावराणां जङ्गमानां च नानासंस्थानानां सङ्घान् समूहान्, ईशं = सर्वेषां देवानां भूतविशेषसङ्घानां चेशितारं, नियन्तारं, कमलासनस्थं=कमलवद् विपुलं विस्तीर्णमासनं महत्तत्वं, तत्र पुरुषात्मना देहिरूपेण स्थितं, ब्रह्माणं=प्रथमजं हिरण्यगर्भाख्यं परमेष्ठिनं पितामहं "ब्रह्मा देवानां प्रथमः सम्बभूव, विश्वस्य कर्ता भुवनस्य गोप्ता"( मुं० उ० १।१।१ )"योब्रह्माणं विदधाति पूर्वम्" ( श्वे० उ० ६।१८ ) " हिरण्यगर्भं जनयामास-पूर्वम् " ( श्वे० उ० ३।४ ) इत्यादिश्रुतिभ्यः, च=तथा, सर्वान्= समस्तान्, ऋषीन्=मन्त्रद्रष्टो वासिष्ठादीन् महर्षीन्, च=तथा, दिव्यान्= दिविभवान् लोकेऽदृष्टचरान्, अलौकिकान्, उरगान्=शेषवासुकिप्रभृतीन् सर्पान्, पश्यामि=लोकयामि, प्रत्यक्षमुपलभे, इत्यर्थः ॥१५॥

"अनेकबाहूदरवक्त्रनेत्रं, पश्यामि त्वा सर्वतोऽनन्तरूपम्। नांतं न मध्यं न पुनस्तवादिं, पश्यामि विश्वेश्वर! विश्वरूपः"

अर्थः—विश्वेश्वर=हे विश्वस्वामिन् !, विश्वरूप=हे सर्वरूप ! अनेकबाहूदरवक्त्रनेत्रं=बाहवोऽनेके, उदराणि, वक्त्राणि, नेत्राणि चानेकानि, यस्य, तमनन्तभुजजठरमुखनयनम्, अनन्तरूपम्=अनन्तान्यनेकानि रूपाणि स्वरूपाणि यस्य, तमनेकरूपं, त्वा=त्वां, सर्वतः=सर्वत्र, पश्यामि=लोकयामि, न पुनः=भूयः, तव=ते, आदिम्=आरम्भं, न मध्यं= न मध्यभागं, नान्तम्=अवसानं, समाप्तिं, पश्यामि=लोकयामि, निरीक्षेऽहमित्यर्थः ॥ १६ ॥

"किरीटिनं गदिनं चक्रिणं च, तेजोराशिं सर्वतो-दीप्तिमन्तम् । पश्यामि त्वा दुर्निरीक्ष्यं समन्ताद्-दीप्तानलार्कद्युतिमप्रमेयम्" ॥ १७ ॥

अर्थः—किरीटिनं=किरीटं मुकटं शिरोभूषणं, यस्यास्ति, तं मुकटवन्तं, गदिनं=गदा हस्ते यस्यास्ति, तं गदावन्तं, च=तथा, चक्रिणं=

चक्रं करे यस्यास्ति,तं चक्रवन्तं, सर्वतोदीप्तिमन्तं=समन्ततोद्युतिमन्तं, प्रभावन्तं, तेजोराशिं=दीप्तिपुञ्जं, दुर्निरीक्ष्यं=दुःखेन निरीक्षितुं योग्यं, निरीक्षणानर्हम्,अप्रमेयम्=इत्थमर्यमिति प्रमातुमध्यवसातुं निश्चेतुमशक्यं, दीप्तानलार्कद्युतिं = दीप्तयोर्जाज्वल्यमानयोरनलार्कयोरग्निसूर्ययोर्द्युतिरिव द्युतिर्दीप्तिः प्रकाशो यस्य, तं जाज्वल्यमानाग्निसूर्यप्रभं, त्वा=त्वां समन्तात्=सर्वतः, पश्यामि=लोचयामीत्यर्थः ॥ १७ ॥

**"त्वमक्षरं परमं वेदितव्यं,त्वमस्य विश्वस्य परं निधानम् ।**
**त्वमव्ययः शाश्वतधर्मगोप्ता,सनातनस्त्वं पुरुषो मतो मे"**

अर्थः—त्वं=त्वकं वेदितव्यं=मोक्षार्थिभिर्ज्ञातव्यं,परमम्=उत्कृष्टम्, अक्षरम्=अविनाशि ब्रह्मासि,त्वमस्य=एतस्य,विश्वस्य=समस्तस्य चराचरस्य जगतः,परं=प्रकृष्टं,निधानं=निधिः, निक्षेपभवनं,जन्मप्रलयोरिव स्थितेः स्थानं, त्वमव्ययः=व्ययो विनाशस्तद्रहितो नित्यः, शाश्वतधर्मगोप्ता=शश्वद्भवः शाश्वतो नित्यः,धर्मः=धारयितव्यः सर्वेषां प्राणिनाम्, अभ्युदयनिःश्रेयसहेतुः कर्मयोगाख्यो वैदिको धर्मः, तस्य नित्यस्य धर्मस्य गोप्ता रक्षिता,त्वं सनातनः=चिरन्तनोऽनादिः,पुरुषः=परः पुरुषो, मे=मम, मतः=अभिमतोऽभिप्रेतो निश्चित इत्यर्थः ॥ १८ ॥

**"अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् । पश्यामि त्वा दीप्तहुताशवक्त्रं, स्वतेजसा विश्वमिदं तपन्तम् ॥ १९ ॥**

अर्थः—अनादिमध्यान्तम्=आदिश्च मध्यं चान्तश्च न विद्यते यस्य, तमादिमध्यान्तरहितम्, अनन्तवीर्यं=न विद्यतेऽन्तोऽवसानं वीर्यस्य बलस्य शक्तेर्यस्य, तमनन्तबलमनन्तशक्तिम्,"यस्यामितानि वीर्य्या न राधः पर्येतवे (ऋ० ८। २४। २१) इति चेह मन्त्रवर्णः, अनन्तबाहुम्=अनन्ताः असंख्याताः बाहवो भुजाः यस्य,तमसंख्यातभुजं, शशिसूर्यनेत्रं, शशी चन्द्रः, सूर्यो रविः, तत्कल्पानि नेत्राणि नयनानि यस्य, तं चन्द्ररविनयनम् । दीप्तहुताशवक्त्रं=दीप्तो जाज्वल्यमानो हुताशोऽग्निर्वक्त्रं मुखं यस्य, तं जाज्वल्यमानाग्निमुखं, स्वतेजसा= तेजः प्रतापः, पराभिभवसामर्थ्यमित्यनर्थान्तरम्, स्वेन तेजसा प्रतापेन

प्रभावेण, इदम्=एतत् परिदृश्यमानं विश्वं=समस्तं चराचरं जगत्, तपन्तं=तापयन्तं संहर्तुमिव प्रवृत्तं, त्वां, पश्यामि=लोकयामि, चाक्षुषज्ञान-विषयीकरोमीत्यर्थः ॥ १९ ॥

**"द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः। दृष्ट्वाऽद्भुतं रूपमिदं तवोग्रं, लोक-त्रयं प्रव्यथितं महात्मन्!" ॥२०॥**

अर्थः—महात्मन्=हे महामनः! हे विशालहृदय! हे अक्षुद्रस्वभाव!, हि=निश्चयेन, द्यावापृथिव्योः=द्यौश्च, पृथिवी च, तयोः, द्युलोक-भूमिलोकयोः, इदम्=एतद्, अन्तरम्=अन्तरालम्, अन्तरिक्षं, त्वया=त्वयका, एकेन=एकलेन विश्वात्मना स्थितेन, विश्वरूपधरेण, व्याप्तं=पूरितं, च=तथा, सर्वाः=सर्वकाः समग्राः, दिशः=पूर्वपश्चिमाद्याः आशाः, व्याप्ताः=पूरिताः। तत्र=तेऽद्भुत=विस्मापकम्, इदम्=एतद्, उग्रं=रौद्रं, क्रूरं, भयङ्करं रूपं=स्वरूपं दृष्ट्वा=लोकित्वा, लोकत्रयं=लोकानां त्रयं, लोकत्रयस्थं प्राणिजातं, प्रव्यथितं=प्रकर्षेण पीडितम्, अत्यन्तं दुःखितं, भृशं भीतं जातमित्यर्थः ॥ २० ॥

**"अमी हि त्वा सुरसङ्घाः विशन्ति, केचिद् भीताः प्राञ्जलयो गृणन्ति। स्वस्तीत्युक्त्वा महर्षि-सिद्धसङ्घाः, स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः" ॥२१**

अर्थः—अमी=ते द्युस्थानाः, सुरसंघाः=सुराणां देवानामा-दित्यादीनां सङ्घाः समूहाः, भयाकुलाः सन्तो हि=निश्चयेनात्मरक्षणार्थं, त्वा=त्वां, विशन्ति=गुहामिव हिमाकुलाः प्राणिसङ्घाः प्रविशन्ति, शरणीकुर्वन्ति, केचित्=तेषां सुरसङ्घानां मध्ये केचिद्, भीताः=त्रस्ताः, प्राञ्जलयः=प्रबद्धाञ्जलयो, विहितसम्पुटकरयुगलाः, गृणन्ति=रक्षरक्षेति शब्दमुच्चाययन्ति। महर्षिसिद्धसङ्घाः=महर्षीणां मन्त्रद्रष्टॄणां वसिष्ठादीनां, तथा सिद्धानां ज्ञानसिद्धिं प्राप्तानां, ज्ञानिनां मुनीनां, सङ्घाः समूहाः "स्वस्ति" इत्युक्त्वा='स्वस्ति नो दिवो अग्न! पृथिव्याः, विश्वायुर्धेहि यजथाय देव! [illegible] !शंसैः"

(ऋ० १० । ७ । १) इत्यादिकैःस्वस्तिमन्त्रैः समस्तस्य जगतः स्वस्ति भूयादिति गद्गदया वाचा गदित्वा, भाषित्वा, पुष्कलाभिः=श्रेष्ठाभिः, अर्थपूर्णाभिः, भगवदनुरूपाभिः, स्तुतिभिः=स्तुतिलक्षणाभिर्गुणोत्कर्षप्रतिपादिकाभिः "परो मात्रया तन्वा वृधान ! न ते महित्वमन्वश्नुवन्ति । उभे ते विद्म रजसी पृथिव्याः विष्णोः देव ! त्वं परमस्य वित्से" (ऋ० ७ । ९९ । १) "न ते विष्णो ! जायमानो न जातो देव ! महिम्नः परमन्तमाप । उदस्तभ्ना नाकमृष्वं बृहन्तं; दाधर्थ प्राचीं ककुभं पृथिव्याः"(ऋ० ७।९९।२) इत्याद्याभिर्मन्त्रवाग्भिः, स्तुवन्ति=नुवन्ति, ईडयन्तीत्यर्थः ॥ २१ ॥

"रुद्रादित्याः वसवो ये च साध्याः, विश्वेऽश्विनौ मरुतश्चोष्मपाश्च । गन्धर्वयक्षासुरसिद्धसङ्घाः वीक्षन्ते त्वा विस्मिताश्च सर्वे" ॥२२॥

अर्थः—रुद्रादित्याः=एकादश रुद्राः, द्वादशादित्याः, वसवः= अष्टौ वसवः, च=तथा ये साध्याः=साधनीये संराधनीये सृष्टियज्ञे नियुक्ताः साध्यनामानो देवगणाः, विश्वे=विश्वेदेवसंज्ञकाः देवगणाः, अश्विनौ=नासत्यौ,द्यावापृथिव्यौ, च=तथा,मरुतः=एकोनपञ्चाशद्भेदाः, वृष्टयावहवायुविशेषाः मानसूननामानो मरुद्गणाः, च=तथा,ऊष्मपाः= उष्णान्नभुजः, उष्णमशीतं, क्षीरोदनादिरूपं पक्वमन्नं पिबन्ति, जेमन्ति, अभ्यवहरन्तीति तद्व्युत्पत्तेः,"यावदुष्णं भवेदन्नं, यावदश्नन्ति वाग्यताः। पितरस्तावदश्नन्ति, यावन्नोक्ताः हविर्गुणाः" (मनु० ३ । २३ । ९) इति स्मृतेश्च पितरः, पालकाः पितृपितामहादयो देवाः,यत्रेदमाम्नायते "देवाः ! भवत वाजिनः" ( ऋ० १ । २३ । १९ ) इति । च=तथा, गन्धर्वयक्षासुरसिद्धसङ्घाः=गन्धर्वाणां, यक्षाणाम्, असुराणां,सिद्धानां देवजातिभेदानां,सङ्घाः समूहाः,सर्वे एव=अयोगव्यवच्छेदोऽवधारणार्थः, समस्ताः एव, विस्मिताः=विस्मयमापन्नास्त्वा=त्वां वीक्षन्ते=किं करिष्यतीति चिन्तयमानाः निरीक्षन्ते, अनिमषन्तोलोकन्ते इत्यर्थः ॥२२

"रूपं महत् ते बहुवक्त्रनेत्रं, महाबाहो ! बहुबाहूरुपादम् । बहूदरं बहुदंष्ट्राकरालं, दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम्" ॥२३॥

अर्थः—महाबाहो=हे महाभुज ! ते=तव बहुवक्त्रनेत्रम्=अनेकमुखनयनं,बहून्यनेकानि,वक्त्राणि मुखानि,नेत्राणि नयनानि च यस्मिन्, इति तद्व्युत्पत्तेः,बहुबाहूरुपादं=बहवो बाहवो भुजाः,ऊरवः सक्थीनि, पादाश्चरणाः अङ्घ्रयश्च यस्मिन् रूपे,तदनेकभुजसक्थिचरणं,बहूदरं= बहून्यनेकान्युदराणि तुन्दानि यस्मिन्, तदनेकतुन्दं, बहुदंष्ट्राकरालं= बहुभिरनेकाभिर्दंष्ट्राभिर्दाढाभिः करालं विकरालं,विकृताकारं, महत्= बृहत् , आदिमध्यान्तहीनम्,अतिपरिमाणं,रूपं=स्वरूपं, दृष्ट्वा=लोकित्वा, लोकाः=सर्वे प्राणिनः, प्रव्यथिताः=प्रकर्षेणात्यन्तं पीडिताः, भृशं दुःखिताः,तथाऽहम्=अर्जुनोऽहं,प्रव्यथितः=नितान्तं दुःखित इत्यर्थः ॥२३॥

"नभःस्पृशं दीप्तमनेकवर्णं, व्यात्ताननं दीप्तविशालनेत्रम् । दृष्ट्वा हि त्वा प्रव्यथितान्तरात्मा, धृतिं न विन्दामि शमं च विष्णो !" ॥२४॥

अर्थः—विष्णो=हे सर्वव्यापिन् ! नभःस्पृशं=द्युस्पृशं, नभो दिवं स्पृशतीति तद्व्युत्पत्तेः,दीप्तं=प्रदीप्तं,ज्वलितम्, अनेकवर्णं=नानारूपम्, अनेके नाना,वर्णाः रूपाणि, यस्येति तद्व्युत्पत्तेः, व्यात्ताननं=विवृतमुखं, व्यात्तानि विवृतानि आननानि मुखानि यस्येति तद्व्युत्पत्तेः,दीप्तविशालनेत्रं=दीप्तानि प्रदीप्तानि,ज्वलितानि,विशालानि विस्तीर्णानि च नेत्राणि नयनानि यस्य, तं ज्वलितविपुलनयनं, त्वा=त्वां, दृष्ट्वा=ईक्षित्वा, हि= निश्चयेन, प्रव्यथितान्तरात्मा=प्रकर्षेणात्यन्तं व्यथितः, व्यथा पीडा,तां प्राप्तोऽन्तरात्मा मनो यस्य,सोऽतिपीडितमनाः,अहं,धृतिं=धैर्यं,शरीरेन्द्रियादिधारणसामर्थ्यं, च=तथा शमं=शान्तिं, मनःस्वास्थ्यं, न=नैव, विन्दामि=नाहं लभे, इत्यर्थः ॥ २४ ॥

"दंष्ट्राकरालानि च ते मुखानि, दृष्ट्वैव कालानलसंनिभानि। दिशो न जाने न लभे च शर्म, प्रसीद देवेश! जगन्निवास!" ॥२५॥

अर्थः—च=किञ्च, ते=तव दंष्ट्राकरालानि=दंष्ट्राभिर्दाढाभिः करालानि विकृताकाराणि, कालानलसंनिभानि=प्रलयकालाग्नितुल्यानि, कालः प्रलयः, तत्र लोकानां भूरादीनां दाहकोऽग्निः कालानलः, तत्सन्निभानि तत्तुल्यानीति तद्व्युत्पत्तेः, मुखानि=वदनानि, दृष्ट्वा=अवलोक्य, एव=निश्चयेन, दिशः=पूर्वाद्याः आशाः, न जाने=नाहं विवेकेनावबुध्ये, दिङ्मूढोऽहं नूनमवतिष्ठे, च=तथा, शर्म=सुखं, न लभे=नोपलभे, नाहं विन्दे, देवेश=हे ब्रह्मादिदेवानामीशितः! जगन्निवास==हे जगतां निवासस्थान! हे निखिलजगदाधार! प्रसीद=प्रसन्नो भव, यथाऽहं प्रकृतिमियां, स्वस्थो भवेयं, तथा कुर्वित्यर्थः ॥२५॥

"अमी च त्वा धृतराष्ट्रस्य पुत्राः, सर्वे सहैवावनिपालसङ्घैः। भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ, सहास्मदीयैरपि योधमुख्यैः" ॥२६॥

अर्थः—च=किञ्च, अमी=ते, सर्वे=समस्ताः, धृतराष्ट्रस्य पुत्राः=सूनवो दुर्योधनादयः, अवनिपालसङ्घैः=अवनिं पृथिवीं पालयन्ति रक्षन्ति ये, तेषां पृथिवीपालानां जयद्रथप्रभृतीनां भूपानां, सङ्घैः=समूहैः, सह=सार्धम्, एव=निश्चयेन त्वा=विश्वरूपं त्वां प्रति त्वरमाणास्ते तव वक्त्राणि विशन्तीत्यग्रेतनेन सम्बन्धः। भीष्मः=सेनापतिर्भीष्मः, द्रोणः=द्रोणाचार्यः, तथाऽसौ=स सूतपुत्रः=सूतपुत्रकः कर्णः, समुच्चयेऽपिः, अस्मदीयैः=आस्माकैर्योधमुख्यैः=योधेषु योद्धृषु भटेषु मुख्यैः प्रधानैः शिखण्डिधृष्टद्युम्नादिभिश्च सह=सार्धं, त्वां प्रति त्वरमाणास्ते तव वक्त्राणि मुखानि प्रविशन्तीति सम्बन्धः पूर्ववत् ॥ २६ ॥

"वक्त्राणि ते त्वरमाणाः विशन्ति, दंष्ट्राकरालानि भयानकानि। केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः" ॥२७॥

अर्थः—त्वरमाणाः=त्वां प्रति त्वरया गच्छन्तो धावन्तोऽमी दुर्योधनादयः सहावनिपालसङ्घैः,सहास्मदीयैश्च योधमुख्यैः सर्वे भीष्म-द्रोणादयो दंष्ट्राकरालानि=दंष्ट्राभिर्दाढाभिः करालानि विकृताकाराणि, भयानकानि=भयङ्कराणि, ते=तव, वक्त्राणि=व्यात्तानि कालाग्निसंनिभानि मुखानि, विशन्ति=प्रविशन्ति । केचित्=वेगेन वक्त्राणि ते प्रविशतां तेषां मध्ये केचित्,चूर्णितैः=चूर्णीकृतैरुत्तमाङ्गैः=शिरोभिर्दशनान्तरेषु=दन्तान्तरालेषु दन्तविवरेषु विलग्नाः=विशिष्य लग्नाः सलँग्नाः संश्लिष्टाः मांसमिव भक्षितं, संदृश्यन्ते=सम्यगसन्देहेनो-पलभ्यन्ते, लोक्यन्ते, इत्यर्थः ॥ २७ ॥

अथ तेषां सर्वेषां वक्त्रप्रवेशे दृष्टान्तमाह—

**"यथा नदीनां बहवोऽम्बुवेगाः, समुद्रमेवाभिमुखाः द्रवन्ति । तथा तवामी नरलोकवीराः विशन्ति वक्त्राण्यभिविज्वलन्ति" ॥२८॥**

अर्थः—यथा=यद्वत्,नदीनां=स्रवन्तीनां, गंगायमुनाशुतुद्रिविपाशा-सिन्धुनर्मदागोदाकृष्णाकावेरीब्रह्मपुत्रशोणसरयुप्रभृतीनां स्रोतस्वतीनां, बहवः=अनेके, नानामार्गप्रवृत्ताः, अम्बुवेगाः=जलप्रवाहाः,अभिमुखाः=आभिमुख्येन त्वरमाणाः, एव=निश्चयेन, समुद्रं=सागरं, द्रवन्ति=गच्छन्ति, प्रविशन्ति, तथा=तद्वत्, अमी=ते, नरलोकवीराः=नरलोको मनुष्यलोकः,तत्र वीराः शूराः,तव=ते,अभिविज्वलन्ति=अभितः सर्वतः, विशेषेण जाज्वल्यमानानि,प्रदेदीप्यमानानि,वक्त्राणि=मुखानि,वदनानि, विशन्ति=प्रविशन्तीत्यर्थः ॥२८॥

अथ सदृष्टान्तं प्रवेशप्रयोजनमाह—

**"यथा प्रदीप्तं ज्वलनं पतङ्गाः, विशन्ति नाशाय समृद्धवेगाः । तथैव नाशाय विशन्ति लोकास्त-वापि वक्त्राणि समृद्धवेगाः" ॥२९॥**

अर्थः—यथा=यद्वत्, समृद्धवेगाः=प्रचण्डवेगाः, तीव्रगतयः, पतङ्गाः=शलभाः,नाशाय=मरणाय,प्रदीप्तं=प्रज्वलितं, ज्वलनम्=अग्निं,

विशन्ति=प्रविशन्ति,तथा=तद्वत्,एव=निश्चयेन,समृद्धवेगाः=तीव्रजवाः, प्रचण्डगतयः, लोकाः=दुर्योधनादयः सर्वे जनाः, तव=ते, वक्त्राणि = मुखानि, नाशाय=मरणाय, विशन्ति=प्रविशन्तीत्यर्थः ॥२९॥

"लेलिह्यसे ग्रसमानः समन्ताद्, लोकान् समग्रान् वदनैर्ज्वलद्भिः । तेजोभिरापूर्य जगत् समग्रं, भासस्तवोग्राः प्रतपन्ति विष्णो !" ॥३०॥

अर्थः—विष्णो=हे सर्वव्यापिन् ! त्वं च समग्रान्=समस्तान् लोकान्=जनान् दुर्योधनादीन्, ज्वलद्भिः=अग्निवज्ज्वाज्वल्यमानैर्वदनैः= वक्त्रैः, समन्तात्=सर्वतो ग्रसमानः=अन्तर्गिलन्, प्रवेशयन्, लेलिह्यसे= पुनःपुनरास्वादयसे,ते = तव चोग्राः=घोराः तीक्ष्णाः असह्याः, भासः = दीप्तयः, तेजोभिः=प्रतापैः समग्रं=समस्तमशेषं जगत्=चराचरं स्थावर-जङ्गमं जगद्, आपूर्य = संव्याप्य, प्रतपन्ति = प्रकर्षेण तापयन्ति, सन्तापयन्ति, ग्रीष्मे सूर्यवत्, भूरितापं जनयन्तीत्यर्थः ॥३०॥

"आख्याहि मे को भवानुग्ररूपः, नमोऽस्तु ते देववर ! प्रसीद। विज्ञातुमिच्छामि भवन्तमाद्यं, नहि प्रजानामि तव प्रवृत्तिम्" ॥३१॥

अर्थः—आख्याहि=प्रब्रूहि, मे=मह्यं, भवानुग्ररूपः=क्रूरस्वरूपः, भयङ्कराकारः,कोऽस्ति,प्रलयाग्निर्वा कालो वा प्रलयकरः, ते=तुभ्यं,नमः= नमस्कारोऽस्तु=भवतु, देववर=हे सर्वेषु देवेषु श्रेष्ठ ! प्रसीद=प्रसादं कुरु, औग्र्यं क्रौर्यं जहिहि। भवन्तं=भवकन्तं,त्वाम्, आद्यम्=आ समन्तात् सर्वं जगदत्तुं प्रवृत्तं,सर्वस्य जगतः संहारकर्तृगणमादौ भवमग्रेसरं वा, विज्ञातुं=विशेषतो ज्ञातुमवगन्तुमिच्छामि = कामये, जिज्ञासे, हि = यस्मात्, तव=ते, प्रवृत्तिं=व्यापृतिं चेष्टां, न प्रजानामि=न प्रविविच्य जानामि, किं कर्तुं प्रवृत्तोऽसीति न प्रवेद्मीत्यर्थः ॥ ३१ ॥

अथार्जुनेन पृष्टो भगवान् त्रिभिरुत्तरमाह—

"श्रीभगवानुवाच"।

**"कालोऽस्मि लोकक्षयकृत् प्रवृद्धो, लोकान् समाहर्तुमिह प्रवृत्तः। ऋतेऽपि त्वा न भविष्यन्ति सर्वे, येऽवस्थिताः प्रत्यनीकेषु योधाः" ॥३२॥**

अर्थः—लोकक्षयकृत्=लोकानां जनानां दुष्कर्मणां क्षयस्य नाशस्य संहारस्य कर्ता,प्रवृद्धः=प्रकृष्टां वृद्धिं गतः प्रचण्डो रौद्राकृतिः,कालः= सर्वप्राणिसंहारकरः क्रियाशक्तिप्रधानः कालकालः परमेश्वरोऽस्मि = भवामि, इह = अस्मिन् काले, लोकान्=जनान् दुर्योधनादीन् दुष्टान् समाहर्तुं = संहर्तुं नाशयितुं प्रवृत्तः = व्यापृतोऽस्मि । ऋतेऽपि त्वा= त्वां विनाऽपि, यदि त्वं युद्धे न प्रवर्तिष्यसे, न त्वं योत्स्यसे, तदाऽपि, सर्वे=अमी सर्वे,न भविष्यन्ति=न वर्त्स्यन्ति,न जीविष्यन्ति,मरिष्यन्ति, विनंक्ष्यन्तीत्येतत्,के ते सर्वे? ये योधाः=योद्धारो भीष्मद्रोणकर्णमुख्याः, प्रत्यनीकेषु = प्रतिपक्षभूतेषु सैन्येषु, अवस्थिताः = स्वंस्वं स्थानमवरुध्य स्थिताः,सेनाढ्ये येऽन्योऽन्यस्य प्रमुखे प्रतिस्पर्धित्वेनाऽवहिताः इत्यर्थः॥३२॥

**"तस्मात् त्वमुत्तिष्ठ यशो लभस्व, जित्वा शत्रून्, भुंक्ष्व राज्यं समृद्धम् । मयैवैते निहताः पूर्वमेव, निमित्तमात्रं भव सव्यसाचिन्!" ॥३३॥**

अर्थः—तस्मात्=यस्माद् ऋतेऽपि त्वा न भविष्यन्ति सर्वे,तस्मात्, त्वमुत्तिष्ठ = उद्युज्यस्व स्थित्वा युध्यस्व,यशः = कीर्तिं, देवैरपि दुर्जयाः भीष्मद्रोणादयोऽर्जुनेना जायिषतेति ख्यातिं, लभस्व=विन्दस्व,शत्रून्= दुर्योधनादीन् अरीन्,जित्वा=निर्जित्य,समृद्धं=सर्वैश्वर्यसम्पन्नं निष्कण्टकं राज्यं=साम्राज्यं भुङ्क्ष्व=भोगं नयस्व, भोग्यतां प्रापयस्व । मयैव=मयका कालरूपेणेश्वरेणैव, नान्येनेत्यवधारणार्थः एते=इमे भीष्मद्रोणप्रमुखाः दुर्योधनादयः पूर्वमेव=युद्धप्रवृत्तेः प्रागेव,निहताः=निश्चयेन हताः अघानिषत,अमारिषत,प्राणैर्व्ययोजिषत,सव्यसाचिन्=हे वामकरबाणक्षेपिन्! सव्येन वामेन हस्तेन सचितुं शरान् बाणान् सन्धातुं क्षेप्तुं शील मस्ये

तद्व्युत्पत्तेः,हे हस्तद्वयेन योद्धुं समर्थ! त्वं निमित्तमात्रं=दुर्योधनादीनां हनने केवलं निमित्तं हेतुर्भव=एधीत्यर्थः ॥ ३३ ॥

अथ "निमित्तमात्रं भव" इत्युक्तमर्थं स्पष्टयति—

"द्रोणं च भीष्मं च जयद्रथं च कर्णं, तथाऽन्यानपि योधवीरान् । मया हतांस्त्वं जहि माऽव्यथिष्ठाः, युध्यस्व जेतासि रणे सपत्नान्" ॥३४॥

अर्थः—द्रोणं=द्रोणाचार्यं, च=तथा भीष्मं=पितामहं भीष्मं, च=तथा जयद्रथं=सिन्धुदेशराजानं जयद्रथं, च=तथा कर्णं= सूतपुत्रं कर्णं, तथाऽन्यानपि=समुच्चयेऽपिः,अपरांश्च भगदत्तसौमदत्ति-शल्यप्रभृतीन्, योधवीरान्=योद्धृशूरान्, मया=कालात्मना मयका हतान्=घातितान्, त्वं जहि=घातय,मारय,मा व्यथिष्ठाः=मा खिन्नाः, बन्धुविरहनिमित्तां पीडां मा गाः, तद्धेतुकं शोकं खेदं दुखं मा प्रापः, युध्यस्व=युद्धं कुरुष्व, संप्रहरस्व, रणे=युद्धे, सपत्नान्=शत्रून् दुर्यो-धनादीन्, जेतासि=जेष्यसीत्यर्थः ॥ ३४ ॥

अथ तदनु किं जातमिति धृतराष्ट्राशयं विद्वानाह संजयः—

" संजय उवाच " ।

"एतच्छ्रुत्वा वचनं केशवस्य,कृताञ्जलिर्वेपमानः किरीटी। नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य"

अर्थः—एतद्=इदं पूर्वोक्तं,केशवस्य=कृष्णस्य,वचनं=वाक्यं, श्रुत्वा=आकर्ण्य, वेपमानः कम्पमानः, किरीटी=मुकटवान्, कुन्त्याः पुत्रोऽर्जुनः, कृताञ्जलिः=सम्पुटीकृतकरयुगलः, नमस्कृत्वा=नमस्कृत्य, भूयः=पुनः, एव=निश्चयेन, भीतभीतः=त्रस्तादपि त्रस्तः, अति-भीतः, प्रणम्य=प्रकर्षेण नत्वा, नम्रीभूय, कृष्णं=केशवं, सगद्गदं= हर्षाधिक्येन, भयाधिक्येन वाऽस्पष्टशब्दोच्चारणहेतुः श्लेष्मणा कण्ठा-वरोधो नाम कण्ठविकारो गद्गदः,तेन सह वर्तते यत्, तत् सगद्गदम्, अस्पष्टशब्दं, यथा भवति तथाऽऽह=उवाचेत्यर्थः ॥ ३५ ॥

अथार्जुनो यदुवाच, तदाहैकादशभिः —

"अर्जुनः उवाच" ।

**"स्थाने हृषीकेश ! तव प्रकीर्त्या, जगत् प्रहृष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशो द्रवन्ति, सर्वे नमस्यन्ति च सिद्धसङ्घाः" ॥३६॥**

अर्थः—हृषीकेश=हे इन्द्रियाधीश ! स्थाने=अव्ययं, युक्तं, किं ? तव=ते प्रकीर्त्या=प्रकृष्टया कीर्त्या, तव महात्म्यस्य प्रकीर्तनेन, प्रकथनेन, जगत्=चराचरं जगत्, प्रहृष्यति=प्रनन्दति, प्रसादति, च=तथाऽनुरज्यते=अनुरज्यति, स्निह्यति, त्वद्गोचरमनुरागमुपैति, रक्षांसि=रक्षःप्रभृतीनि सर्वाणि, पापानि भूतानि, भीतानि=पापदण्डभयेन त्रस्तानि सन्ति, दिशः=अष्टौ दिशः, सर्वाः आशाः, द्रवन्ति=प्रद्रवन्ति, अभितो जङ्गमति, सर्वासु दिक्षु प्रतुतुरति, च=तथा, सर्वे=विश्वे, सिद्धसङ्घाः=सिद्धानां ज्ञानसिद्धिं प्राप्तानां कपिलादीनां मुनीनां, वसिष्ठादीनां मन्त्रदर्शिनामृषीणां च सङ्घाः समूहाः, नमस्यन्ति = नमस्कुर्वन्ति, तदेतत् सर्वं, स्थाने युक्तमित्यर्थः ॥ ३६ ॥

**"कस्माच्च ते न नमेरन् महात्मन् !, गरीयसे ब्रह्मणोऽप्यादिकर्त्रे । अनन्त ! देवेश ! जगन्निवास !, त्वमक्षरं सदसत् तत्परं यत्" ॥३७॥**

अर्थः—महात्मन्=हे विशालहृदय ! च=पुनः, कस्मात्=कुतो हेतोः, ते=तुभ्यं, गरीयसे=गुरुतराय, गुरूणां गुरवे, ब्रह्मणोऽपि=हिरण्यगर्भस्याप्यादिकर्त्रे = आदिभूताय कर्त्रे जनकाय प्रपितमहाय, सर्वे देवर्षिसिद्धसङ्घाः न नमेरन्=न नमेयुः, न नमस्येयुः । अनन्त=हे अन्तशून्य ! देवेश=हे देवेश्वर ! जगन्निवास=हे निखिलजगदाधार ! त्वमक्षरं=परमम् अक्षरं, त्वं सदसत्=सद् व्यक्तं कार्यम्, असद्=अव्यक्तं कारणम्, व्यक्तमव्यक्तं सर्वं त्वमेवासि, तत्परं=तस्मात् सतोऽसतः परं प्रकृष्टं, यत्=पुरुषाख्यं यद् ब्रह्मास्ति, तदपि त्वमसि भवसीत्यर्थः ॥३७॥

"त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् । वेत्ताऽसि वेद्यं च परं च धाम, त्वया ततं विश्वमनन्तरूप !" ॥३८॥

अर्थः—अनन्तरूप=हे अपरिच्छिन्नस्वरूप ! त्वम्, आदिदेवः=आदिभूतः सर्वस्य जगतः कारणभूतः स्रष्टा देवोऽसि, त्वं पुरुषः=सर्वत्र पूर्णः, पुरि ब्रह्माण्डशरीरे सर्वभूतशरीरे वाऽन्तरात्मना शेते वर्तते, इति तद्व्युत्पत्तेः, पुराणः=चिरन्तनोऽनादिरसि, त्वमस्य=एतस्य, विश्वस्य = सर्वस्य चराचरस्य जगतः, परं=प्रकृष्टं निधानं = निक्षेपाधिकरणं स्थितिस्थानमसि। त्वं वेत्ता=सर्वस्यास्य वेदनीयस्य विश्वस्य वेदिताऽसि, च=तथा, वेद्यं=वेदनार्हं यत्, तदपि त्वमसि भवसि, च = तथा, परं=प्रकृष्टं धाम=सद्म, ब्रह्मात्मको लोकः, परमं पदं विष्णोस्त्वमसि, त्वया= त्वयका, विश्वं=सर्वं जगत्, ततं=व्याप्तं, त्वं विश्वं भूत्वा वरीवृत्यसे, इत्यर्थः॥

" वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च । नमो नमस्तेऽस्तु सहस्रकृत्वः, पुनश्च भूयोऽपि नमो नमस्ते" ॥३९॥

अर्थः—वायुः=अनिलः, यमः=विवस्वत्पुत्रः कालः, अग्निः= अनलः, वरुणः=प्रचेताः, शशाङ्कः=चन्द्रमाः, प्रजापतिः=हिरण्यगर्भः, पितामहो ब्रह्मा, च=तथा प्रपितामहः = हिरण्यगर्भस्य ब्रह्मणोऽपि जनकत्वात् पितामहस्य पिता, त्वमसि । ते=तुभ्यं सहस्रकृत्वः= सहस्रवारं नमोनमः=नमस्कारो नमस्कारोऽस्तु=भवतु, पुनश्च= पुनरपि भूयोऽपि = सहस्रवारतोऽधिकमपि, ते=तुभ्यं, नमोनमोऽस्तु= भवतु, वीप्साऽऽदरार्था, भक्तिश्रद्धातिशयेन नमस्कारेषु तृप्तिमनश्नुवानो वारं वारं प्रणमति विश्वरूपधरं भगवन्तमित्यर्थः ॥ ३९ ॥

"नमः पुरस्तादथ पृष्ठतस्ते, नमोऽस्तु ते सर्वतः एव सर्व ! । अनन्तवीर्यामितविक्रमस्त्वं, सर्वं समाप्नोषि ततोऽसि सर्वः" ॥ ४० ॥

अर्थः—सर्व=हे सर्वरूप!,हे विश्वरूप! ते=तुभ्यं, पुरस्तात्=अग्रतः, अथ=तथा, पृष्ठतः=पश्चात्, नमः=नमस्कारोऽस्तु, न केवलं पुरस्तात् पश्चाद्वा, अपि तु सर्वत एव=अयोगव्यवच्छेदोऽवधारणार्थः,पुरस्तात् पश्चात्,उत्तरतो दक्षिणतोऽधस्तादुपरिष्टात्,सर्वास्वेवाशासु दिक्षु,ते= तुभ्यं, नमोऽस्तु=भवतु। अनन्तवीर्य!=हे अनन्तबल! त्वममितविक्रमः= अपरिमितपराक्रमोऽसि, त्वं सर्वं=समस्तं जगत्, समाप्नोषि=सम्यग-न्तर्बहिरेकेनात्मनाऽऽप्नोषि व्याप्नोषि यस्मात्, ततः=तस्मात् त्वं सर्वः= सर्वरूपोऽसि, विश्वरूपो भवसीत्यर्थः ॥ ४० ॥

अथ भगवन्तं क्षमापयति द्वाभ्याम् —

"सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण!हे यादव!हे सखेति। अजानता महिमानं तवेदं,मया प्रमादात् प्रणयेन वाऽपि"

"यच्चावहासार्थमसत्कृतोऽसि, विहारशय्यासन-भोजनेषु । एकोऽथवाऽप्यच्युत ! तत्समक्षं, तत् क्षामये त्वामहमप्रमेयम्" ॥४२॥

अर्थः—सखा=त्वं मम सखा, वयस्यः,समानवयाः,स्निग्धः,इति= एतद्, मत्वा=बुद्ध्वा,तव=तावकं,त्वदीयम्,इदम्=इमं,महिमानं=माहात्म्यं, महत्त्वम्,अजानता=न जानताऽविदता,मया=अर्जुनेन मयका,प्रमादात्= अनवधानात्, चित्तविक्षेपात्, वा=अथवा, अपिः समुच्चये, प्रणयेन च= प्रेम्णा स्नेहेन च,हे कृष्ण! हे यादव! हे सखे! सन्धिरार्षः, इति=एतद् यत् प्रसभं=हठेन,बलात्कारेणोक्तं=कथितं,तत्,क्षामये,इत्युत्तरेणान्वयः ॥४१॥ च=तथा,यद् अवहासार्थम्=अपहासार्थं, परिहासाय,परिहासस्य हेतोः, विहारशय्यासनभोजनेषु=विहारो विहरणं क्रीडा,शय्या शयनीयम्,आसनं सिंहासनपरिस्तरणादिषूपवेशनं,भोजनम् अशनं,विहारश्च,शय्या च, आसनं च, भोजनं च, तेषु, असत्कृतोऽसि=तिरस्कृतोऽवमानितोऽसि, एकः=एकलः, सखीन् विना रहसि स्थितः,अथवा=यद्वा तत्समक्षं=तेषां परिहसतां सखीनां सम्मुखे,अच्युत=हे सदा निर्विकार! सर्वदैकरस !, तत्=तदेतत् सर्वमपराधजातम्,अप्रमेयं=न प्रमातुं योग्यम्, अचिन्त्यं, त्वां=भवन्तं, क्षामये=क्षमापये, क्षमस्वेति प्रार्थये,इत्यर्थः ॥ ४२ ॥

"पिताऽसि लोकस्य चराचरस्य, त्वमस्य पूज्यश्च गुरुर्गरीयान् । न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव!" ॥४३॥

अर्थः—त्वमस्य=एतस्य, चराचरस्य=जंगमस्थावरस्य लोकस्य= प्राणिजातस्य, पिता=जनयिताऽसि=भवसि, च=तथा पूज्यः=पूजनीयः, महनीयः, गरीयान्=गुरुतरः, गुरुः=उपदेष्टॄणामुपदेष्टाऽसि = भवसि । त्वत्समः=तव सदृशः, त्वया तुल्यः, अन्यः=अपरः कश्चित्, लोकत्रयेऽपि= त्रिलोक्यामपि, नास्ति=नैव विद्यते, अप्रतिमप्रभाव=प्रभावः सामर्थ्यं शक्तिः, उपमा प्रतिमा, प्रतिमीयतेऽनयेति तद्व्युत्पत्तेः, हे अनुपमसामर्थ्य!, हे अपरिमितशक्ते!, अभ्यधिकः=त्वत्तोऽधिकः, कुतः=कुतो भवेत्, यस्य समः कश्चिदन्यो नास्ति, ततोऽधिकः कथं सम्भवेत्, इत्यर्थः ॥४३॥

"तस्मात् प्रणम्य प्रणिधाय कायं, प्रसादये त्वामहमीशमीड्यम् । पितेव पुत्रस्य सखेव सख्युः, प्रियः प्रियायाऽर्हसि देव! सोढुम्" ॥ ४४ ॥

अर्थः—तस्मात्=यस्मादस्य सर्वस्य त्वं पिता, पूज्यो, गुरूणां गुरुः, तस्मात्, प्रणम्य=प्रकर्षेण भक्तिश्रद्धातिशयेन नत्वा, नमस्कृत्य, कायं= शरीरं, प्रणिधाय=प्रकर्षेण नीचैर्धृत्वा, भूमौ दण्डवत् पातयित्वा, निपात्य, त्वामीड्यं=स्तुत्यम्, ईशम्=ईशितारं सर्वलोकनियन्तारम, अहं प्रसादये= अनुग्राहये, प्रसादोऽनुग्रहस्तं कारये, अनुगृह्णीष्वेति कामये, याचे । देव= हे देवाधिदेव ! इव=यथा, पिता = जनकः, पुत्रस्य=सूनोरपराधं सहते, क्षमते, इव=यथा, सखा व्यस्यः स्निग्धो मित्रं, सख्युः=मित्रस्यापराधं सहते क्षमते, यथा प्रियः=पतिः, प्रियायाः=सन्धिरार्षः, प्रेयस्याः पत्न्याः, पतिव्रतायाः जायायाः अपराधं सहते क्षमते, तथा त्वं ममापराधं, सोढुं= क्षन्तुमर्हसि=योग्योऽसीत्यर्थः ॥ ४४ ॥

"अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा, भयेन च प्रव्यथितं मनो मे । तदेव मे दर्शय देव! रूपं, प्रसीद देवेश ! जगन्निवास!"

अर्थ—देव=हे देवाधिदेव! अदृष्टपूर्वं=न दृष्टं पूर्वं प्राक् कदाचित्, सर्वथाऽपूर्वमित्येतद्, विश्वात्मकं रूपं, दृष्ट्वा=लोकित्वा, हृषितः=हृष्टस्तुष्टोऽस्मि=भवामि, हृष्यामि, च=तथा, भयेन=त्रासेन, अदृष्टपूर्वरूपस्य दर्शनादुत्पन्नया भीत्या, मे=मम, मनः=अन्तःकरणं, प्रव्यथितं=प्रकर्षेणात्यन्तं सञ्जातव्यथं, प्रपीडितं, नितान्तं दुःखितमस्ति, भृशं क्लिष्यते। तस्मात् देवेश=हे सर्वदेवेश्वर! जगन्निवास=हे निखिलजगदाधार! प्रसीद=अनुगृहाण, तदेव=अदः एव, प्राक्तनमेव, दृष्टपूर्वमेव, रूपं=स्वरूपं, मे=मह्यं, दर्शय=लोचय, मम दर्शनपदवीं प्रापयेत्यर्थः ॥ ४५ ॥

अथोक्तं तदेव रूपं विवृणोति—

"किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वा द्रष्टुमहं तथैव। तेनैव रूपेण चतुर्भुजेन, सहस्रबाहो! भव विश्वमूर्ते!" ॥४६॥

अर्थः—किरीटिनं=किरीटवन्तं, गदिनं=गदावन्तं, चक्रहस्तं=चक्रकरं, चक्रवन्तं, त्वा=त्वां, तथैव=पूर्वं यथा दृष्टोऽसि, तद्वदेव, द्रष्टुं=लोकितुमिच्छामि=वाञ्छामि, सहस्रबाहो=हे अनन्तभुज! विश्वमूर्ते=हे विश्वरूप! तेनैव=अमुनैव, दृष्टपूर्वेणैव, रूपेण=स्वरूपेण, सौम्याकारेण, चतुर्भुजेन=चतुर्भुजसंज्ञकेन, भव=आविर्भवेत्यर्थः।

चतुर्भुजः, इति भगवतो वासुदेवस्य संज्ञा, यथा पञ्चास्यः, इति मृगराजस्य सिंहस्य। संज्ञाः वैदिक्यः स्युर्लौकिक्यो वा भवेयुः, सर्वासु तासु योगजोऽर्थो न विवक्ष्यते। संज्ञानां सर्वासां स्वसंज्ञिगोचरप्रत्ययमात्रजननार्थत्वाभ्युपगमात्। संज्ञाः हि सर्वाः नियमेन स्वसंज्ञिगोचरप्रत्ययमात्रजननार्था अभ्युपगम्यन्ते। चेत्संज्ञासु तासु योगजोऽर्थो विवक्ष्येत, तदा "त्रिशिराः" इति संज्ञया त्वष्टुः पुत्रो मन्त्रदृक् त्रिशिरा ऋषिर्न प्रतीयेत नहि मन्त्रदृशस्तस्य त्रीणि शिरांसि सन्ति, सप्तवध्रिरिति संज्ञया चात्रिपुत्रो मन्त्रदृक् सप्तवध्रिर्ऋषिर्नाधिगम्येत, नहि मन्त्रदृशस्तस्य सप्तवध्रयः सन्ति, पञ्चास्यः, इति संज्ञया च मृगराजः सिंहो न ज्ञायेत, नहि तस्य मृगराजस्य पञ्चास्यानि सन्ति। यथा त्वष्टुः पुत्रस्य मन्त्रद्रष्टुर्ऋषेस्त्रिशिराः इति संज्ञा, यथा चात्रिपुत्रस्य मन्त्रद्रष्टुर्ऋषेः सप्तवध्रिरिति संज्ञा, यथा च मृगराजस्य सिंहस्य पञ्चास्यः इति संज्ञा, तथा भगवतो वासुदेवस्य

चतुर्भुजः, इति संज्ञा । त्रिशिरःसप्तवध्रिपञ्चास्यसंज्ञास्विव चतुर्भुज-संज्ञायामपि योगजार्थस्याविवक्षितत्वात् । नहि भगवतो वासुदेवस्य चत्वारो भुजाः आसन्, न वाऽर्जुनेन कर्हिचिदद्दर्शिषत । चेदसौ भगवतश्चतुरो भुजान् पूर्वमदर्शदिति मन्यते, तदा "किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वा द्रष्टुमहं तथैव" इति नाख्यत्, किन्तर्हि ? "किरीटिनं गादिनं चक्रहस्तं, त्वा पद्मिनं शङ्खकरं तथैव" इत्याचष्ट। नहि चतुर्भुजदर्शी भवन्नर्जुनः "पद्मिनं, शङ्खकरम्" इति विशेषणद्वयं परित्यज्य केवलं गदिनं चक्रहस्तमित्याख्यातुमर्हति । न च तादृक्षाख्यानाभावेऽर्जुनेन भगवतश्चत्वारो भुजाः पूर्वं प्रतिदिनमदर्शिषतेति वक्तुं पार्यते,विश्वसितुं वा केनचिदुत्सह्यते। को हि बुद्धिमान् भगवतो वासुदेवस्य चत्वारो बाहवोऽभूवन्, ताँश्चार्जुनो नित्यमद्राक्षीदिति विस्रम्भेत, को वाऽभ्यन्तर्दृष्टिः पण्डितो विश्वसेत् । यथा त्रिशिराः, सप्तवध्रिरिति वैदिकी संज्ञा,तथा त्रिशोकः, सप्तगुरिति वैदिकी संज्ञाऽप्युदाहार्या। पञ्चकर्णोऽष्टकर्णः,इत्यादिका लौकिक्यः संज्ञाः अपि भूरिशः उदाहर्तुं शक्यन्ते, ताः सर्वाः स्वयं प्रतिपत्तव्याः, विस्तरभयादत्र नोदाह्रियन्ते । श्रद्धाजडास्तु सर्वदा सर्वत्र करुणापात्रीभूताः आत्मविश्वासे च सर्वदा सर्वत्र स्वतन्त्रा इत्युदास्महे ॥ ४६ ॥

अथार्जुनेन प्रार्थितो भगवान् तं सान्त्वयन्नाह त्रिभिः ।

"श्री भगवानुवाच" ।

**"मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।**
**तेजोमयं विश्वमनन्तमाद्यं, यन्मे त्वदन्येन न दृष्टपूर्वम्"**

अर्थः—अर्जुन=हे अर्जुन ! मया=मयका, प्रसन्नेन=प्रसासद्यमानेन, भृशं प्रफुल्लितेन,त्वदनुग्रहबुद्धिना सता,इदम्=एतत् प्रत्यक्षं,परं=प्रकृष्टं, श्रेष्ठं, रूपं=स्वरूपम्,आत्मयोगात्=आत्मनः स्वस्य योगात् योगमायानाम्नोऽयोगयोगकरादद्भुतसामर्थ्यात्,तव=ते,दर्शितं=दर्शनविषयं गमितम् । कीदृशं रूपम् ? विश्वं=विश्वात्मकं, तेजोमयं=तेजःप्रायं, तेजोराशिम्, अनन्तम्=अन्तरहितम् ,अपरिच्छिन्नम्, आद्यम्=आदौ भवम् ,अनादिम्, यद्=यद् रूपं मे=मम, त्वदन्येन=त्वत्तो भिन्नेन केनचिदपरेण, न=नो दृष्टपूर्वम्=अवलोकितपूर्वं, न पूर्वमवालोकीत्यर्थः ॥ ४७ ॥

"न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः।
एवंरूपः शक्य अहं नृलोके, द्रष्टुं त्वदन्येन कुरुप्रवीर!" ४८

अर्थः—कुरुप्रवीर=हे कुरुषु प्रकृष्टवीर! न=नो, वेदयज्ञाध्ययनैः= वेदानामृगादीनां, यज्ञानां यज्ञविद्यानां ब्राह्मणानां कल्पसूत्राणां च, अध्ययनैः प्रतिदिनं पठनैः, न=नो, दानैः=धनधान्यादीनां प्रदानैः, च= तथा, न=नो, क्रियाभिः=अग्निहोत्रादिकाभिःक्रियाभिः, न=नो, उग्रैः= घोरैः, कायेन्द्रियशोषकैस्तपोभिः=कृच्छ्रादिनामकैस्तपःकर्मभिः, शक्यः= योग्यः, द्रष्टुं=लोकितुम, एवंरूपः=यथादर्शितरूपो विश्वरूपोऽहं=वासुदेवोऽ- हं, नृलोके=मनुष्यलोके, त्वदन्येन=त्वत्तोभिन्नेन केन चिदित्यर्थः ॥४८॥

"मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोर- मीदृङ् ममेदम् । व्यपेतभीः प्रीतमनाः पुनस्त्वं, तदेव मे रूपमिदं प्रपश्य" ॥४९॥

अर्थः—मम=मदीयम, ईदृक्=एतादृशं, यथादर्शितं तथाविधं, नानाबाहुवक्त्रादियुतं, घोरं=क्रूरं, भयङ्करम, इदम्=एतद्, रूपं=विश्वात्मकं रूपं स्वरूपं, दृष्ट्वा=ईक्षित्वा, ते=तव व्यथा=भयनिमित्ता पीडा, दुःखं, कष्टं, मा= माभूत्, च=तथा, विमूढभावः=विमूढत्वं, दुःखेनान्तःकरणस्य मनसो विवेकशून्यत्वं, व्याकुलत्वं, खिन्नत्वम, अप्रसन्नत्वं, मा=मा स्म भवत् । व्यपेतभीः=व्यपगतभयः, व्यपेता व्यपगता निवृत्ता भीः भयं त्रासो यस्येति तद्व्युत्पत्तेः, निवृत्तत्रासः, प्रीतमनाः=हृष्टचित्तः, प्रसन्नान्तःकरणः सन्, त्वं पुनः=भूयो, मे=मम, मदीयं, तदेव=अदः एव, पूर्वदृष्टमेव, इदम= एतत् किरीटयुतं, गदाकरं, चक्रहस्तं, रूपं=स्वरूपं, प्रपश्य=प्रकर्षेण यथेच्छं लोकयेत्यर्थः ॥ ४९ ॥

ननु तत्पश्चात् किं वृत्तमिति पृष्टः सञ्जयो धृतराष्ट्रमाह—

"सञ्जय उवाच" ।

"इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः । आश्वासयामास च भीतमेनं, भूत्वा पुनः सौम्यवपुर्महात्मा" ॥५०॥

अर्थः—इति=एवं, यथा पूर्वमुक्तं तथा, वासुदेवः=भगवान् श्रीकृष्णः, अर्जुनं=पाण्डुतनयमर्जुनम्, उक्त्वा=उदित्वा, तथा=यथा पूर्वमासीत् तथा, स्वकं=स्वकीयं, रूपं=द्विपादद्विभुजैकशिरोलक्षणं स्वरूपं, भूयः=पुनः, दर्शयामास=लोकयामास । च = तथा, महात्मा=महामनाः, विशालहृदयो भगवान् श्रीकृष्णः, पुनः=भूयः, सौम्यवपुः=अनुग्रशरीरः, प्रसन्नदेहः, शान्तात्मा, भूत्वा=वर्तित्वा, भीतं=विश्वरूपदर्शनेन त्रस्तम्, एनम्=एतमर्जुनम्, आश्वासयामास=सान्त्वयामास, मा भैषीरित्यादिभिर्बहुभिर्धैर्यवचनैः स्वस्थयामास, स्वस्थं चकारेत्यर्थः ॥५०॥

अथाश्वासितोऽर्जुनः प्राह—

"अर्जुन उवाच" ।

**"दृष्ट्वेदं मानुषं रूपं, तव सौम्यं जनार्दन!।**
**इदानीमस्मि संवृत्तः, सचेताः प्रकृतिं गतः" ॥५१॥**

अर्थः—जनार्दन=हे दुष्टजनमर्दन ! तव=तावकं त्वदीयम्, इदम्=एतत्, सौम्यम्=अक्रूरं, शान्तं, मनोहरं, मानुषं=मनुष्याकारं, रूपं=स्वरूपं, दृष्ट्वा=अवलोक्य, इदानीम्=अस्मिन् काले, सचेताः=चेतसा सह वर्तमानो निराकुलचित्तः, प्रसन्नमनाः, संवृत्तः=संजातोऽस्मि=भवामि, प्रकृतिं=स्वभावं स्वास्थ्यं च, गतः=प्राप्तोऽस्मीत्यर्थः ॥६१॥

अथ प्रकृतिं गतं दृष्ट्वाऽर्जुनं पुनराह्लादयन्नाह भगवान् चतुर्भिः—

"श्रीभगवानुवाच" ।

**"सुदुर्दर्शमिदं रूपं, दृष्टवानसि यन्मम ।**
**देवाः अप्यस्य रूपस्य, नित्यं दर्शनकांक्षिणः" ॥५२॥**

अर्थः—मम=मामकं, मदीयं, यद् रूपं=विश्वरूपं, दृष्टवानसि=त्वमद्राक्षीः, इदं रूपं=तदेतद् रूपं, सुदुर्दर्शं=दुःखेन दर्शो दर्शनं यस्य, तद् दुर्दर्शं, सुतरां दुर्दर्शं सुदुर्दर्शम्, अत्यन्तं द्रष्टुमशक्यम् । मनुष्याणां तु का कथा, देवाः अपि=दिवौकसोऽपि, अस्य=एतस्य, मम रूपस्य=विश्वरूपस्य, नित्यं=सर्वदा, दर्शनकांक्षिणः=दर्शनाभिलाषिणो वर्तन्ते, नाद्यावधि ते दर्शनमवाप्नुरित्यर्थः ॥५२॥

ननु कुतः सुदुर्दर्शमिदं तावकं रूपं ? तत्राह—

**"नाहं वेदैर्न तपसा, न दानेन न चेज्यया।**
**शक्य एवंविधो द्रष्टुं, दृष्टवानसि मां यथा" ॥५३॥**

अर्थः—न वेदैः=न सर्ववेदाध्ययनैः, अहर्दिवं पठनैः, न तपसा=नोग्रेण तपसा, न दानेन=न धनधान्यादिप्रदानेन, च=तथा, नेज्यया=नाग्निहोत्रादिकया यज्ञक्रियया, एवंविधः=यथादर्शितप्रकारः, विश्वरूपः, अहं=वासुदेवोऽहं, द्रष्टुं शक्यः=लोकितुं निरीक्षितुं योग्योऽस्मि, यथा=यद्वत्, मां=विश्वरूपं मां, दृष्टवानसि=त्वमद्राक्षीः, तथा तद्वत्, वेदाध्ययनादिकर्म कुर्वाणा न द्रष्टुं शक्नुवन्तीत्यर्थः ॥५३॥

ननु यदि वेदाध्ययनादिभिस्त्वमेवंविधो द्रष्टुमशक्योऽसि, तर्हि केनोपायेन द्रष्टुं शक्योऽसि ? तत्राह—

**"भक्त्या त्वनन्यया शक्यः, अहमेवंविधोऽर्जुन!।**
**ज्ञातुं द्रष्टुं च तत्त्वेन, प्रवेष्टुं च परन्तप!" ॥ ५४ ॥**

अर्थः—तुना वेदाध्ययनादीनि कर्माणि व्यावर्त्यन्ते, भक्तिपूर्वकाणां फलस्पृहामन्तरेण कर्तव्यबुद्ध्या यथाशास्त्रं निर्वर्तितानां तेषां दर्शनसाधनत्वेऽपि फलकामनयाऽनुष्ठितानां तेषां तत्साधनत्वानभ्युपगमात्। अर्जुन=हे अर्जुन !, अनन्यया=न विद्यतेऽन्यो मद्व्यतिरिक्तो भक्तव्यो यस्यां भक्तौ, साऽनन्या, तया मदेकगोचरया, भक्त्या=वासुदेव एवेदं सर्वं, पुरुष एवेदं सर्वं, सर्वं खल्विदं ब्रह्मेति बुद्धिपूर्विकया परानुरक्तिरूपया परमप्रेमलक्षणया भक्त्या, एवंविधः=यथादर्शितप्रकारो विश्वरूपाकारो विश्वात्मकोऽहम्=ईश्वरोऽहं, तत्त्वेन=तत्त्वतः स्वरूपतो ज्ञातुम्=अवबोद्धुं, शास्त्राचार्योपदेशाभ्यामवगन्तुं, च=तथा, द्रष्टुं=तत्त्वतः साक्षात्कर्तुं, च=तथा, प्रवेष्टुं=तादात्म्येन, मदेकात्मनाऽवस्थातुं शक्यः=योग्योऽस्मि, परन्तप=हे शत्रुतापन !, ॥ ५४ ॥

अथानन्यया भक्त्येत्युपश्रुत्य भ्रान्तिमापन्नो भक्त्यर्थमजानानो मनुष्यः कश्चिद् भक्तितो व्यतिरिक्तानि वेदोक्तानि मदाज्ञारूपाणि यावदायुः कर्तव्यबुद्ध्या यथाविधानमनुष्ठेयानि, पञ्च महायज्ञप्रभृतीनि कर्माणि मा नाम त्याक्षीत्, तदर्थं भक्तिपूर्वकवेदोक्तसर्वकर्मकर्तव्यतां द्रढयितुमना अध्यायमुपसंहरन्नाह

"मत्कर्मकृत् मत्परमो, मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु, यः स मामेति पाण्डव!" ॥५५॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नामैकादशोऽध्यायः ॥११॥

अर्थः—पाण्डव=हे पाण्डुनन्दन! यः=यो मनुष्यः, मत्कर्मकृत्=मह्यमीश्वराय कर्म करोति,नात्मने स्वाय, मदर्थं सर्वं कर्म निर्वर्तयति, न स्वार्थं, नैहिकामुष्मिकफलार्थम्, ईश्वरस्य सर्वभूतान्तरात्मनः सर्वं कर्म,न निमित्तमात्रस्य ममेति बुद्ध्या सर्वं कर्मानुतिष्ठति,स मत्कर्मकृत्, यस्य फलस्पृहा नास्ति,ममेदं कर्मेति कर्माभिमानो न विद्यते,मनुष्येन सता मया कर्म कर्तव्यमिति कर्तव्यबुद्ध्या मदाज्ञापितान्यात्मजातिदेशोन्नतिसाधनानि वेदोक्तानि सर्वाणि कर्माणि यथाविधानमनुतिष्ठति करोति, स मत्कर्मकृत्, निष्कामकर्मकृत्, मत्परमः=अहमीश्वरः परमः प्रकृष्टो ज्ञातव्यो द्रष्टव्यो यस्य, यो विश्वात्मनाऽवस्थितं मामेव जानाति, सर्वेषु भूतेष्वन्तरात्मनाऽवस्थितं मामेव पश्यति,यस्य दृष्टौ मत्तो भिन्नः कश्चन प्रकृष्टो ज्ञातव्यो द्रष्टव्यो वाऽर्थो नास्ति,स मत्परमः,ज्ञातव्यत्वेन द्रष्टव्यत्वेन च मयीश्वरे प्रकृष्टबुद्धिः,मद्भक्तः=ममेश्वरस्य भक्तः सेवकः,सर्वदा मदाज्ञापालनपरः,सङ्गवर्जितः=विकारहेतुःसम्बन्धः सङ्गः सक्तिरासक्तिः, तद्विरहितः,स्त्रीपुत्रधनधान्यादिषु चेतनाचेतनेषु सर्वेषु पदार्थेषु सत्स्वपि तद्धेतुकहर्षविषादादिसर्वविकारशून्यः,सकुटुम्बोऽपि भवन्नकुटुम्बः,सर्वान् भोगानुपभुञ्जानोऽपि न कांश्चिदुपभुञ्जानः,समृद्धौ व्यृद्धौ,सम्पत्तौ विपत्तौ, समः। सर्वभूतेषु=सर्वेषु भूतेषु प्राणिषु निर्वैरः=वैरं द्वेषः,शत्रुताबुद्धिः, ततो निर्गतः, द्वैतबुद्धेरभावाद् वैरान्निष्क्रान्तः, सर्वत्रैकात्मदर्शनः, सः=असौ, माम्=ईश्वरं माम्, एति=प्राप्नोति, यावज्जीवं मदेकानुभवो भूत्वा कर्तव्यबुद्ध्या कर्मसु रममाणो जीवन्मुक्तः प्रारब्धकर्मसमाप्तौ समुद्रं सरिदिवेश्वरं मामाविशतीत्यर्थः ॥ ५५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्ये एकादशोऽध्यायः ॥११॥

# "अथ द्वादशोऽध्यायः"।

अष्टमाध्याये भगवान् श्रीकृष्णोऽव्यक्तस्याक्षरस्येश्वरस्य भक्तेः परमगतिसाधनत्वमगादीत् "अव्यक्तोऽक्षरः" ( गी० ८। २१ ) इत्यादिना। पूर्वस्मिन्नेकादशेऽध्याये समाप्तौ च व्यक्तस्य विश्वरूपस्येश्वरस्य भक्तेः "भक्त्या त्वनन्यया" इत्यादिना श्लोकद्वयेन परमगतिसाधनत्वमवादीत्। तत्राव्यक्ताक्षरेश्वरभक्तेषु व्यक्तविश्वरूपेश्वरभक्तेषु चोभयेषु के भक्ताः विशिष्टतमाः ? इति विशेषतो बुभुत्समानोऽर्जुनः पृच्छति—

"अर्जुन उवाच"

**"एवं सततयुक्ताः ये, भक्तास्त्वां पर्य्युपासते।**
**ये चाप्यक्षरमव्यक्तं, तेषां के योगवित्तमाः" ॥१॥**

अर्थः—एवं=मत्कर्मकृदित्यादिना कथितेन प्रकारेण, सततयुक्ताः=निरन्तरं कर्मसु जातिदेशात्मोन्नतिसाधनेषु कर्तव्यबुद्ध्या संयुक्ताः, सँल्लग्नाः, सम्प्रवृत्ताः, ये भक्ताः=भक्तिः परानुरक्तिस्तदुपेताः, त्वां=विश्वरूपमीश्वरं त्वां, पर्य्युपासते=परितः सर्वतोऽन्तःकरणेनोपतिष्ठन्ते, प्राप्तिरुपास्थितिः, त्वत्समीपे चेतसोपवेविश्यन्ते, विना त्वां नान्यत् किञ्चिद् वीक्षन्ते। च=तथा, येऽपि=सम्भावनायामपिः, येऽपि केचिद्, अव्यक्तं=न व्यज्यते करणैरिन्द्रियैर्यत्, तत् सर्वकरणागोचरं विश्वातीतम्, अक्षरं=परममक्षरं त्वां ब्रह्म, पर्युपासते=परितः सर्वतोऽन्तःकरणेनोपतिष्ठन्ते, त्वत्समीपे चेतसोपवेविश्यन्ते, तेषाम्=अमीषामुभयेषां, के=कतमे योगवित्तमाः=अतिशयेन कर्मयोगस्य वेत्तारो लब्धारः, योगं कर्मयोगं विन्दन्ते लालभ्यन्ते ये, ते योगविदः, अतिशयेन योगविदो योगवित्तमा इति तद्व्युत्पत्तेः, श्रेष्ठाः कर्मयोगिन इत्यर्थः॥१॥

अथार्जुनेन पृष्टो भगवानुत्तरयति—

" श्रीभगवानुवाच "।

**"मय्यावेश्य मनो ये मां, नित्ययुक्ताः उपासते।**
**श्रद्धया परयोपेतास्ते मे युक्ततमाः मताः" ॥२॥**

अर्थः—ये=ये भक्ताः, मनः=अन्तःकरणं चित्तं, मयि=विश्वरूपे मयीश्वरे, आवेश्य=प्रवेश्य, निधाय, नित्ययुक्ताः=सततयुक्ताः, निरन्तरं सर्वदा

कर्मयोगयुक्ताः, परया=प्रकृष्टया, श्रद्धया=आस्तिक्यबुद्ध्योपेताः=उपगताः समन्विताः,मां=विश्वरूपमीश्वरं माम्, उपासते=उपतिष्ठन्ते, वेदोक्तं निखिलं कर्म यथाविधानं कुर्वाणा अपि मामेव मनसाऽनुसन्दधानाः सामीप्येनोपवेविश्यन्ते, बद्धाञ्जलयः पुरतोऽवतिष्ठन्ते, ते=अमी भक्ताः, मे=मम, युक्ततमाः=अतिशयेन कर्मयुक्ताः,श्रेष्ठाः कर्मयोगिनो मताः=सम्मता अभिप्रेता इत्यर्थः ॥ २ ॥

ननु येऽव्यक्तमक्षरं त्वामुपासते, तेषां का गतिः ? तत्राह द्वाभ्याम्—

**"ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।**
**सर्वत्रगमचिन्त्यं च, कूटस्थमचलं ध्रुवम्" ॥३॥**
**"सन्नियम्येन्द्रियग्रामं, सर्वत्र समबुद्धयः ।**
**ते प्राप्नुवन्ति मामेव, सर्वभूतहिते रताः" ॥४॥**

अर्थः—ये तु=पूर्वोक्तेभ्यो वैलक्षण्यं तुराह, ये तु भक्ताः, सर्वभूतहिते=सर्वेषां भूतानां प्राणिनां हिते प्रिये सुखे, रताः=निरताः, प्रीतिमन्तः, सर्वत्र=सर्वेषु,प्राप्तेषु इष्टानिष्टेषु विषयेषु, समबुद्धयः=समा तुल्या हर्षविषादाभ्यां रागद्वेषाभ्यां च रहिता बुद्धिर्मतिर्येषां, ते सर्वदा सर्वत्र तुल्यप्रज्ञाः, इन्द्रियग्रामं=बाह्येन्द्रियसमुदायं, संनियम्य=संनिरुध्य, ध्रुवं=शाश्वतं, नित्यम, अचलं=निश्चलं,निष्क्रियं, कूटस्थं=निर्विकारं, परिणामरहितं, च=तथाऽचिन्त्यं=चिन्तयितुमशक्यं, मनोगोचरतामतीतं,सर्वत्रगं=सर्वत्र प्राप्तं,सर्वत्र पूर्णम्,अव्यक्तं=न व्यक्तं, सर्वेन्द्रियागोचरम, अनिर्देश्यं=न निर्देष्टुं शब्देन व्यपदेष्टुं शक्यम्, अव्यपदेश्यम्, अक्षरं=परममक्षरं ब्रह्म, पर्युपासते=परितः सर्वतोऽन्तःकरणेनोपतिष्ठन्तेऽनुसन्दधते, ते=अमी, मामेव=मामीश्वरमेव नान्यमित्यवधारणार्थः, प्राप्नुवन्ति=सरिदिव समुद्रमाविशन्तीत्यर्थः॥३॥४॥

ननु विश्वरूपोपासका इवाव्यक्ताक्षररूपोपासकाः अपि चेत् त्वामेवेश्वरं प्राप्नुवन्ति, तदा तेषामुभयेषामविशेषः प्राप्तः, नाव्यक्ताक्षररूपोपासकेभ्यो विश्वरूपेश्वरोपासकाः विशिष्टाः ? तत्राह—

**"क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।**
**अव्यक्ता हि गतिर्दुःखं, देहवद्भिरवाप्यते" ॥५॥**

अर्थः—तेषाम् = अमीषाम्, अव्यक्तासक्तचेतसाम्=अव्यक्ते अव्यक्ताक्षररूपेश्वरोपासने, आसक्तम् अव्यक्ताक्षररूपेश्वरोपासनमेव परमगतिसाधनमित्यभिनिवेशं प्राप्तं,प्रसितं,निबद्धं चेतश्चित्तं मनोऽन्तः-करणं, येषां, तेषामव्यक्ताक्षररूपेश्वरोपासनाभिनिविष्टचित्तानां,क्लेशः= चित्तस्थिरीकरणनिबन्धनः श्रमः आयासः, अधिकतरः=अतिशयेना-धिकः, अतिबहुलः, कस्मात् ? हि=यस्मात्, देहवद्भिः=व्यक्तिमद्भि-र्मूर्तिमद्भिर्मनुपुत्रैर्मनुष्यैः, अव्यक्ता=अव्यक्तविषया,=अव्यक्ताक्षररूपेश्वर-गोचरा,गतिः=चेतसः प्राप्तिर्वृत्तिस्तत्रापि स्थितिर्दुःखं=कष्टं यथा भवति तथाऽवाप्यते=प्राप्यते,भूरिणा दुःखेनातिक्लेशेन कथञ्चित् लभ्यते, विश्व रूपेश्वरस्य तु व्यक्तत्वान्न तद्गोचरायां मनसो गतौ कश्चित् क्लेशो न वा दुःखेन तदवाप्तिरित्यव्यक्ताक्षररूपेश्वरोपासकेभ्यो विश्वरूपेश्वरोपास-काः विशिष्टाः प्रत्यक्षा इत्यर्थः ॥५॥

अथ विश्वरूपेश्वरोपासकानामपरं वैशिष्ट्यमाह द्वाभ्याम्—

**"ये तु सर्वाणि कर्माणि, मयि संन्यस्य मत्पराः ।**
**अनन्यनैव योगेन, मां ध्यायन्त उपासते" ॥६॥**
**"तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।**
**भवामि नचिरात् पार्थ! मय्यावेशितचेतसाम्" ॥७॥**

अर्थः—ये तु =अव्यक्ताक्षररूपेश्वरोपासकव्यावृत्त्यर्थस्तुः, ये तु जनाः, सर्वाणि = सकलानि, कर्माणि = लौकिकानि च वैदिकानि च कर्माणि,मयि=विश्वरूपेश्वरे मयि,संन्यस्य=समर्प्य,मदङ्गभूतानांप्रीणनां दुःखनिवृत्तिहेतोर्मदर्पितानि कृत्वा,मत्पराः=अहं विश्वरूपेश्वरः परः प्रकृष्टो ज्ञातव्यो द्रष्टव्यो येषां,ते मदेकज्ञानदर्शनपराः, मामेव सर्वत्र पश्यन्तः, मां=विश्वरूपेश्वरं मां, ध्यायन्तः=चिन्तयन्तः, स्मरन्तो, न कदाचिद् विस्मरन्तः, अनन्येनैव=अयोगव्यवच्छेदोऽवधारणर्थः, न विद्यतेऽन्यो भक्तव्यो भजनीयो यस्मिन् योगे, तेनैव मदेकविषयेणैकान्तेन, योगेन= भक्तियोगेन,उपासते=सदोपतिष्ठन्ते,स्ववर्णोचितं निखिलं कर्म यथाविधानं निर्वर्तयन्तोऽपि चेतसा मत्सविधे नित्यमुपवेविश्यन्ते,तेषाम=अमीषां, मय्यावेशितचेतसां=परमप्रेम्णा मयि प्रवेशितान्तःकरणानां, मयि विश्वरूपेश्वरे आवेशितं परया भक्त्या प्रवेशितं चेतोऽन्तःकरणं यैरिति

तद्व्युत्पत्तेः, विश्वरूपेश्वरोपासकानां निष्कामकर्मयोगिनां भक्तानां, मृत्युसंसारसागरात्=जन्ममृत्युरूपात् संसारार्णवात्,समुद्धर्ता=सम्यगुन्नेता समीचीनेन प्रकारेणानायासेन बहिर्धर्ता, निःसारयिता, न-चिरात्=क्षिप्रं भवामि=बोभवीमि, पार्थ=हे पृथापुत्र! इत्यर्थः ॥ ७ ॥

ननु मयाऽर्जुनेन किं कर्तव्यं ? तत्राह—

**"मय्येव मन आधत्स्व, मयि बुद्धिं निवेशय ।**
**निवसिष्यसि मय्येव, अत ऊर्ध्वं न संशयः" ॥८॥**

अर्थः—मय्येव=अव्यक्ताक्षररूपेश्वरव्यवच्छेदोऽत्रधारणार्थः, विश्वरूपेश्वरे मय्येव, मनः=चित्तमन्तःकरणम्,आधत्स्व=स्थापय,स्थिरमाधेहि, मयि=विश्वरूपेश्वरे मयि, बुद्धिं=निश्चयात्मिकां मतिं प्रज्ञां, निवेशय=प्रवेशय, अहमेव परमोपास्यः, मदङ्गभूतानां प्राणिनां सेवैव मत्सेवेति निश्चिनुष्व,निश्चयेनावबुध्यस्व,अतः=अस्माद्,ऊर्ध्वम्=अनन्तरं, मय्येव=विश्वरूपेश्वरे मय्येव,निवसिष्यसि=नितरां वत्स्यसि,मृत इव जीवन्नपि मय्येव निवासं करिष्यसि,न संशयः=नास्त्यत्र कोऽपि सन्देहः, निश्चितमेतदित्यर्थः ॥ ८ ॥

ननु विश्वरूपेश्वरेऽपि त्वयि मनश्चञ्चलत्वात् सहसा न मया स्थापयितुं शक्यते ? तत्राह—

**"अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।**
**अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय!" ॥९॥**

अर्थः—धनंजय=हे धनजित् ! अथ=यदि, मयि=विश्वरूपेश्वरे मयि,स्थिरं=निश्चलं,चलनवर्जितं यथा स्यात् तथा,चित्तं=मनोऽन्तःकरणं, समाधातुं=स्थापयितुं, न शक्नोषि=न शक्यसि, समर्थो नासि, ततः= तर्हि,अभ्यासयोगेन=चित्तस्य सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासः, स एव योगः, तेन मुहुर्मुहुः स्थापनलक्षणेनाभ्यासयोगेन, मां = विश्वरूपेश्वरं माम्, आप्तुं=प्राप्तुं, मद्गोचरं मनश्चित्तं समाधातुं, सम्यक् स्थिरं स्थापयितुम्, इच्छ=कामयस्व, प्रार्थयस्व, ततो यथावन्मां ज्ञास्यसि, भजिष्यसि,सर्वान्तरात्मनि मयीश्वरे च निवत्स्यसीत्यर्थः ॥९॥

ननु नाहमभ्यासेऽपि शक्तः? तत्राह—

"अभ्यासेऽप्यसमर्थोऽसि, मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि, कुर्वन् सिद्धिमवाप्स्यसि" ॥१०॥

अर्थः—अभ्यासेऽपि=विषयेभ्यः सर्वेभ्यः प्रत्याहृतस्य चित्तस्य विश्वात्मके मयीश्वरे मुहुर्मुहुः स्थापनरूपेऽभ्यासेऽपि,यदि त्वमसमर्थः=न समर्थः,अभ्यसितुं न शक्तः, असि=भवसि, तदा मत्कर्मपरमः=मत्प्रीतिफलमुद्दिश्य लौकिकवैदिकसर्वकर्मानुष्ठानपरः,मदर्थे मत्प्रीत्यर्थे मत्प्रीतिफलकं कर्म मत्कर्म, तदेव परमं प्रकृष्टमुत्तमं वरं यस्येति तद्व्युत्पत्तेः, लौकिकं वा वैदिकं वा स्ववर्णोचितं यद् यत् कर्म करोमि,तत् सर्वं कर्म विश्वरूपेश्वरस्य प्रीत्यर्थं करोमि,न स्वार्थमिति बुद्ध्या लौकिकवैदिकस्ववर्णोचितसर्वकर्मानुष्ठानपरमो भव=एधि । मदर्थमपि=भिन्नस्थानोऽपिः, कुर्वन्नित्यस्याग्रे सम्बध्यते, मदर्थं मत्प्रीत्यर्थं, कर्माणि=लौकिकानि च वैदिकानि च स्ववर्णोचितानि कर्माणि,कुर्वन्नपि=निर्वर्तयन्नपि,सिद्धिम्=इहामुत्र मत्प्राप्तिरूपां सिद्धिम्, अवाप्स्यसि=प्राप्स्यसीत्यर्थः ॥१०॥

ननु त्वदर्थमपि कर्माणि कर्तुं नाहं समर्थः? तत्राह—

"अथैतदप्यशक्तोऽसि, कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं, ततः कुरु यतात्मवान्" ॥११॥

अर्थः—अथ=यदि,एतदपि=इदमपि,मत्प्रीत्यर्थं सर्वं कर्मापि, कर्तुं=निर्वर्तयितुमशक्तः=असमर्थोऽसि=भवसि, ततः=तदा, मद्योगं=मद्भक्तियोगमाश्रितः=समाश्रितः,मद्भक्तो भूत्वा, यतात्मवान्=यतचित्तः, संयतमनाः,यतः संयत आत्माऽन्तःकरणं चित्तं मनो यस्येति तद्व्युत्पत्तेः, वशीकृतान्तःकरणः, सर्वकर्मफलत्यागं=सर्वेषां लौकिकानां वैदिकानां च स्ववर्णोचितकर्मणां फलस्य त्यागं,फलत्यागपूर्वकं सर्वं कर्म,निष्कामं निखिलं कर्म, कुरु=निर्वर्तयेत्यर्थः ॥११॥

अथाभ्यासादिभ्यः सर्वेभ्यः सर्वकर्मफलत्यागरूपस्य भक्तिपूर्वकनिष्कामकर्मयोगस्य श्रेष्ठत्वमाह—

"श्रेयो हि ज्ञानमभ्यासाद् ज्ञानाद् ध्यानं विशिष्यते ।
ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम्" ॥१२॥

अर्थः—हि=निश्चयेनाभ्यासात्=अज्ञानपूर्वकात् चित्तस्थित्यै क्रियमाणात् मुहुर्मुहुः प्रयत्नात्मकादभ्यासात्, ज्ञानम्=आत्मज्ञानं, श्रेयः=शुभं श्रेष्ठं, वरं, ज्ञानात्=केवलादात्मज्ञानात्, वाङ्मात्रे स्थितात्, ध्यानं=ज्ञानपूर्वकमात्मनो ध्यानं चिन्तनं स्मरणं, विशिष्यते=प्रशस्यते। ध्यानात्=ज्ञानपूर्वकादात्मनो ध्यानात्, कर्मफलत्यागः=फलत्यागपूर्वक-लौकिकवैदिकसर्वकर्मानुष्ठानम्, आत्मज्ञानपूर्वकं भक्तिप्रधानं निष्काम-कर्मानुष्ठानं, विशिष्यते=उत्कृष्यते, अतिशय्यते, त्यागात्=फलत्याग-पूर्वकात् ज्ञानभक्तिसहितात् कर्मानुष्ठानाद्, अनन्तरम्=अव्यवहितोत्तरं, शान्तिः=लोके परलोके सर्वत्र सर्वदुःखनिवृत्तिरिति निश्चयः। केवलात् कर्मणोऽनन्तरम्, अज्ञानपूर्वकाद्वाऽभ्यासादनन्तरं न शान्तिः, सर्व-दुःखनिदानस्यात्माज्ञानस्य विद्यमानत्वात्, नापि केवलादात्मज्ञानाद-नन्तरं, तत्पूर्वकाद्वाऽऽत्मनो ध्यानादनन्तरं शान्तिः, कर्मसाध्यैश्वर्यस्या-भावेन दुःखहेतोरनैश्वर्यस्य सत्त्वात्। संन्यासी स्याद्, गृही वा भवेद्, ब्रह्मचारी वा वरीवृत्येत, प्रत्येकमात्मस्वास्थ्याय स्वसुखसम्पत्तिहेतोरशनं वसनं वस्त्यमिति त्रयं नियमेनापेक्षते, तच्च त्रयमैश्वर्यसाध्यम्, ऐश्वर्यं च कर्मसाध्यम्, नास्ति च कर्मेति केवलमात्मनो ज्ञानं, तत्पूर्वकमात्मनो ध्यानं वा केवलकर्माभ्यासयोरिव न शान्तिसाधनम्, शान्तिसाधनं त्वात्म-ज्ञानपूर्वकं भक्तिप्रधानं फलस्पृहामन्तरेण केवलकर्तव्यबुद्ध्या लौकिक वैदिकसर्वकर्मानुष्ठानम्। स एव कर्मयोगो नाम, स एवात्रामुत्र च नियमेन शान्तिहेतुत्वादभ्यासादिभ्यो ध्यानान्तेभ्यः सर्वेभ्यो विशिष्टः प्रशस्ततरः, इत्यसंशयम्। श्रूयते च मुण्डके "क्रियावानेष ब्रह्मविदां वरिष्ठः" (मुण्डो० ३।१।४) इति। क्रियावान्=फलाभिसन्धिशून्यकर्मानुष्ठान वानित्यर्थः ॥ १२ ॥

नन्वात्मज्ञानवतो निष्कामकर्मयोगिनो भक्तस्य किं लक्षणम्? तत्राह सप्तभिः—

**"अद्वेष्टा सर्वभूतानां, मैत्रः करुण एव च।**
**निर्ममो निरहङ्कारः, समदुःखसुखः क्षमी" ॥१३॥**

अर्थः—सर्वभूतानां=सर्वेषां भूतानां प्राणिनामद्वेष्टा=न द्वेष्टा, न द्वेषकर्ता, द्वेषवर्जितः, सर्वत्रात्मबुद्धित्वात् सर्वाप्रियकर्ता, चकारतथा,

एव = निश्चयेन मैत्रः=मित्रभावो मैत्री, स्निग्धता, तद्वान्, सर्वेषु भूतेषु प्राणिषु मित्रभावेन वर्तमानः, सर्वेषां भूतानां प्राणिनां मित्रं, करुणः=करुणा कृपा दया, तद्वान्, कृपालुः, परदुःखप्रहाणेच्छुः, निर्ममः=ममेदं कर्मेति प्रत्ययवर्जितः, कर्मसु फलबुद्धिरहितः, निरहङ्कारः=अस्य कर्मणोऽहं कर्तेति निर्गताहंप्रत्ययः, कर्मसु कर्तृत्वबुद्धिशून्यः, समदुःखसुखः=समे दुःखसुखे यस्य, स यथाकालं प्राप्तयोर्दुःखसुखयोरेकरसः, अनिष्टेष्टबुद्धिवर्जितः, क्षमी=क्षमावान्, सहिष्णुः, समुद्रतुल्यगम्भीर इत्यर्थः ॥१३॥

"सन्तुष्टः सततं योगी, यतात्मा दृढनिश्चयः।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः" ॥१४॥

अर्थः—सततं = निरन्तरं नित्यं, सन्तुष्टः = यत् प्राप्तं, तद् बहुलमिति बुद्धिः सन्तोषः, तदुपेतः, तृप्तः, लब्धेष्वर्थेषु प्रसन्नान्तःकरणः, योगी=कर्मयोगी, यतात्मा=संयतमनाः, दृढनिश्चयः=स्थिरमतिः, दृढः स्थिरो निश्चलो निश्चयो निर्णयो यस्येति तद्व्युत्पत्तेः। मय्यर्पितमनोबुद्धिः=मयि-विश्वरूपेश्वरेऽर्पिते समर्पिते स्थापिते मनोबुद्धी यस्य, येन वा, स मदेकगोचरमनोबुद्धिः मनसा मामेव सर्वभूतान्तरात्मना लोकते पश्यति, बुद्ध्या मामेव विश्वरूपात्मना बुध्यतेऽध्यवस्यति, यः=एतादृक्षो यः, मद्भक्तः= मम सेवकः, सः = असौ, मत्प्रियः = मम प्रेयानित्यर्थः ॥१४॥

"यस्मान्नोद्विजते लोको, लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः" ॥१५॥

अर्थः—यस्माद्=यस्माद् मद्भक्तात्, लोकः=जनः, कोऽपि मनुष्यः, नोद्विजते=नो क्षुभ्यते, भयादिनिमित्तश्चेतसः क्षोभो विक्षेपोऽशान्तिरुद्वेगः, तं नाश्नुते, यं मद्भक्तं दृष्ट्वा लोको न विक्षिप्यते, परबुद्ध्याऽशान्तिं न बाभज्यते, स्वस्याः प्रकृतेःस्वभावान्न चाचलयते, च=तथा, यः= यो मद्भक्तः, लोकात्=कुतश्चित् जनात् कस्मादपि मनुष्यात्, नोद्विजते=नो क्षुभ्यते, भयादिनिमित्तं क्षोभं न विन्दते, द्वैतबुद्धेरभावात् सर्वात्मदर्शितात्वत्। च=तथा, हर्षामर्षभयोद्वेगैः=हर्षः प्रियलाभेऽन्तःकरणस्योत्कर्षः, चित्तस्य प्रफुल्लता, अमर्षः=रोषः, कोपः, असहिष्णुता,

भयं=त्रासः, उद्वेगः क्षोभः,शान्त्यभावः,हर्षश्चामर्षश्च भयं चोद्वेगश्च, तैर्मुक्तः=त्यक्तो हीनो यः=यो मद्भक्तः,सः=असौ,मे=मम,प्रियः=वल्लभ इत्यर्थः १५

"अनपेक्षः शुचिर्दक्षः, उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी, यो मद्भक्तः स मे प्रियः" ॥१६॥

अर्थः—अनपेक्षः=अपेक्षा स्पृहा, तद्रहितः, निःस्पृहः, शुचिः=बाह्याभ्यन्तरशौचसम्पन्नः, दक्षः=कुशलः, प्रत्युत्पन्नमतिः, उपस्थितेषु कार्येषु सद्यो यथावत्प्रतिपत्तिसमर्थः,उदासीनः=पक्षपातशून्यस्तटस्थः, गतव्यथः=विगतक्लेशः,गता विगता व्यथा पीडा मनःसन्तापो यस्येति तद्व्युत्पत्तेः,आधिशून्यः। सर्वारम्भपरित्यागी=फलकामनयाऽऽरभ्यन्ते प्रारभ्यन्त इत्यारम्भाः काम्यकर्माणि,सर्वान् आरम्भान् ऐहिकामुष्मिकफलकान् काम्यकर्मविशेषान् परित्यक्तुं संन्यसितुं शीलं यस्य,स सर्वकाम्यकर्मसंन्यासी,यः=ईदृशो यो मद्भक्तः,स मे प्रियः=अभीष्ट इत्यर्थः ॥१६॥

"यो न हृष्यति न द्वेष्टि, न शोचति न कांक्षति ।
शुभाशुभपरित्यागी, भक्तिमान् यःस मे प्रियः" ॥१७॥

अर्थः—यः=यो भक्तः, न हृष्यति=प्रियं प्राप्य न माद्यति, न तुष्यति, नाभिनन्दति, न द्वेष्टि=नाप्रियं प्राप्य दुष्यति, न ग्लायति, नाभिक्रुध्यति, न शोचति=न प्रियवियोगे तपति, न प्रियवियोगं स्मारंस्मारं क्लिश्नाति,न कांक्षति=नाप्राप्तं किञ्चिद् वाञ्छति,यत् प्राप्तं, तदेव भजति, नाप्राप्तमिच्छति । यः=यो,भक्तिमान्=भक्तः, शुभाशुभपरित्यागी=शुभाशुभे कर्मफले परित्यक्तुं शीलमस्य,स सर्वशुभाशुभकर्मफलसंन्यासी, सः=असौ भक्तो मे=मम प्रियः=दयित इत्यर्थः ॥१७॥

"समः शत्रौ च मित्रे च, तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु, समः सङ्गविवर्जितः" ॥ १८॥

अर्थः—च=किञ्च, शत्रौ=वैरिणि, च=तथा, मित्रे=स्नेहिनि, समः=तुल्यः,समदर्शनः,न शत्रौ द्वेषः,न मित्रे रागः,आत्मत्वेन तुल्यत्वात्, तथा मानापमानयोः=माने चापमाने च, पूजायां च परिभवे च, समः=तुल्यः,हर्षविषादविकारशून्यः, स्वस्थान्तःकरणः,शीतोष्णसुखदुःखेषु=

शीतोष्णयोः सुखदुःखयोश्च, समः=तुल्यः; उभयत्र तुल्यभोग्यत्वप्रत्ययः, शीतं स्यादुष्णं वा भवेत्, सुखं स्याद् दुःखं वा विद्येत, यद् यदा प्राप्तं, तत् तदा हासं हासं भोक्तव्यं, न जातु रोदं रोदम्, प्राप्तस्य भोग्यस्य भोगेनैवोपक्षयात्, आगमापायित्वेनोपक्षयस्य चावश्यंभावादिति शीतोष्णादिषु सर्वेषु द्वन्द्वेषु यथाकालं प्राप्तेषु समभोग्यत्वाध्यवसायः, सङ्गविवर्जितः=विकारहेतुः सम्बन्धः सङ्गः, स्वसन्निहितेषु सकलेषु भोगसाधनेषु चेतनाचेतनेषु हर्षशोकादिविकारहेतुसम्बन्धरहितः, सर्वत्रानासक्त इत्यर्थः॥१८॥

**"तुल्यनिन्दास्तुतिर्मौनी, सन्तुष्टो येन केन चित्।**
**अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः" ॥१९॥**

अर्थः—तुल्यनिन्दस्तुतिः = अविद्यमानदोषकथनं निन्दा, विद्यमानदोषकथनं परिवादः, इति द्वयोर्भेदः, गुणकथनं स्तुतिः, तुल्ये समे निन्दास्तुती यस्य, स निन्दास्तुत्योः समः निर्विकारः, न निन्दया कुप्यति, क्रुध्यति, न स्तुत्या हृष्यति, प्रफुल्लति, मौनी=संयद्वाक्, मितभाषी, येन केन चित्=यथाविधि निर्वर्तितात् स्ववर्णोचितात् कर्मणः प्राप्तेन येन केनापि हानिलाभजयपराजयादिलक्षणेनार्थेन, सन्तुष्टः=सम्यक् तृप्तः, अनिकेतः=निकेतनं निकेतः, निकेतनं सद्म गृहं, तत्रासक्तिरहितत्वाद् विद्यमाननिकेतनोऽप्यविद्यमाननिकेतनः, स्थिरमतिः=दृढबुद्धिः, व्यवस्थितान्तःकरणः, भक्तिमान्=भक्तो, नरः=मनुष्यो, मे=मम, प्रियः=प्रीतिविषयः, प्रेमाश्रयः, इष्टः, इत्यर्थः ॥ १९ ॥

अथोपसंहरन्नाह—

**"ये तु धर्म्यामृतमिदं, यथोक्तं पर्य्युपासते।**
**श्रद्दधानाः मत्परमाः, भक्तास्तेऽतीव मे प्रियाः॥२०॥**

**इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः ॥१२॥**

अर्थः—ये तु=भक्तान्तरव्यवछेदस्तोरर्थः, ये तु भक्ताः, श्रद्दधानाः=श्रद्धां कुर्वाणाः, आस्तिक्यबुद्धिः श्रद्धा, तदुपेताः, मत्परमाः=मत्परमप्रमाणाः, अहमेव परमा प्रकृष्टं प्रमाणं येषामिति तद्व्युत्पत्तेः, इदम्=एतद्, धर्म्यामृतं=धर्मादनपेतं धर्मयुक्तं वचनामृतम्, अमृतत्वसाधनत्वादमृत-

वदास्वाद्यत्वाद्वाऽमृतं "मय्यावेश्य मनो ये माम् ,ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः" इत्यादिवाक्यामृतं,यथोक्तं=यथा मयोक्तं तथैव, पर्य्युपासते=परितः सर्वतोऽन्तःकरणेनानुष्ठेयत्वबुद्ध्योपतिष्ठन्ते, यथा विधानमनुतेष्ठीयन्ते,दिवानक्तं यथावचनं वर्तितुमाचरितुं प्रयतन्ते, ते= अमी,मे=ममातीवप्रियाः=अतितरामभीप्सिताः परमप्रेमविषया इत्यर्थः॥२०

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्र-निष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गी-तोपनिषद्वैदिकभाष्ये द्वादशोऽध्यायः ॥१२॥

---

# "अथ त्रयोदशाऽध्यायः" ।

पूर्वस्मिन् द्वादशाध्याये विश्वरूपेश्वरस्य भक्तिः कर्मयोगाङ्गत्वात् प्राधान्येन व्याख्यायि। सम्प्रति क्षेत्रक्षेत्रज्ञभेदेन द्विविधस्य विश्वस्येश्वर-रूपस्य विस्तरेण निरूपणार्थं त्रयोदशोऽध्याय आरभ्यते। तत्र किं क्षेत्रं,कः क्षेत्रज्ञः, इति पार्थस्य प्रश्नं हृदि निधायोत्तरमाह भगवान्—

"श्रीभगवानुवाच" ।

**"इदं शरीरं कौन्तेय! क्षेत्रमित्यभिधीयते ।**
**एतद् यो वेत्ति तं प्राहुः, क्षेत्रज्ञ इति तद्विदः" ॥१॥**

अर्थः—कौन्तेय=हे कुन्तीपुत्र! इदम्=एतद् दृश्यमानं शरीरं= समष्टिर्ब्रह्माण्डं, व्यष्टिः पिण्डो गात्रम,उभयं शीर्यत इति शरीरं,क्षेत्रं= कर्मबीजप्ररोहभूमित्वात् क्षेत्रमिति=एवम, अभिधीयते=कथ्यते, क्षेत्र-शब्देनाख्यायते, वेदविद्भिः। एतद्=इदं पिण्डब्रह्माण्डाख्यशरीररूपं क्षेत्रं, यो वेत्ति=ममेदमिति जानाति, योऽस्य पिण्डब्रह्माण्डाख्यशरीर-रूपक्षेत्रस्यान्तरात्मा, नियमयिता, चेष्टयिता,स्वामी,तम्=अमुं शरीर-क्षेत्रस्य वेदितारं नियन्तारं स्वामिनं,तद्विदः=क्षेत्रक्षेत्रज्ञविदो वेदविद्वांसः, क्षेत्रज्ञ इति=एवं प्राहुः=प्रवदन्ति, क्षेत्रज्ञशब्देन कथयन्तीत्यर्थः ॥१॥

ननु किमयं क्षेत्रज्ञस्त्वत्तो भिन्नोऽस्ति ?, न, अहमेवेत्याह—

**"क्षेत्रज्ञं चापि मां विद्धि, सर्वक्षेत्रेषु भारत! ।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत् तत् ज्ञानं मतं मम" ॥२॥**

अर्थः—भारत=हे भरतकुलोद्भव ! सर्वक्षेत्रेषु=सर्वेषु क्षेत्रेषु वप्रेषु, पिण्डब्रह्माण्डाख्यशरीरेषु, क्षेत्रज्ञं चापि मां विद्धि=चोऽवधारणे, मामित्यनेन सम्बध्यते, अपिना क्षेत्रं समुच्चीयते, क्षेत्रं तत् क्षेत्रज्ञमपि मामेव विद्धि=जानीहि, यथा विश्वात्मकत्वादहमेव क्षेत्रं, तथा विश्वान्तरात्मत्वात् क्षेत्रज्ञोऽप्यहमेवेत्यवेहि। क्षेत्रक्षेत्रज्ञयोः=क्षेत्रं च क्षेत्रज्ञश्च, क्षेत्रक्षेत्रज्ञौ, तयोर्यत् ज्ञानं=दर्शनं, तत्=तज्ज्ञानं, मम=विश्वरूपेश्वरस्य मम, ज्ञानं= दर्शनं, मतम्=अभिमतमभिप्रेतं निश्चितम् । विश्वरूपेश्वरस्य मम, क्षेत्रक्षेत्रज्ञलक्षणं विश्वात्मकं रूपं परित्यज्य यदन्यदव्यक्ताक्षरं रूपं, तन्न द्रष्टुं शक्यते, सर्वेन्द्रियातीतत्वात् । यत्तु द्रष्टुं शक्यते मम रूपं, तदेतदेव क्षेत्रक्षेत्रज्ञलक्षणं विश्वात्मकं व्यक्तं रूपम्। यत्रैतदाम्नायते "रूपं रूपं प्रतिरूपो बभूव, तदस्य रूपं प्रतिचक्षणाय" ( ऋ० ६ । ४७ । १८ ) इति । प्रतिचक्षणाय=प्रत्यक्षदर्शनाय । तस्माद् दर्शनार्हस्य सर्वकरण-गोचरस्य क्षेत्रस्य क्षेत्रज्ञस्य च विश्वस्य यद् दर्शनम्, उपास्यत्वेन सेव्यत्वेन च यज्ज्ञानं, तद् ममैव ज्ञानमित्यर्थः ॥२॥

अथ सामान्येनोक्तं क्षेत्रक्षेत्रज्ञरूपमर्थं, विशेषेण प्रतिपिपादयिषु-रर्जुनं तावदभिमुखीकरोति—

**"तत् क्षेत्रं यच्च यादृक् च, यद्विकारि, यतश्च यत् ।**
**स च यो यत्प्रभावश्च, तत् समासेन मे शृणु" ॥३॥**

अर्थः—तत्=यद् "इदं शरीरं कौन्तेय!" इति प्रागुक्तं, तत्, क्षेत्रं=पिण्डब्रह्माण्डाख्यशरीररूपं क्षेत्रं, यद्=यद् वस्तु, वस्तुतो यदा-त्मकं, च=तथा, यादृक्=यत्प्रकारकं, प्रकाराः अवान्तरभेदाः, तदु-पेतं, च=तथा, यद्विकारि=कर्मधारयान्मतुप्, यैर्विकारैर्युक्तं, च= तथा, यतः=यस्माद्, यद्=यदुद्भवति। च=तथा, सः=असौ क्षेत्रज्ञः, यः=योऽस्ति स्वरूपतः, यत्स्वरूपः, च=तथा, यत्प्रभावः=यैः प्रभावैः सामर्थ्यविशेषैः सम्पन्नः, ये प्रभावाः सामर्थ्यविशेषाः शक्तयोऽस्येति

तद्व्युत्पत्तेः, तत्=सर्वं तत्, समासेन=संक्षेपेण, मे=मम वचनात् शृणु=मत्तः सकाशादाकर्णयेत्यर्थः ॥ ३ ॥

ननु विस्तरेण कैरगायि, यस्यैष समासः ? तत्राह—

**"ऋषिभिर्बहुधा गीतं, छन्दोभिर्विविधैः पृथक् ।**
**ब्रह्मसूत्रपदैश्चैव, हेतुमद्भिर्विनिश्चितैः" ॥४॥**

अर्थः—ऋषिभिः=उपनिषत्कर्तृभिः, कठमुण्डकप्रभृतिभिः ऋषिभिः, विविधैः=अनेकप्रकारैश्छन्दोभिः=छन्दोविशिष्टैः पद्यैः, पद्यात्मकैः "आत्मानं रथिनं विद्धि, शरीरं रथमेव तु" (कठो० ३।३) "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" (मुं० उ० २।३) इत्यादिभिः श्रुतिवाक्यैः, बहुधा=बहुप्रकारेण, पृथक्=पृथक् पृथग्, गीतं=कीर्तितम्। च=तथा, विनिश्चितैः=विनिश्चितार्थैरसन्दिग्धार्थैः, हेतुमद्भिः=साध्यार्थसाधनीभूतं तृतीयान्तं पञ्चम्यन्तं वा पदं हेतुः, तद्भिस्तदुपेतैर्ब्रह्मसूत्रपदैः=ब्रह्मसूत्राणि "अथातो ब्रह्मजिज्ञासा" (वे० १।१।१) इत्यादीनि वेदान्तसूत्राणि, तान्येव प्रायेणैकद्वित्रिपदात्मकत्वात् पदानि, पद्यते गम्यतेऽर्थः एभिरिति तद्व्युत्पत्तेः, तैः "न वियदश्रुतेः" (वे० २।२।१) "अस्ति तु" (वे० २।२।२) "नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः" (वे० २।२।१७) इत्यादिकैर्ब्रह्मसूत्रपदैर्बहुधा=बहुप्रकारेण, गीतं=शब्दितम्, अगायि, व्यासेन मुनिना व्याख्यायीत्यर्थः ॥ ४ ॥

अथाभिमुखीभूतेऽर्जुने क्षेत्रक्षेत्रज्ञयोर्द्वयोः प्रथमं तावत् क्षेत्रं प्रतिपादयति द्वाभ्याम्—

**"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकं च, पञ्च चेन्द्रियगोचराः" ॥५॥**

अर्थः—महाभूतानि=कारणे कार्योपचारः, महाभूतकारणत्वात् तन्मात्राख्यानि सूक्ष्मभूतानि पञ्च, अहङ्कारः=तत्कारणं भूतादिरहङ्कारतत्त्वं, बुद्धिः=समष्टिबुद्धिर्महत्तत्त्वं, च=तथा, एव=निश्चयेनाव्यक्तं=मायाख्या त्रिगुणमयी प्रकृतिः, इन्द्रियाणि दश=घ्राणरसनचक्षुःस्पर्शश्रोत्राख्यानि

ज्ञानोत्पादकत्वात् ज्ञानेन्द्रियाणि पञ्च, वाक्पाणिपादपायूपस्थाख्यानि कर्मनिर्वर्तकत्वात् कर्मेन्द्रियाणि पञ्च, च=तथा, एकं=प्रतिशरीरमेकं ज्ञानकर्मोभयेन्द्रियात्मकं सर्वेन्द्रियनायकं मनोऽन्तःकरणं, च=तथा, इन्द्रियगोचराः=इन्द्रियाणां चक्षुरादीनां गोचरीभूताः स्थूलाः महाभूतनामानः पृथिव्यप्तेजोवाय्वाकाशाः पञ्च=पञ्चसंख्याकाः, गन्धादिगुणविशिष्टानि पृथिव्यादीनि स्थूलभूतानि पञ्चेत्यर्थः।

तान्येवैतान्यव्यक्तादीनि स्थूभूतपर्यन्तानि चतुर्विंशति-तत्त्वानि क्षेत्रम्। तत्राव्यक्तं मायानाम्नी त्रिगुणात्मिका प्रकृतिः क्षेत्रस्य वास्तवं रूपम्। अव्यक्तात्मकमेव वस्तुतः क्षेत्रम्। अव्यक्तं हि महत्तत्त्वादिरूपेण परिणतं ब्रह्माण्डात्मना पिण्डात्मना च तेष्ठीयते। नह्यव्यक्तात् प्रकृतेः सकाशादन्यद् ब्रह्माण्डरूपं पिण्डरूपं वा क्षेत्रं किञ्चिदस्ति। महत्तत्त्वम्, अहङ्कारः, तन्मात्राख्यानि पञ्चेति सप्तापि क्षेत्रान्तर्भूताः अव्यक्तस्य प्रकृतेधर्मपरिणामाः प्रकारविशेषाः। अवशिष्टाः एकादशेन्द्रियाणि, स्थूलभूतानि पञ्चेति षोडश विकाराः, तेऽपि क्षेत्रान्तर्भूताः। एतेन क्षेत्रस्य 'यद्,यादृक्, यद्विकारि चेति त्रीणि विशेषणानि व्याख्यातानि वेदितव्यानि। गुणात्मकं चाव्यक्तमिति सर्वमेतद् गुणात्मकम्॥५॥

अथ यतश्च यदिति चतुर्थविशेषणं व्याख्यास्यन् क्षेत्रस्वरूपं निर्धारयति-

**"इच्छा द्वेषः सुखं दुःखं, सङ्घातश्चेतना धृतिः।**
**एतत् क्षेत्रं समासेन सविकारमुदाहृतम्" ॥६॥**

अर्थः—इच्छा=सुखतत्साधनविषया ममेदं भूयादिति स्पृहात्मिका चित्तवृत्तिरिच्छा, रागः, दुःखतत्साधनविषया ममेदं मा भूदिति स्पृहाविरुद्धा चित्तवृतिर्द्वेषः, क्रोधः, अनुकूलवेदनीयं सुखं, प्रतिकूल-वेदनीयं दुःखं, देहेन्द्रियाणां संहतिः सङ्घातः, तस्मिन्नभिव्यक्ता ज्ञान-शक्तिश्चेतना, अवसादं प्राप्तानां देहेन्द्रियाणामवष्टम्भनहेतुः प्रयत्नो धृतिः, अवसन्नानि शरीरेन्द्रियाणि ध्रियन्ते ययेति तद्व्युत्पत्तेः, इच्छादयो धृत्यन्ताः सर्वे यस्माच्चित्तादन्तःकरणादुद्भवन्ति, तस्य ते धर्माः, नात्मनः क्षेत्रज्ञस्य, चित्तं मनोऽन्तःकरणं क्षेत्रान्तर्भूतमिति तद्धर्मा अपि तदन्तरेऽभ्यधायिषत। एतद्=इदमव्यक्तादिधृत्यन्तं, क्षेत्रं=क्षेत्रपदवाच्यं, सविकारं=विकारेण महदादिना, तद्विकारेणेच्छादिना च सहितं, समासेन=संक्षेपेण, उदाहृतम्=उपपादितम्, उक्तं मया तुभ्यमित्यर्थः॥६॥

अथ क्षेत्रं प्रतिपाद्य क्षेत्रज्ञं प्रतिपादयिष्यन्नादौ तज्ज्ञानसाधनान्याह पञ्चभिः—

"अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं, स्थैर्यमात्मविनिग्रहः" ॥७॥

अर्थः—अमानित्वं=स्वस्मिन् उत्कृष्टत्वबुद्धिः प्रतिष्ठार्थमात्मनि पूज्यत्वभावना मानः, सोऽस्यास्तीति मानी, तस्य भावो मानित्वं, तदभावोऽमानित्वं, स्वस्मिन्नुत्कृष्टत्वाभिमानाभावः, अदम्भित्वं=स्वस्यान्यथा प्रदर्शनं, लाभपूजाख्यात्यर्थं वेषभाषाक्रियाचातुर्यादिभिः स्वमहत्त्वप्रकटनम्, अधार्मिकत्वेऽपि धार्मिकत्वेनात्मनः ख्यापनं दम्भः, सोऽस्यास्तीति दम्भी, तस्य भावो दम्भित्वं, तदभावोऽदम्भित्वं, स्वस्यान्यथाऽप्रदर्शनम्, अहिंसा=निष्प्रयोजनं प्राणिनां पीडनं हिंसा, तदभावोऽहिंसा, कायवाङ्मनोऽभिः प्राणिनामपीडनम्, क्षान्तिः=क्षमा, परापराधसहनं सहिष्णुत्वम्, आर्जवम्=ऋजुभावोऽवक्रत्वं, मनोवाक्कायानामैकरूप्यम् । आचार्योपासनं=वैदिकधर्मस्य कर्मयोगस्योपदेष्टुराचार्यस्य शुश्रूषानमस्कारादिप्रयोगेण सेवनं, शौचं=बहिरन्तःशुचित्वं, कायमलानां मृज्जलाभ्यां प्रक्षालनं बाह्यं शौचं, मनोमलानां रागद्वेषादीनां प्रतिपक्षभावनयाऽपनयनमान्तरं शौचम्, स्थैर्यं=स्थिरीभावः, स्वधर्मे कर्मयोगे प्रवृत्तस्यानेकान्तरायप्राप्तावपि तदेकनिष्ठत्वम्, आत्मविनिग्रहः=आत्मनो मनसो विशेषेण निग्रहो निरोधः, प्रतिषिद्धेषु विषयेषु मनःप्रवृत्त्यभाव इत्यर्थः ॥७॥

"इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम्" ॥८॥

अर्थः—इन्द्रियार्थेषु=इन्द्रियाणां श्रोत्रादीनामर्थेषु विषयेषु शब्दादिषु दृष्टादृष्टेषु वैराग्यं=रागाभावः, वीतो रागो यस्य,स विरागः, तस्य भावो वैराग्यमिति तद्व्युत्पत्तेः,रागस्तृष्णा, तदभावो वैतृष्ण्यम्, च=तथा, एव = निश्चयेनानहङ्कारः = गुणैरात्मश्लाघनाभावेऽपि मनसि प्रादुर्भूतोऽहमेव सर्वोत्कृष्ट इति गर्वोऽहङ्कारः, तदभावः,आत्मनि श्रेष्ठत्वाभिमानाभावः । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शन=जन्म

जननं, मृत्युः मरणं, जरा वृद्धत्वं, वार्द्धक्यं, व्याधयो ज्वरादयः, दुःखानि प्रियवियोगाप्रियसंयोगजान्याध्यात्मिकादीनि कष्टानि, दोषाः वातपित्तश्लेष्माणो मलमूत्रदुर्गन्धात्मानश्च, जन्म च, मृत्युश्च, जरा च, व्याधयश्च, दुःखानि च, दोषाश्च, तेषामनुदर्शनं सर्वप्राणिसाधारणत्वेनानुसन्धानं, मुहुर्मुहुः पर्यालोचनम्, अस्य फलमिन्द्रियार्थेषु वैराग्यमहङ्काराभावश्चेत्यर्थः ॥ ८ ॥

**"असक्तिरनभिष्वङ्गः, पुत्रदारगृहादिषु ।**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु" ॥९॥**

अर्थः—पुत्रदारगृहादिषु=पुत्रेषु दारेषु गृहेषु, आदिना धनपशुभृत्याः गृह्यन्ते, तेषु सर्वेषु, असक्तिः=सक्तिः सङ्गः, विकारहेतुः सम्बन्धः, विकारौ हर्षशोकौ, तदभावः, अनभिष्वङ्गः=अभिष्वङ्गोऽतिस्नेहः सक्तिविशेषः, पुत्रादिषु सुखिषु दुःखिषु सत्स्वहमेव सुखी दुःखीति बुद्धिहेतुस्तदात्म्याभिमानः, तदभावः। च=तथा, इष्टानिष्टोपपत्तिषु=इष्टानां सुखतत्साधनानाम्, अनिष्टानां दुःखतत्साधनानां चोपपत्तयः प्राप्तयः, तासु नित्यं=सर्वदा, समचित्तत्वं=तुल्यचित्तत्वं, नेष्टोपपत्तिषु हर्षः, नानिष्टोपपत्तिषु विषादः, सर्वदा हर्षविषादयोरभावः, इत्यर्थः ॥९॥

**"मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि" ॥१०॥**

अर्थः—च=तथा, अनन्ययोगेन=न विश्वरूपेश्वरादन्यो विद्यते भक्तव्यो भजनीयो यस्मिन्, तेनानन्येन योगेन भक्तियोगेन, मयि=विश्वरूपेश्वरे मयि, अव्यभिचारिणी=न व्यभिचारिणी, नानैकान्तिकी, स्थिरा, दृढा, भक्ति=सेवा, विश्वरूपेश्वरस्य ममाज्ञानां प्राणिनांसर्वदुःखनाशनात्मिका परिचर्या, यत्रेदमुच्यते "नत्वहं कामये राज्यं, न स्वर्गं नापुनर्भवम् । कामये दुःखतप्तानां, प्राणिनां दुःखनाशनम्" इति । विविक्तदेशसेवित्वं=विविक्तं शुद्धं, स्वभावतो वा संस्कारतो वा निर्मलं, चित्तप्रसादकरं देशं स्थानं सेवितुं शीलं यस्य, स विविक्तदेशसेवी, तस्य भावस्तत्त्वं, सदाऽशुचिभिर्वस्तुभिर्वर्जितस्य देशस्य स्थानस्य सेवनम्, जनसंसदि=जनानां प्राकृतमनुष्याणां संसदि समवायेऽरतिः=अप्रीतिः, प्रीत्यभावः नानुराग इत्यर्थः ॥ १० ॥

**"अध्यात्मज्ञाननित्यत्वं, तत्त्वज्ञानार्थदर्शनम् ।**
**एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा" ॥११॥**

अर्थः—अध्यात्मज्ञाननित्यत्वम्=आत्मविषयं ज्ञानमध्यात्मज्ञानं, तस्मिन् नित्यत्वं नित्यभावः, सर्वदा तन्निष्ठत्वम्, तत्त्वज्ञानार्थदर्शनम्= आत्मातिरिक्तानां प्रकृत्यादिभूम्यन्तानां सर्वेषामनात्मपदार्थानां तत्त्वस्य स्वरूपस्यासन्दिग्धानारोपितरूपस्य ज्ञानार्थं याथातथ्यतोऽवगत्यर्थं तत्सम्बन्धिशास्त्राणां प्रतिदिनमवेक्षनम्। यत्रैतत् स्मर्यते चतुर्थे मनुना—

"बुद्धिवृद्धिकराण्याशु धन्यानि हितानि च ।
नित्यं शास्त्राण्यवेक्षेत, निगमांश्चैव वैदिकान् ॥१९॥
यथा यथा हि पुरुषः शास्त्रं समधिगच्छति ।
तथा तथा विजानाति, विज्ञानं चास्य रोचते" ॥२०॥ इति।

विज्ञानं=प्रकृत्यादिविविधपदार्थज्ञानं, रोचते=देदीप्यते। एतद्=इदम् अमानित्वादर्शनान्तं विंशतिसंख्याकं ज्ञानं=ज्ञानसाधनं, ज्ञायतेऽनेनेति तद्व्युत्पत्तेः, इति=एवं, प्रोक्तं=प्रकथितं वेदविद्भिर्मुनिभिः, अतः=अस्मात् विंशतिसंख्याकाज्ज्ञानादन्यथा=विपरीतं यद्=मानित्वदम्भित्वादिकं यत्, तदज्ञानं=न ज्ञानसाधनं प्रोक्तम्, तस्मादेतत् त्याज्यमित्यर्थः ॥२०॥

अथ क्षेत्रज्ञज्ञानसाधनानि कथयित्वा, क्षेत्रज्ञस्वरूपं कथयन्नाह—

**"ज्ञेयं यत् तत् प्रवक्ष्यामि, यज्ज्ञात्वाऽमृतमश्नुते ।**
**अनादिमत् परं ब्रह्म, न सत् तत् नासदुच्यते" ॥१२॥**

अर्थः—यत्=यत् क्षेत्रज्ञस्वरूपं, ज्ञेयम्=अमानित्वादिभिर्ज्ञान- साधनैर्ज्ञातव्यं, तत्=तत् क्षेत्रज्ञस्वरूपं, प्रवक्ष्यामि=प्रकर्षेण यथावत् वक्ष्यामि, कथयिष्यामि, यज्ज्ञात्वा = यत् क्षेत्रज्ञस्वरूपं बुद्ध्वाऽवगत्य, पुरुषोऽमृतं=मरणरहितमपुनर्भवं मोक्षम्, अश्नुते=व्याप्नोति, प्राप्नोति। किं तत् क्षेत्रज्ञस्वरूपम्? अनादिमत्=आदिः कारणं यस्यास्ति, तदादिमत् कार्यम्, अनित्यं, नादिमदनादिमत् नित्यं, परं=प्रकृतेरव्यक्तात् परं प्रकृष्टं निरतिशयं, ब्रह्म=बृहत्, अपरिच्छिन्नं, परमात्मवस्तु, तत्= अदः क्षेत्रज्ञस्वरूपं, न सत्=व्यक्तं कार्यं, नासत्=अव्यक्तं कारणम्,

उच्यते = कथ्यते, नियतत्वान्न कार्यम्, अपरिणामित्वान्न कारणम्, कार्यात् कारणाद् विलक्षणमित्यर्थः ॥ १२ ॥

अथ यतस्वरूपः क्षेत्रज्ञ इति निरूप्य यत्प्रभावः सः, इति निरूपयितु-मारभते पञ्चभिः—

**"सर्वतःपाणिपादं तत्, सर्वतोऽक्षिशिरोमुखम्।**
**सर्वतःश्रुतिमल्लोके, सर्वमावृत्य तिष्ठति" ॥१३॥**

अर्थः—तत् = अदः क्षेत्रज्ञलक्षणं परं ब्रह्म, सर्वतःपाणिपादं = समस्तं पदं, सर्वतः, इति सार्वविभक्तिकस्तसिः, सर्वतः सर्वत्र, सर्वासु दिक्षु, पाणयो हस्ताः, पादाश्चरणाश्च यस्य, तत् सर्वतोहस्तचरणं, सर्वतोऽक्षिशिरोमुखं = सर्वतः सर्वत्र, सर्वासु दिक्षु, अक्षीणि नेत्राणि, शिरांसि शीर्षाणि, मुखानि वदनानि च यस्य, तत् सर्वतोनेत्रशीर्षवदनं, सर्वतःश्रुतिमत् = सर्वतः सर्वत्र, सर्वासु दिक्षु, श्रुतयः श्रवणानि सन्त्यस्य, तत् सर्वतःश्रवणं, लोके = लोकत्रये, सर्वं = यद् यद् वस्तु किञ्चिदस्ति प्राणि वाऽप्राणि वा, तत् सर्वम्, आवृत्य=बहिरन्तरभिव्याप्य, तिष्ठति = वर्तते। सर्वासु दिक्षु वर्तमानानां प्राणिनां यानि हस्तचरण-नेत्रशीर्षास्यश्रवणानि सन्ति, तानि सर्वाणि क्षेत्रज्ञस्य परस्य ब्रह्मणः सन्ति, सर्वभूतान्तरात्मत्वादित्यर्थः ॥ १३ ॥

**"सर्वेन्द्रियगुणाभासं, सर्वेन्द्रियविवर्जितम्।**
**असक्तं सर्वभृच्चैव, निर्गुणं गुणभोक्तृ च" ॥१४॥**

अर्थः—सर्वेन्द्रियगुणाभासं=सर्वेषां श्रोत्रादीनामिन्द्रियाणां करणानां यो गुणो धर्मःआभासो विषयाणामाभासनं, स्वस्वविषयप्रकाशनं, सोऽस्ति यस्य, तत् सर्वेन्द्रियधर्मविषयाभासं, स्वविषयावभासनलक्षणेन्द्रियधर्मकं, सर्वेन्द्रियविवर्जितं=सर्वैः श्रोत्रादिभिरिन्द्रियैः करणैर्विवर्जितं विरहितं, सर्वेन्द्रियविरहितमपि सर्वेन्द्रियधर्मवदिति क्षेत्रज्ञप्रभावोऽयमद्भुतः। यत्रेदं श्रूयते "अपाणिपादो जवनो ग्रहीता, स पश्यत्यचक्षुः स शृणो-त्यकर्णः। स वेत्ति वेद्यं, न च तस्यास्ति वेत्ता, तमाहुरग्र्यं पुरुषं महान्तम्" (श्वे० उ० ३। १९) इति। असक्तं = सक्तिरासक्तिः सङ्गः विकारहेतुसम्बन्धः, तच्छून्यं, च = तथा, एव = निश्चयेन सर्वभृत् =

सर्वस्य प्राणिजातस्य भर्ता पोषिता पालयिता, सर्वं बिभर्ति, बिभर्मीति च नास्ति सक्तिः, निर्गुणं=गुणेभ्यः प्रकृतितत्कार्येभ्यः शरीरेन्द्रियविषयेभ्यो निष्क्रान्तं, च = तथा, गुणभोक्तृ=गुणानां शरीरेन्द्रियाविषयाणां प्रकृतितत्कार्याणां भोगस्योपलम्भस्यानुभवस्य कर्तृ, गुणसम्बन्धहीनं सद् गुणोपभोक्तृ, इत्यर्थः ॥ १४ ॥

"बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात् तदविज्ञेयं, दूरस्थं चान्तिके च तत्" ॥१५॥

अर्थः—भूतानां=प्राणिनां चराचराणां सर्वेषां, बहिः=देहाद् बहिर्बाह्यं, व्यापकत्वात्, च=तथाऽन्तः=देहस्यान्तरे मध्ये,सर्वभूतान्तरात्मत्वात्, क्षेत्रज्ञलक्षणं परं ब्रह्म वर्तते, अचरं=स्थावरं,च=तथा, चरं=जंगमम्, एव=निश्चयेन, तदेवास्ति, सर्वकारणत्वात् । तद्= अदः क्षेत्रज्ञरूपं परं ब्रह्म,सूक्ष्मत्वात्=भूतेन्द्रियाणां सर्वेषां कारणभूताद्व्यक्तात् प्रकृतेरपि सूक्ष्मत्वात् ,रूपादिहीनत्वेन सर्वेन्द्रियागोचरत्वाद्, अविज्ञेयं=विशेषतो ज्ञातुं वेदितुमशक्यम्, इदमेवमिति स्पष्टज्ञानार्हं न विद्यते,अत एव च तत्=अदःक्षेत्रज्ञरूपं परं ब्रह्म,दूरस्थं=स्थूलदर्शिनां दूराद् दूरे स्थितं, च=तथाऽन्तिके=सूक्ष्मदर्शिनां वेदविदां समीपतः समीपे वरीवृत्यते । तथाचेशावास्यमन्त्रोऽपि "तदेजति तन्नैजति, तद् दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य, तदु सर्वस्यास्य बाह्यतः" (ईशो० ५) इति । "बृहच्च तद् दिव्यमचिन्त्यरूपं, सूक्ष्माच्च तत् सूक्ष्मतरं विभाति । दूरात् सुदूरे तदिहान्तिके च, पश्यत्स्विहैव निहितं गुहायाम्" (मुं० उ० ३।१) इति च मुण्डकमन्त्र इत्यर्थः ॥१५॥

"अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं, ग्रसिष्णु प्रभविष्णु च" ॥१६॥

अर्थः—च=किञ्च, तत्=अदः क्षेत्रज्ञरूपं परं ब्रह्म, भूतेषु= प्राणिषु चराचरेषु सर्वेषु, प्रतिदेहम् अविभक्तं=व्योमवदविभिन्नमेकं, ज्ञेयं=ज्ञातव्यं, च=तथा, विभक्तमिव=देहभेदेन विभिन्नमिव, घटादिभेदेन व्योमवदनेकमिव, स्थितम्=अवस्थितं, ज्ञेयं=ज्ञातव्यम् । च=तथा, भूतभर्तृ=भूतानां प्राणिनां चराचराणां सर्वेषां भरण कर्तृ,

भरणं पोषणं पालनं, पोषितृ, पालयितृ, स्थितिकाले, ग्रसिष्णु=ग्रसनं संहरणं, ग्रसनशीलं संहरणस्वभावं संहर्तृ, प्रलयकाले, च = तथा, प्रभविष्णु=प्रकर्षेणानेकात्मना भवनशीलम्, उत्पत्तिकाले, भूतानां तेषामुत्पादकं, ज्ञेयं=ज्ञातव्यमित्यर्थः ॥ १६ ॥

किञ्च—

"ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं, हृदि सर्वस्य विष्ठितम्" ॥१७॥

अर्थः—तद् = अदः क्षेत्रज्ञरूपं परं ब्रह्म, ज्योतिषामपि=प्रकाशयितृणां सूर्यादीनामपि, ज्योतिः=प्रकाशयितृ प्रकाशशक्तिप्रदातृ, उच्यते=कथ्यते वेदविद्भिः,तथा तमसः=तमःप्रकृतिः, चैतन्यलक्षणप्रकाशविरहात्, ततः परं=परस्ताद्,दूरं, तेनास्पृष्टमित्येतद्, उच्यते=कथ्यते। तथा च श्रुतयः "तच्छुभ्रं ज्योतिषां ज्योतिः" (मुण्डको० २।२।१) "येन सूर्यस्तपति तेजसेद्धः" (तै० ब्रा० ३।१२।९) "आदित्यवर्णं तमसः परस्तात्" (श्वे० उ० ३ । ८) इत्याद्याः । किञ्च, ज्ञानं = येन वस्तु ज्ञायते तद्,ज्ञेयं=ज्ञानेन ज्ञातुं योग्यं यद् वस्तु,तद्,ज्ञानगम्यं=ज्ञानेन गम्यं प्राप्यं ज्ञानिनां कर्मयोगिनां यद् वस्तु,फलं,विष्णोः परमं पदं,तद्, इत्येतद् वस्तुत्रयं तदेव क्षेत्रज्ञरूपं परं ब्रह्मोच्यते,तच्च सर्वस्य=समस्तस्य प्राणिजातस्य हृदि=हृदये बुद्धौ गुहायां विष्ठितं=विशेषेण प्रत्यगात्मरूपेणान्तर्यामिरूपेण च स्थितमित्यर्थः ॥१७॥

अथोपक्रान्तं क्षेत्रादिकमुपसंहरन्नाह—

"इति क्षेत्रं तथा ज्ञानं, ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय, मद्भावायोपपद्यते" ॥१८॥

अर्थः—इति=एवं, क्षेत्रं=महाभूतादिधृत्यन्तं क्षेत्रं, तथा ज्ञानम्= अमानित्वादितत्त्वज्ञानार्थदर्शनपर्यन्तं ज्ञानं, च = तथा ज्ञेयं="ज्ञेयं यत् तत्," इत्यारभ्य "हृदि सर्वस्य विष्ठितम्" इत्येतदन्तं ज्ञेयं, समासतः= संक्षेपतः उक्तम् = अभिहितम् । मद्भक्तः=विश्वरूपेश्वरस्य मम भक्तः सेवकः,एतत्=त्रयमेतद् विज्ञाय=विशेषेण याथातथ्येन ज्ञात्वा,विदित्वा, मद्भावाय=मम विश्वरूपेश्वरस्य ब्रह्मणो भावो मद्भावः, ब्रह्मत्वं कैवल्यं,

तदर्थमुपपद्यते=योग्यः सम्पद्यते, अत्रामुत्र च सर्वत्र ब्रह्मभावापत्ति-रूपां मुक्तिं लभते, इत्यर्थः ॥ १८ ॥

सप्तमाध्याये ये ईश्वरस्य परापरे प्रकृती द्वे उपन्यासिषाताम्, यद्योनीनि चेमानि सर्वाणि भूतान्युपन्यासिषत, ते एवैतौ क्षेत्रक्षेत्रज्ञौ। तत्रापरा प्रकृतिः क्षेत्रम्, परा प्रकृतिः क्षेत्रज्ञः। तावेव प्रकृतिपुरुषौ। तौ चानादी, तद्योनीनि चेमानि सर्वाणि भूतानीत्येतदधुनोपन्यस्यते, प्रकृतिपुरुषयोः क्षेत्रक्षेत्रज्ञयोः परापरप्रकृतितां प्रत्याययितुम्—

**"प्रकृतिं पुरुषं चैव, विद्ध्यनादी उभावपि ।**
**विकारांश्च गुणांश्चैव, विद्धि प्रकृतिसम्भवान्" ॥१९॥**

अर्थः—प्रकृतिं=क्षेत्रं, च=तथा, पुरुषं=क्षेत्रज्ञम्, एव=निश्चयेन, उभावपि=द्वावपि, अनादी=नित्यौ, न विद्यते आदिः कारणं ययोरिति तद्व्युत्पत्तेः, ईश्वरस्यानादित्वेन नित्यत्वेन तच्छक्तिभूतयोरुभयोः परापरप्रकृत्योः क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोरप्यनादित्वेन नित्यत्वेन भवितव्यम्। अन्यथा नासौ कदाचिदीश्वरः सिध्येत्। स्वशक्तिभूताभ्यां परापरप्रकृतिभ्यां हि ताभ्यां चराचरस्य जगतो जन्मादिहेतुर्भवन्नीश्वरो न ताभ्यामृते। अशक्तस्य तद्धेतुत्वानुपपत्तेः। नह्यशक्तश्चराचरं जगज्जनयितुं जीवयितुं मारयितुं च शक्नोति, तदभावे कदाचिदीश्वरो वा भवितुमर्हति। सादित्वं च प्रकृतिपुरुषयोरनवस्थाप्रसङ्गात् नाभ्युपगम्यते, अतोऽनादीश्वरशक्तित्वात् नित्येश्वरप्रकृतित्वात् तौ द्वावपीश्वरवदनादी नित्यौ विद्धि=जानीहि। विकारान्=शरीरेन्द्रियादिमहत्तत्त्वान्तान् समस्तान् विकारान्, च=तथा, गुणान्=सुखदुःखमोहात्मकान् सत्त्वरजस्तमःसंज्ञकान्, च=उभयान् तान्, प्रकृतिसम्भवान्=प्रकृतिकारणकान्, प्रकृतेः सम्भूतान्, विद्धि=जानीहीत्यर्थः ॥ १९ ॥

ननु प्रकृतिर्यथा शरीरादिविकाराणां गुणानां च सुखदुःखादीनां कारणं, तथा पुरुषः कस्य कारणम्? इति जिज्ञासायां प्रकृतिपुरुषयोरुभयोः कारणत्वं विविनक्ति—

**"कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते" ॥२०॥**

अर्थः—प्रकृतिः=मायानाम्नी त्रिगुणात्मिका प्रकृतिः, कार्यकारणकर्तृत्वे=कार्यं शरीरं,तेन तदारम्भकाणि भूम्यादीनि स्थूलभूतानि पञ्च,तत्स्थानि सर्वाणीन्द्रियाणि,तेषां विषयाश्च गृह्यन्ते,कारणं महदाद्याः प्रकृतिविकृतयः सप्त,तेषां कार्यकारणानामुभयेषां कर्तृत्वे निर्मातृत्वे,तदाकारपरिणामे,हेतुः=कारणम्,उच्यते=कथ्यते। पुरुषः=क्षेत्रज्ञः,सुखदुःखानां=गुणात्मकानां सुखदुःखमोहानां भोग्यानां, विषयाणां भोक्तृत्वे=उपलब्धृत्वेऽनुभवितृत्वे, हेतुः=कारणं, सुखदुःखमोहानां भोगस्योपलम्भस्यानुभवस्याश्रयः,उच्यते=कथ्यते वेदविद्भिर्मुनिभिरित्यर्थः ॥२०॥

ननु क्षेत्रज्ञः पुरुषोऽसङ्गः "असङ्गोऽयं पुरुषः" (बृ० उ० ४ । २ । १५) इति श्रुतेः, स कथं भोग्यानां सुखदुःखमोहानां गुणानां भोक्तृत्वे हेतुः सम्पत्स्यते ?, तत्राह—

"पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणान् ।
कारणं गुणसङ्गोऽस्य, सदसद्योनिजन्मसु" ॥२१॥

अर्थः—हि=निश्चयेन, पुरुषः=क्षेत्रज्ञः पुरुषः, प्रकृतिस्थः=कार्यकारणरूपेण परिणतायां प्रकृतौ तादात्म्येन स्थितः,शरीरेन्द्रियसङ्घातात्मिकां प्रकृतिमात्मभावेनोपगतः, प्रकृतिजान्=प्रकृतितो जातान् गुणान्=सत्त्वादिगुणभूतान् सुखदुःखमोहान् भोग्यान्, भुङ्क्ते=सुखी, दुःखी, मूढोऽहमित्येवमुपलभतेऽनुबोभूयते। प्रकृतितादात्म्यनिबन्धनं हि पुरुषस्य गुणभोक्तृत्वं, न स्वरूपनिबन्धनम् । स्वरूपस्य नित्यत्वेन नित्यभोक्तृत्वे मोक्षाभावप्रसङ्गात् । गुणभोक्तृत्वं गुणभोगः, स एव पुरुषस्य संसारः, तदभावोऽसंसारित्वं मोक्षः । अस्य=एतस्य प्रकृतिस्थस्य प्रकृति तादात्म्येनोपगतस्य पुरुषस्य, सदसद्योनिजन्मसु=सद्‌योनयो देवर्षिमनुष्ययोनयः, असद्‌योनयः पशुपक्ष्यादियोनयः, तेषु पुनःपुनर्जन्मानि सदसद्योनिजन्मानि, तेषु, कारणं=हेतुर्गुणसङ्गः=गुणात्मकेषु सुखदुःखमोहेषु सङ्गः सक्तिरिदं मे स्यादिदं मे न स्यादित्येवंलक्षणोऽभिनिवेशो रागद्वेषादिविकारहेतुः सम्बन्धः । येषां पुनर्गुणेषु वर्तमानानामपि ज्ञानिनां कर्मयोगिनां गुणसङ्गो न विद्यते, तेषां न सदसद्‌योनिषु जन्म, गुणसङ्गाख्यकारणाभावादित्यर्थः ॥ २१ ॥

अथ प्रकृतिस्थोऽपि यो न प्रकृतिस्थः, तस्य पुरुषस्य स्वरूपं निर्दिशन्नाह—

"उपद्रष्टाऽनुमन्ता च, भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो, देहेऽस्मिन् पुरुषः परः" ॥२२॥

अर्थः—अस्मिन्=एतस्मिन् प्रकृत्यात्मके देहे=कार्यकरणसङ्घातलक्षणे शरीरे, पुरुषः=क्षेत्रज्ञो जीवः, परः=शरीरे वर्तमानोऽपि शरीराद् भिन्नः, उपद्रष्टा=सव्यापारस्य कार्यकरणसङ्घातस्य सामीप्येनेक्षिता, कार्यं करणानि च, लोकशास्त्राप्रतिषिद्धं स्वंस्वं व्यापारं कुर्वन्ति, स्वंस्वं व्यापारं कुर्वतां तेषां सन्निधिमात्रेण निरीक्षकः, अनुमन्ता=अनुमननस्यानुकूलमतेर्दाता, अनुमोदनमनुमननं, कार्यस्य करणानां च ये व्यापारविशेषाः, लोकशास्त्राप्रतिषिद्धाः क्रियाभेदाः, तेषु परितोषस्य प्रकटयिता, च=तथा, भर्ता=कार्यकरणसङ्घातस्य पोषिता, युक्ताहारविहारादिना धारकः, भोक्ता=प्राप्तानां प्रकृतिगुणानां सुखदुःखानां समभावेनोपलब्धाऽनुभविता, इत्थम्भूतो यः पुरुषः, स महेश्वरः=शरीरेन्द्रियाणामीशितृत्वान्नियन्तृत्वान्महांश्चासावीश्वरः स्वामी, च=तथा, परमात्मा=परमः श्रेष्ठश्चासौ प्रत्यगात्मा, इत्यपि=एवमप्युक्तः=अभिहितो वेदविद्भिरित्यर्थः ॥ २२ ॥

अथ प्रकृतिपुरुषयोर्ज्ञानस्य फलमाह—

"य एवं वेत्ति पुरुषं, प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि, न स भूयोऽभिजायते" ॥२३॥

अर्थः—यः=यो मनुष्यः, एवं=यथोक्तप्रकारेण, पुरुषं=क्षेत्रज्ञं, वेत्ति=जानाति, च=तथा, गुणैः=गुणात्मकैः सुखदुःखादिभिर्विकारैः, सह=सार्धं, प्रकृतिं=क्षेत्रभूतां मायाख्यां त्रिगुणात्मिकां प्रकृतिं, वेत्ति जानाति, सः=असौ प्रकृतिपुरुषयोर्यथोक्तप्रकारेण स्वरूपस्य वेत्ता, ज्ञाता, सर्वथा=सर्वप्रकारेण हिंसाकर्मणा वाऽहिंसाकर्मणा वा, वर्तमानोऽपि=लोके प्रवर्तमानोऽपि, भूयः=पुनर्नाभिजायते=नाभिजन्यते, नोत्पद्यते, सर्वथा मोमुच्यते इत्यर्थः ॥ २३ ॥

अथ पुरुषज्ञाने साधनविकल्पानाह द्वाभ्याम्—

"ध्यानेनात्मनि पश्यन्ति, केचिदात्मानमात्मना ।
अन्ये सांख्येन योगेन, कर्मयोगेन चापरे" ॥२४॥

अर्थः—केचित्=हठयोगिनः केचित्, ध्यानेन=ध्यानं समाधिः, तेन योगसमाधिना,आत्मना=समाहितेन मनसा चित्तेनात्मनि=देहे, आत्मानं=प्रत्यगात्मानं पुरुषं क्षेत्रज्ञं, पश्यन्ति=साक्षात्कुर्वन्ति,अन्ये=ततोऽन्ये कर्मसंन्यासिनः,सांख्येन योगेन=आत्मज्ञानं सांख्यं, तदात्मकेन योगेन,आत्मज्ञानरूपयोगेन,ज्ञानयोगेन,आत्मनि=देहे, आत्मना=मनसा, श्रवणादिसंस्कृतेनान्तःकरणेनात्मानं=प्रत्यगात्मानं पुरुषं, पश्यन्ति=लोचयन्ति, च=तथाऽपरे=सर्वोत्कृष्टाः, न पराः प्रकृष्टाः उत्कृष्टाः विद्यन्ते येभ्य इति तद्व्युत्पत्तेः, कर्मयोगिनः, कर्मयोगेन=निष्काम-कर्मयोगेनात्मनाऽऽत्मानमात्मनि=देहे,पश्यन्ति=लोकयन्ति,अनुभवन्ति, प्रत्यक्षयन्तीत्यर्थः ॥ २४ ॥

"अन्ये त्वेवमजानन्तः, श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव, मृत्युं श्रुतिपरायणाः" ॥२५॥

अर्थः—अन्ये तु=पूर्वोक्तेभ्यस्त्रिभ्योऽन्ये तु, वैलक्षण्यं तोरर्थः, एवं=यथोक्तप्रकारेण, अजानन्तः=आत्मानं पुरुषमपश्यन्तः, अन्येभ्यः=अपरेभ्यः कर्मयोगिभ्यः, श्रुत्वा=पुरुषस्यात्मनो दर्शनोपायं कर्मयोग-माकर्ण्य, उपासते=यथाश्रवणमनुतेष्ठीयन्ते, श्रुतस्य कर्मयोगस्य यथा-श्रुति श्रद्धाभक्तिभ्यां पुनःपुनरनुष्ठानमुपासनं, तत् कुर्वते, विदधते । तेऽपि=भिन्नक्रमोऽपिः, श्रुतिपरायणाः इत्यस्याग्रे सम्बध्यते, अमी श्रुतिपरायणा अपि=श्रुतिः कर्मयोगगोचरं श्रवणमुपदेशः, परमुत्कृष्ट-मयनं पुरुषस्यात्मनः प्राप्तौ ज्ञाने दर्शने साधनं येषामिति तद्व्युत्पत्तेः, यथोपदेशं कर्मयोगानुष्ठानैकप्रवणा अपि, च=निःसन्देहं, कर्मयोगा-नुष्ठानेनात्मानं पुरुषं साक्षात्कृत्य, मृत्युं=मरणम्, अतितरन्त्येव=नातितरन्तीत्यवधारणेन व्यवच्छिद्यते, अवश्यमतिक्रामन्ति, न जातु पुनर्म्रियन्ते, नाभिजायन्ते, इत्यर्थः ॥२५॥

अथ मरणातिक्रमसाधनं पुरुषस्यात्मनः क्षेत्रज्ञस्य दर्शनं ज्ञानं विशदयिष्यन्नादौ प्राणिमात्रस्य क्षेत्रक्षेत्रज्ञसंयोगोद्भवत्वमाह—

"यावत् संजायते किञ्चित्, सत्त्वं स्थावरजंगमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्, तद् विद्धि भरतर्षभ!" ॥२६॥

अर्थः--भरतर्षभ=हे भरतवंशश्रेष्ठ ! यावत्=यावत्परिमाणकं, किञ्चित्=किमपि, स्थावरजंगमं=स्थावररूपं जंगमरूपम्, अचरं चरं, सत्त्वं=प्राणि, सञ्जायते=समुत्पद्यते, तत्=सर्वं तत् सत्त्वं, क्षेत्रक्षेत्रज्ञसंयोगात्=क्षेत्रस्य प्रकृतेः, क्षेत्रज्ञस्यात्मनः पुरुषस्य च संयोगात् अविवेककृतात् सम्बन्धात् संजायते, इत्येवं त्वं विद्धि=जानीहीत्यर्थः ॥ २६ ॥

अथात्मनः क्षेत्रज्ञस्य पुरुषस्य ज्ञानं विशदयति—

"समं सर्वेषु भूतेषु, तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं, यः पश्यति स पश्यति" ॥२७

अर्थः—सर्वेषु=समस्तेषु, भूतेषु=भवनधर्मकेषु स्थावरजंगमात्मकेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु, प्राणिदेहेषु, समं=तुल्यमेकरसमुत्कर्षापकर्षवर्जितं प्रतिदेहमेकं यथा भवति तथा, तिष्ठन्तं=स्थितिं कुर्वन्तं, निवसन्तं, विनश्यत्सु=विनाशं भजमानेषु तेषु भूतेषु त्वाविनश्यन्तं=विनाशमभजमानं, षण्णां भावविकाराणां जनिप्रभृतीनां विनाशोऽन्तिमो विकारः, तत्प्रतिषेधेन पूर्वे विकाराः पञ्च स्वयं प्रतिषिध्यन्ते, तेन विक्रियमाणेषु भूतेषु न विक्रियमाणमविक्रियम, अनित्येषु तेषु नित्यमित्येतत्, परमेश्वरं=सर्वस्य देहेन्द्रियसङ्घातस्य परमं स्वामिनं, यः पश्यति=जानाति, स पश्यति=स एव सम्यक् जानातीत्यर्थः ॥२७॥

अथास्य सम्यग्दर्शनस्य पुरुषज्ञानस्य फलमाह—

"समं पश्यन् हि सर्वत्र, समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनाऽऽत्मानं, ततो याति परां गतिम् ॥२८

अर्थः-सर्वत्र=सर्वेषु भूतेषु, समवस्थितं=सम्यग् जन्मादिविनाशान्तषड्भावविकारशून्यतयाऽवस्थितम्, ईश्वरं=देहेन्द्रियस्वामिनं परमात्मानं, हि=निश्चयेन समं=तुल्यमेकरसं यथा भवति तथा पश्यन्=लोकयन्,

आत्मना=स्वेनात्मान=स्वं, बन्धुमबन्धुं वा कश्चिद्, न हिनस्ति=न हन्ति, हन्तृहन्तव्यबुद्धेरभावात्। नह्यात्मा हन्ता हन्तव्यश्च युज्यते, नित्यैकरसस्य तस्य तत्रानुपपत्तेः। ततः=तथाविधदर्शनतो हन्तृत्वेऽप्यहन्तृत्वात्, परां=प्रकृष्टां, गतिं=परब्रह्मप्राप्तिलक्षणां मुक्तिं, याति=प्राप्नोतीत्यर्थः॥ २८॥

ननु ज्ञानी स्यादज्ञानी वा भवेत्, तेन यावज्जीवं हिंसात्मकं चाऽहिंसात्मकं च स्ववर्णोचितं सर्वं कर्म कर्तव्यं,तत् कथमुच्यते "न हिनस्त्यात्मनाऽऽत्मानम्" इति, तत्राह—

"प्रकृत्यैव च कर्माणि, क्रियमाणानि सर्वशः।
यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति" ॥२९॥

अर्थः—च=किञ्च,सर्वशः=सर्वाणि,कर्माणि=हिंसारूपाणि वाऽहिंसारूपाणि वा स्ववर्णोचितानि कर्माणि,प्रकृत्यैव=देहेन्द्रियरूपेण परिणतया प्रकृत्यैव,न पुरुषेणात्मना,इत्यवधारणार्थः,क्रियमाणानि=विधीयमानानि निर्वर्त्यमानानि, यः पश्यति=यो जानाति,तथाऽऽत्मानं=स्वम्,अकर्तारं=तेषां सर्वेषां कर्मणामकर्तारमविधातारं पश्यति=जानाति,स पश्यति=स एव जानाति, स हन्ता सन्नपि न हन्ति, हन्यमानेऽपि क्वचिद् देहे न जातु हन्यते, अविनाशित्वादित्यर्थः ॥२९॥

किञ्च—

"यदा भूतपृथग्भावमेकस्थमनुपश्यति।
तत एव च विस्तारं, ब्रह्म सम्पद्यते तदा" ॥३०॥

अर्थः—यदा=यस्मिन् काले, भूतपृथग्भावं=भूतानां स्थावरजंगमानां प्रकृतितत्कार्याणां सर्वेषां पृथग्भावं पृथक्त्वं नानात्वम्,एकस्थम्=एकस्मिन्नात्मनि ब्रह्मणि स्थितमवस्थितम्, एकमेवात्मानं भूतपृथग्भावेन वर्तमानमनुपश्ययि=अनुभवति। च=तथा, तत एव=तस्मादेवैकस्मादात्मनः सकाशात्, नान्यस्मात्कुतश्चिदित्यवधारणार्थः, विस्तारं=भूतपृथग्भावस्य विकासमाविर्भावमनुपश्यति,तद्यथा श्रूयते छान्दोग्योपनिषदि, तैत्तिरीयके च "आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्ताद्,आत्मा दक्षिणत आत्मोत्तरतः,आत्मैवेदं सर्वम्"(छां० उ०

७।२५।२) "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद् वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधिभ्योऽन्नम्, अन्नात् पुरुषः" (तै० उ० २।) इति । तदा=तस्मिन् काले, ब्रह्म=परमात्मा, सम्पद्यते=ब्रह्मीभूयते "तदपश्यत, तदभवत्, तदासीत्" (यजु० ३२। १२) इति याजुषमन्त्रादित्यर्थः ॥ ३० ॥

अथ प्रतिदेहं वर्तमानस्यैकस्य क्षेत्रज्ञस्यात्मनः पुरुषस्य देहसम्बन्धेन प्राप्तं दोषजातं हेतुद्वयेन वारयन् प्रागुक्तमकर्तृत्वं तस्य स्पष्टयति—

"अनादित्वान्निर्गुणत्वात्, परमात्माऽयमव्ययः ।
शरीरस्थोऽपि कौन्तेय ! न करोति न लिप्यते" ॥३१॥

अर्थः=अयम्=एष प्रतिदेहमापरोक्ष्येणानुभूयमानः, परमात्मा=अपरमात्मभ्यो देहादिभ्योऽन्यः श्रेष्ठः प्रत्यगात्मा क्षेत्रज्ञः पुरुषः, शरीरस्थोऽपि=प्रतिशरीरं स्थितोऽपि, शरीरेषु वर्तमानोऽपि, अव्ययः=व्ययो विनाशः, तद्रहितः, शरीरजन्मना यथा न जायते, तथा तद्व्ययेन न व्येति, तद्विनाशेन न विनश्यति । व्ययो द्विविधः स्वरूपेण, धर्मेण च, न स्वरूपेणात्मनो व्ययोऽनादित्वात्, आदिः कारणं, तद्रहितत्वात्, अनारभ्यत्वात्, निरवयवत्वात्, नित्यत्वात् । यद् हि वस्तु आदिमद् भवति, तत् सावयवत्वात् स्वरूपेण व्येति, यथा घटपटादिकम्, अयमात्मा नादिमान्, अनादित्वाच्च निरवयवः, अतो नास्ति तस्य घटपटादेरिव स्वरूपतो व्ययः, नापि धर्मतः, निर्गुणत्वात्=गुणो धर्मः, तद्रहितत्वात्, निर्धर्मकत्वात् । सगुणो हि गुणव्ययेन व्येति, यथा प्रकृत्यादिकम्, आत्मा च निर्गुणो निर्धर्मकः, इच्छादयश्च क्षेत्रस्य गुणाः धर्माः, नात्मनः क्षेत्रज्ञस्येत्युक्तं प्राक् । निर्गुणत्वादेव चैष आत्मा शरीरस्थोऽपि न करोति=न कर्तृत्वमाश्रयति, कर्तृत्वस्य प्रकृतिधर्मत्वनिश्चयात्, यस्मान्न करोति, तस्मादेव न लिप्यते=कर्मफलैर्न संस्पृश्यते, कर्माकर्तुः कर्मफललेपासम्भवात् "क्रियाफलं प्रयोक्तरि" इति च वैदिकाभ्युपगमात् । यो हि कर्म करोति, स एव कर्मफलेन लिप्यते, कौन्तेय=हे कुन्तीपुत्र ! इत्यर्थः ॥३१॥

अथात्मनो लेपाभावं दृष्टान्तेनोपपादयति—

"यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे, तथाऽऽत्मा नोपलिप्यते" ॥३२

अर्थः—यथा=येन प्रकारेण, सर्वगतं = सर्वेषु वस्तुषु घटमठादिषु दुष्टेष्वदुष्टेषु च गतं प्राप्तं व्याप्तम्, आकाशं=व्योम, सौक्ष्म्यात्=सूक्ष्मत्वात्, असङ्गस्वभावत्वात्, नोपलिप्यते =तत्तद्वस्तुधर्मैर्नोपस्पृश्यते, तथा=तेन प्रकारेण, सर्वत्र=सर्वस्मिन् उत्तमेऽधमे वा, देहे = शरीरेऽवस्थितः=वर्तमानः, आत्मा=क्षेत्रज्ञः पुरुषो, नोपलिप्यते=देहधर्मैः कर्मभिस्तत्फलैश्च सुखदुःखादिभिर्नोपस्पृश्यते, श्रूयते च "न लिप्यते कर्मणा पापकेन" (बृ० उ० ४।४।२३) इति, पापकेन=पापेन, पुण्येन, च इत्यर्थः ॥३२

नन्वात्मा देहतद्धर्मान् प्रकाशयति, नाकाशमिति विषमो दृष्टान्तः? तत्राह—

"यथा प्रकाशयत्येकः, कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं, प्रकाशयति भारत !" ॥३३॥

अर्थः—भारत=हे भरतवंशोद्भव ! यथा=यद्वत्, एकः=एकलो रविः=सूर्यः, कृत्स्नं=समस्तं निरवशेषम्, इमम्=इमकं, लोकं = लोक्यमानं ग्रहोपग्रहाख्यं स्वसम्बद्धं लोकजातं, प्रकाशयति= अवभासयति, लोकधर्मैश्च नोपलिप्यते, तथा=तद्वत्, क्षेत्री=क्षेत्रज्ञः पुरुषः परमात्मा, क्षेत्रं=महाभूतादिधृत्यन्तं क्षेत्रनामकं शरीरं, कृत्स्नं=समस्तं, निरवशेषं, धर्मैःसहितं, प्रकाशयति = अवभासयति, दीपयति, सूर्यवत्प्रकाशकतया च प्रकाश्यस्य तस्य धर्मैर्नोपलिप्यते, तथा च काठकी श्रुतिः "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा, न लिप्यते लोकदुःखेन बाह्यः" (कठ० ५।११) इति । बाह्यः = सर्वभूतान्तरस्थोऽप्यसङ्गत्वाद् बाह्यः, इत्यर्थः ॥ ३३ ॥

अथाध्यायार्थमुपसंहरन्नाह—

"क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च, ये विदुर्यान्ति ते परम् ॥३४॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञयोगो नाम त्रयोदशोऽध्यायः॥ १३॥

अर्थः—एवं=यथोक्तप्रकारेण, क्षेत्रक्षेत्रज्ञयोः=प्राग्व्याख्यातयोः प्रकृतिपुरुषरूपयोः क्षेत्रक्षेत्रज्ञयोरन्तरम्=इतरेतरवैलक्षण्यं, विकारित्वनिर्विकारित्वादिलक्षणं प्रभेदं, च=तथा भूतप्रकृतिमोक्षं=भूतानां प्राणिनां सत्त्वादिगुणत्रयात्मिकायाः प्रकृतेः सकाशात् मोक्षं मोक्षोपायं, मोक्ष्यतेऽनेनेति तद्व्युत्पत्तेर्ये ज्ञानचक्षुषा=विवेकज्ञाननेत्रेण, विदुः=जानन्ति, ते, परं=परस्मात् परं ब्रह्म, यान्ति=प्राप्नुवन्तीत्यर्थः ॥३४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्ये त्रयोदशोऽध्यायः॥१३॥

---

# "अथ चतुर्दशोऽध्यायः"।

पूर्वाध्यायान्ते "भूतप्रकृतिमोक्षं च ये विदुः" इत्यभानीत्। तत्र गुणात्मिकायाः प्रकृतेः सकाशाद् भूतानां मोक्षस्योपायः कः? के गुणाः? कथं ते पुरुषं बध्नन्ति, तेभ्यो मुक्तस्य च किं लक्षणम्" इत्यादिसर्वं विस्तरेण व्याख्यातुं चतुर्दशमध्यायमारभमाणः प्राह—

"श्रीभगवानुवाच"।

**"परं भूयःप्रवक्ष्यामि, ज्ञानानां ज्ञानमुत्तमम्।**
**यज्ज्ञात्वा मुनयःसर्वे, परां सिद्धिमितो गताः"॥१॥**

अर्थः– परं=परवस्तुविषयत्वात् परं प्रकृष्टं,ज्ञानमिति सम्बन्धः, "गुणेभ्यश्च परं वेत्ति" (१९) इति ज्ञानस्य परवस्तुविषयत्वं स्वयमग्रे वक्ष्यति,परवस्तु ब्रह्म परमेश्वरः परमात्मा। पुनः कीदृशं ज्ञानं? ज्ञानानां=निर्धारणे षष्ठी, प्रकृतितत्कार्यविषयाणां सर्वेषां ज्ञानानाम्, उत्तमम्=उच्चतमफलकत्वादुच्चतमम्, उच्चतमं फलमुभयी मुक्तिः, ज्ञानं=वेदनं,

भूयः=पुनः ते=तुभ्यं, प्रवक्ष्यामि=प्रकर्षेण विशदरूपेण कथयिष्यामि। यद्=यद् ज्ञानं,ज्ञात्वा=उपलभ्य, सर्वे=निखिलाः, मुनयः=वेदार्थमननशीलाः कर्मयोगिनः, इतः=सार्वविभक्तिकस्तसिः,अस्मिन् मनुष्यलोके, परां=प्रकृष्टां दुःखरहितां, सिद्धिं=ब्रह्मप्राप्तिरूपामुभयीं मुक्तिं, गताः=प्राप्ताः प्रापुरित्यर्थः ॥ १ ॥

किञ्च—

"इदं ज्ञानमुपाश्रित्य, मम साधर्म्म्यमागताः।
सर्गेऽपि नोपजायन्ते, प्रलये न व्यथन्ति च" ॥२॥

अर्थः—इदम्=एतद्, ज्ञानं=वक्ष्यमाणं परवस्तुविषयं ज्ञानम्, उपाश्रित्य=सम्पाद्य,सम्प्राप्य,मम,=मे, साधर्म्यं=समानधर्मताम्, एकरूपतामभिन्नतामागताः प्राप्ताः,जीवन्त एव मद्रूपाः सम्पन्नाः इत्येतत्। सर्गेऽपि=सृष्ट्यारम्भेऽपि, नोपजायन्ते=नोत्पद्यन्ते, मध्ये नोपजायन्ते, इत्यपेरर्थः, च=तथा,प्रलये=प्रलयसमये, न व्यथन्ति=न प्रलयपीडामुपयन्ति, मद्रूपतामागता न पुनरुपजायन्ते, न पुनः प्रलीयन्ते, जन्ममरणसंसारमतिक्रम्य वर्तन्ते, इत्यर्थः ॥ २ ॥

अथ प्रतिज्ञातं ज्ञानं विशदरूपेण वक्तुमुपक्रमते—

"मम योनिर्महद् ब्रह्म, तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्वभूतानां, ततो भवति भारत!" ॥३॥

अर्थः—भारत=हे भरतवंशोद्भव! मम=ईश्वरस्य मम, योनिः=गर्भाधानस्थानं, महद्-ब्रह्म=महत्तत्त्वस्य प्रथमकार्यस्य कारणत्वात् महद्, ब्रह्मणः परमेश्वरस्यात्मनः प्रकृतित्वाद् ब्रह्म, त्रिगुणात्मिका प्रकृतिरित्येतत्, तस्मिन्=अमुष्मिन् महति ब्रह्मणि त्रिगुणात्मिकायां प्रकृतौ योनौ, गर्भं=ब्रह्मादिस्थावरान्तस्य कृत्स्नस्य चराचरस्य भूतजातस्य विश्वस्य जन्मनः कारणं कामेक्षणादिशब्दितं रतो, बीजं, दधामि = निदधामि, निक्षिपाम्यहमीश्वरः। यत्रैतदाम्नातं भवति "कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत्। सतो बन्धुमसति निरविन्दन्, हृदि प्रतीष्या कवयो मनीषा" ऋ० (१०।१२९।४) इति। मनसः=महत्तत्वस्य "महदाख्यमाद्यं कार्यं तन्मनः"(सां० १।७१)

इति स्मृतेः । ततः=तस्माद् गर्भाधानात्,सर्वभूतानां=सर्वेषां ब्रह्मादि-स्तम्बपर्यन्तानां स्थावरजंगमानां प्राणिनां, सम्भवः=उत्पत्तिर्जन्म भवति=जायते इत्यर्थः ॥ ३ ॥

किं बहुना—

"सर्वयोनिषु कौन्तेय ! मूर्तयः सम्भवन्ति याः ।
तासां ब्रह्म महद् योनिरहं बीजप्रदः पिता" ॥४॥

अर्थः—कौन्तेय=हे कुन्तीपुत्र ! सर्वयोनिषु=सर्वासु मनुष्य-पशुपक्षिसरीसृपाद्यासु योनिषु,या मूर्तयः=विलक्षणविविधसंस्थानाः प्राणिदेहाः, सम्भवन्ति=जायन्ते, उत्पद्यन्ते,तासाम्=अमूषां मूर्तीनां प्राणिदेहानां, योनिः=उत्पत्तिस्थानं, कारणं, जननीत्येतद्, महद् ब्रह्म= त्रिगुणात्मिका प्रकृतिः, अहम्=ईश्वरोऽहं बीजप्रदः=बीजस्य कामा-दिलक्षणस्य रेतसः प्रदाता, गर्भाधानस्य कर्ता, पिता=जनक इत्यर्थः ॥४॥

अथ प्रकृतिसम्भूतानां प्राणिनां प्रकृतिसम्भवैः सत्त्वरजस्तमोभिर्गुणै-र्बन्धनमाह चतुर्दशभिः—

"सत्त्वं रजस्तम इति, गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो !, देहे देहिनमव्ययम्" ॥५॥

अर्थः—महाबाहो=हे महाभुज ! सत्त्वं रजस्तम इति=सत्त्वरजस्तम-इत्येतत्संज्ञकाः, गुणाः=त्रयो गुणाः,प्रकृतिसम्भवाः गुणानां साम्यावस्था प्रकृतिः, तस्याः प्रकृतेः सकाशात् सम्भवः उद्भवोऽभिव्यक्तिर्येषां, ते प्रकृतितः परस्परगुणप्रधानभावेन सम्भूताः उद्भूताः मिथोऽङ्गाङ्गि-भावेनाभिव्यक्ताः सन्तोऽव्ययं=व्ययो विनाशस्तद्रहितं, जन्मादिनाशा-न्तसर्वविकारशून्यं, निर्विकारं, देहिनं=देहवन्तं देहस्वामिनं क्षेत्रज्ञं, देहे=प्रकृतिपरिणामे कार्यकरणसङ्घाते शरीरे क्षेत्रे,निबध्नन्ति=नितरां-युनन्ति, स्थूणायां वत्समिव रशनाभूताः गुणा इत्यर्थः ॥ ५ ॥

अथ सत्त्वरजस्तमसां त्रयाणां गुणानां स्वरूपं बन्धनप्रकारं च यथा-क्रममाह—

"तत्र सत्त्वं निर्मलत्वात्, प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति, ज्ञानसङ्गेन चानघ !" ॥६॥

अर्थः—अनघ=हे निष्पाप ! तत्र=तेषु सत्त्वादिषु त्रिषु गुणेषु, सत्त्वम्=आदिमो गुणः सत्त्वं, निर्मलत्वात्=मलाभ्यां रजस्तमोभ्यां निर्गततया नितान्तस्वच्छत्वात्,प्रकाशकं=प्रकाशकरं,भास्वरम्,आलोकवत् सर्वार्थावद्योतकम्, अनामयम् =आमयो व्याध्याद्युपद्रवो न विद्यते यस्य, तद् निरुपद्रवं, रजस्तमःकार्ययोर्दुःखमोहयोर्विक्षेपजाड्ययोरुपद्रवयोरभावात् शान्तं, सुखाभिव्यञ्जकम् । तदिदं सत्त्वं सुखसङ्गेन= शब्दादीष्टविषयजनिते सुखे यः सङ्गः सक्तिरिदं मे स्यादित्यभिनिवेशः, तेन, बध्नाति=सिनाति, पुरुषं विषयसुखलम्पटं करोति, च=तथा, ज्ञानसङ्गेन=ज्ञानमेव सर्वार्थसाधकं किं कर्मणा कष्टावहेनेत्येवंलक्षणो यो ज्ञाने सङ्गः सक्तिरभिनिवेशस्तेन बध्नाति=दुःखादिहेतुनाऽनभ्युदयेन संयोजयति, पुरुषार्थात् प्रच्याव्य लोकशास्त्रनिन्दितायां भिक्षावृत्तौ परितोषं प्रजनयतीत्यर्थः ॥ ६ ॥

"रजो रागात्मकं विद्धि, तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय! कर्मसङ्गेन देहिनम्" ॥७॥

अर्थ—कौन्तेय=हे कुन्तीपुत्र ! रजः=द्वितीयो गुणो रजः, रागात्मकं=विषयेच्छा रागः, रज्यते संसृज्यते पुरुषो दृश्यैर्विषयैरनेनेति तद्व्युत्पत्तेः, कामो गर्द्धोऽभिलाषः स्पृहेति तत्पर्यायान्तरम्, स एष राग आत्मा स्वरूपं यस्य, तद् विषयाभिलाषस्वरूपं, तृष्णासङ्गसमुद्भवं=प्राप्तस्य सजातीयेऽप्राप्ते विषयेऽभिलाषस्तृष्णा, प्राप्ते विषये प्रीत्यतिशयः सङ्गः सक्तिः, उत्पत्तिः समुद्भवः,तृष्णा च सङ्गश्च,तयोस्तृष्णासङ्गयोः समुद्भवो यस्माद् रजसः, तत् तृष्णासङ्गसमुद्भवकारणं, तृष्णासङ्गयोरुत्पादकं,विद्धि=जानीहि । तत्=अदो रजः,कर्मसङ्गेन= काम्येषु दृष्टादृष्टफलकेषु लौकिकवैदिककर्मसु यः सङ्गः, कर्मभ्यः एव लौकिकवैदिकेभ्योऽहं सर्वानभिलषितान् विषयान् प्राप्स्यामीत्येवंलक्षणोऽभिनिवेशः सक्तिराग्रहस्तेन देहिनं=देहवन्तं, देहस्वामिनं निबध्नाति=विसिनोति,परमपुरुषार्थसाधनात् ज्ञानात् च्यावयित्वाऽहर्दिवं पुरुषं काम्येषु कर्मसु नियोजयति, कर्मठं करोतीत्यर्थः ॥ ७ ॥

"तमस्त्वज्ञानजं विद्धि, मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ! ॥ ८ ॥

अर्थः—भारत=हे भरतवंशोद्भव ! तमस्तु=सत्त्वरजसी तुना व्यावर्त्यैते, तृतीयो गुणस्तमः,अज्ञानजम्=अज्ञानजनिकारणम्, अज्ञानं जायते यस्मादिति तद्व्युत्पत्तेः,ज्ञानं याथात्म्यावबोधः,ततोऽन्यदज्ञानम् अयथार्थज्ञानं, तदुत्पत्तिनिदानम्,आवरणात्मकमित्येतत्, सर्वदेहिनां= सर्वेषां देहवतां देहस्वामिनां पुरुषाणां, मोहनं=मोहकारणं, मोमुह्यते विचेचित्यते विपरीतं प्रतिपद्यते पुरुषोऽनेनेति तद्व्युत्पत्तेः, मोहो विपरीतज्ञानं, तज्जनकं, विद्धि=जानीहि । तत्=तदेतत् तमः, प्रमादालस्यनिद्राभिः=प्रमादोऽनवधानं, प्राप्तकर्तव्याकरणम्, आलस्यमनुद्यमः, निद्रा स्वापः, प्रमादश्चालस्यं च निद्रा च, ताभिः पुरुषं निबध्नाति= विसिनाति, प्रमादेनालस्येन निद्रया च संयोजयति, प्रमाद्यति, आलसति, निद्राति च दिवानिशं तमोनिबद्ध पुरुषः, इत्यर्थः ॥ ८ ॥

अथोक्तगुणानां कार्यं पुनः संक्षेपेणाह—

**"सत्वं सुखे संजयति, रजः कर्माणि भारत ! ।**
**ज्ञानमावृत्य तु तमः, प्रमादे संजयत्युत" ॥ ९ ॥**

अर्थः—भारत =हे भरतसन्तान ! सत्त्वं=सत्त्वगुणः, सुखे= वैषयिके सुखे, संजयति=संयोजयति, संश्लेषयति, रजः=रजोगुणः, कर्मणि=काम्ये कर्मणि,सञ्जयति=संयोजयति, प्रवर्तयति,तमस्तु=तमोगुणश्च,ज्ञानं=विवेकज्ञानम्,आवृत्य=आच्छाद्य,प्रमादे=अवश्यकर्तव्यस्याकरणे,उत=आलस्यनिद्रयोरपि,सञ्जयति=देहिनं लगयति,योजयतीत्यर्थः।९

ननु कदा ते गुणाः स्वं स्वं कार्यं कुर्वन्ति ? तत्राह—

**"रजस्तमश्चाभिभूय, सत्त्वं भवति भारत ! ।**
**रजः सत्त्वं तमश्चैव, तमः सत्त्वं रजस्तथा" ॥१०॥**

अर्थः—भारत=हे भरतवंशोद्भव ! सत्त्वं=सत्त्वगुणो, रजः= रजोगुणं, च=तथा, तमः=तमोगुणम्, अभिभूय=तिरस्कृत्य, भवति= उद्भवति, उत्कर्षं गच्छति, वृद्धिमनुभवति, रजः=रजोगुणः, सत्त्वं= सत्त्वगुणं, च=तथा तमः=तमोगुणम्, एव निश्चयेनाभिभूयोद्भवति, तमः=तमोगुणः, सत्त्वं=सत्त्वगुणं, च=तथा रजः=रजोगुणम् अभिभूयोद्भवति, विवर्द्धते, यदा, तदा ते गुणाः सत्त्वादयः प्रागुक्तं स्वं स्वं कार्यं निर्वर्तयन्तीत्यर्थः ॥१०॥

अथेतरेतरमभिभूयोद्भूतानां गुणानां लिङ्गान्याह त्रिभिः—

"सर्वद्वारेषु देहेऽस्मिन्, प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्, विवृद्धं सत्त्वमित्युत" ॥११॥

अर्थः—यदा=यस्मिन् काले, अस्मिन्=एतस्मिन् देहे=चेष्टाश्रये भोगायतने शरीरे, सर्वद्वारेषु=सर्वेषु समस्तेषु द्वारेषु विषयोपलब्धिद्वारभूतेषु श्रोत्रादिकरणेषु प्रकाशः=शब्दादिविषयाणां याथातथ्येन ग्रहणलक्षण आलोकः, ज्ञानं=ज्ञानापरनामा प्रत्ययः,उत=अपि, सुखं, लाघवं च, उपजायते=उत्पद्यते, तदा=तस्मिन् काले, सत्त्वम्=आदिमो गुणः सत्त्वं,विवृद्धं=विशेषेण वृद्धिं गतं प्राप्तमुद्भूतमिति=एवं विद्यात्=जानीयात्,शब्दादिज्ञानाख्येन प्रकाशेन लिङ्गेन प्रतीयादित्यर्थः।

"लोभः प्रवृत्तिरारम्भः, कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते, विवृद्धे भरतर्षभ !" ॥१२॥

अर्थः—भरतर्षभ=हे भरतश्रेष्ठ ! लोभः=धनातिगर्द्धः, महति धनागमे सत्यपि प्रतिपलं वर्धमानस्तदभिलाषः,सर्वदा परद्रव्योपादित्सा, प्रवृत्तिः=निरन्तरं प्रयतमानता, कर्मणां=काम्यकर्मणाम्, आरम्भः=उपक्रमः, अशमः=अशान्तिः, इदं कृत्वा पुनरेतत् करिष्यामीति सङ्कल्पप्रवाहानुपरमः,स्पृहा=कांक्षा,उच्चावचेषु दृष्टमात्रेषु पदार्थेषु येन केनाप्युपायेनादित्सा, एतानि=इमानि लिङ्गानि, विवृद्धे=प्रवृद्धे, रजसि=रजोगुणे, जायन्ते=उत्पद्यन्ते, यदा लोभादयो वर्तन्ते, तदा रजः प्रवृद्धमिति विद्यादित्यर्थः ॥१२॥

"अप्रकाशोऽप्रवृत्तिश्च, प्रमादो मोह एव च ।
तमस्येतानि जायन्ते, विवृद्धे कुरुनन्दन !" ॥१३॥

अर्थः—कुरुनन्दन=हे कुरुवंशानन्दवर्धन ! अप्रकाशः=न प्रकाशः, प्रकाशो ज्ञानं,शब्दादिविषयगोचरज्ञानानुदयः,च=तथा, अप्रवृत्तिः=आलस्यमनुद्यमः, प्रमादः=अवश्यकर्तव्याकरणम्, च=तथा, मोहः=भ्रमो, विपर्ययज्ञानम्, एव=निश्चयेन, एतानि=इमानि सर्वाणि लिङ्गानि

विवृद्धे=प्रवृद्धे, तमसि=तमोगुणे, जायन्ते=वोभूयन्ते, यदाऽप्रकाशादयो वर्तेरन्, तदा विवृद्धं तम इति विद्यादित्यर्थः ॥१३॥

अथ प्रसंगाद् गुणविवृद्धौ मरणे फलमाह द्वाभ्याम्—

"यदा सत्त्वे प्रवृद्धे तु, प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान् प्रतिपद्यते" ॥१४॥

अर्थः—यदा=यर्हि, सत्त्वे=सत्त्वगुणे, प्रवृद्धे तु=रजस्तमःप्रवृद्धिं तुना व्यावर्तयति, प्रकर्षेण वृद्धिं गते, विवृद्धे सति, देहभृत्=देहस्य भर्ता धर्ता देहस्वामी पुरुषः, प्रलयं=चित्तस्यावसादाल्लयो निद्रा, ततः प्रकृष्टो लयः प्रलयो मृत्युः, तं याति=प्राप्नोति, तदा=तर्हि, स उत्तमविदाम्=उत्तमः ईश्वरः परमात्मा ब्रह्म "अगन्म ज्योतिरुत्तमम्" (ऋ० १५०।१०) इति मन्त्रवर्णात्, तद्विदां ब्रह्मज्ञानिनां कर्मयोगिनाम्, अमलान्=रजस्तमोमलरहितान्, लोकान्=देहान्, लोक्यते भुज्यते कर्मफलं येषु, इति तद्व्युत्पत्तेः, प्रतिपद्यते=उपसम्पद्यते, सत्त्वगुणविवृद्धौ म्रियमाणो जीवो ब्रह्मज्ञानिनां कर्मयोगिनां कुलेषु जायते, इत्यर्थः ॥१४॥

"रजसि प्रलयं गत्वा, कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि, मूढयोनिषु जायते" ॥१५॥

अर्थः—रजसि=प्रवृद्धे रजोगुणे, प्रलयं=मरणं, गत्वा=प्राप्य, मृत्वा, कर्मसङ्गिषु=काम्यकर्मसक्तेषु कर्मठेषु, जायते=जन्यते, तथा तमसि=तमोगुणे विवृद्धे, प्रलीनः=मृतः, मूढयोनिषु=मूढानां विवेकज्ञानशून्यानां पशुपक्षिसरीसृपादीनां योनयो देहाः, तेषु जायते=उत्पद्यत इत्यर्थः ॥ १५ ॥

अथ गुणविवृद्धौ मरणस्य फलमभिधाय, तत्र निर्वर्तितस्य सात्त्विकादिकर्मणः फलमभिधत्ते—

"कर्मणः सुकृतस्याहुः, सात्त्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखम्, अज्ञानं तमसः फलम्" ॥१६॥

अर्थः—सुकृतस्य=सुष्ठुकृतस्य, फलस्पृहामन्तरेणानुष्ठितस्य, कर्मणः=निष्कामकर्मणः, सात्त्विकं=सत्त्वेन निर्वृत्तं, निर्मलं=रज-

स्तमोमलात् तत्कार्यभेदाद् दुःखादेर्निष्कान्तं दुःखादिसंस्पर्शशून्यं प्रकाशबहुलं सुखं,फलमाहुः=प्राहुः, कथयन्ति। रजसस्तु=राजसस्य कर्मणस्तु, सात्त्विकादेर्व्यवच्छेदस्तोरर्थः, फलं दुःखं=दुःखबहुलत्वाद् दुःखं, दुःखमिश्रं वैषयिकं सुखं, तमसः=तामसस्य कर्मणोऽज्ञानं=ज्ञानविपर्ययं मूढभावं फलमाहुः=ब्रुवन्ति वेदविदो मुनयः, इत्यर्थः ॥१६॥

अथ सत्त्वादिगुणकार्यं प्रागुक्तमपि स्मृतिपथमानेतुं पुनः संक्षिप्याह—

"सत्त्वात् सञ्जायते ज्ञानं, रजसो लोभ एव च।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च" ॥१७॥

अर्थः—सत्त्वात्=सत्त्वगुणात्, ज्ञानं=सर्वकरणद्वारकं तत्तद्वस्तुविषयं प्रकाशाख्यं ज्ञानं, संजायते=समुत्पद्यते, च=तथा एव=निश्चयेन,रजसः=रजोगुणात् लोभः=धनातिगर्द्धः, धनतृष्णा,संजायते। प्रमादमोहौ=प्राप्तकर्तव्याकरणं प्रमादः, भ्रान्तिज्ञानं मोहः, प्रमादश्च-मोहश्च तौ, तमसः=तमोगुणाद् भवतः=जायेते, च=तथा, एव=निश्चयेनाज्ञानं=ज्ञानानुदयस्तमसो भवति=जायते इत्यर्थः ॥१७॥

अथ सत्त्वादिगुणकार्यं यदर्थं पुनः स्मृतिपथमानेष्ट, तदाह—

"ऊर्ध्वं गच्छन्ति सत्त्वस्थाः, मध्ये तिष्ठन्ति राजसाः।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः" ॥१८॥

अर्थः—सत्त्वथाः="जघन्यगुणवृत्तस्थाः" इति जघन्ये गुणे तमसि वृत्तशब्दप्रयोगात् सत्त्वरजसोरपि वृत्तशब्दप्रयोगो विवक्षितो गम्यते, सत्त्वगुणवृत्तस्थाः, सत्त्वगुणस्य वृत्तं ज्ञानं, तस्मिन् स्थिताः, सर्वदा ज्ञानपूर्वककर्मकारिणः सात्त्विकाः जनाः, ऊर्ध्वम्=ऊर्ध्वगतिम उत्तरोत्तरोन्नतिम,उत्कृष्टतरामवस्थां,गच्छन्ति=प्रतिपलं यान्ति,व्रजन्ति, राजसाः=रजोगुणवृत्तस्थाः, रजोगुणस्य वृत्तं लोभः, तत्र स्थिताः,नित्यं तत्पूर्वककाम्यकर्मकारिणो राजसाः जनाः, मध्ये=मध्यमे दशाभेदे, तिष्ठन्ति=वर्तन्ते, न कदाचिदुत्कृष्टामवस्थामनुभवन्तीत्येतत्। जघन्य-गुणवृत्तस्थाः=शिरसि सत्त्वं, ततोऽधस्ताद् रजः, ततोऽप्यधस्ताद् जघने भवो जघन्यो गुणस्तमः,तस्य वृत्तं निद्रालस्यादि,तत्रावस्थितास्तामसाः=

तमोगुणबहुलाः जनाः, अधः=अधोगतिम्, अधरामवस्थां, निकृष्टां दशां, गच्छन्ति=प्रतिक्षणं प्राप्नुवन्तीत्यर्थः ॥१८॥

अथ गुणानां बन्धनप्रकारमुक्त्वा पुरुषस्य तेभ्यो मोक्षप्रकारमाह—

"नान्यं गुणेभ्यः कर्तारं, यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति, मद्भावं सोऽधिगच्छति" ॥१९॥

अर्थः—यदा=यस्मिन् काले, द्रष्टा=दर्शनं विविक्तात्मज्ञानं, तस्याश्रयो विविक्तात्मदर्शी देही पुरुषो गुणेभ्यः=कार्यकरणविषयाकारपरिणतेभ्यो गुणेभ्योऽन्यं=भिन्नं, कर्तारं=सर्वेषां लौकिवैदिकानां कायिकवाचिकमानसानां कर्मणामनुष्ठातारं, नानुपश्यति=नानुभवति, न विजानाति, अपि तु गुणा एवान्तःकरणबहिष्करणकायविषयभावापन्नाः सर्वकर्मणां कर्तारो विधातार इति पश्यति, च=तथा, गुणेभ्यः=कार्यकरणादिरूपेण परिणतेभ्यः सत्त्वादिगुणेभ्यः, परं=व्यतिरिक्तं तद्व्यापारसाक्षिभूतं पुरुषं क्षेत्रज्ञं मामात्मानं, वेत्ति=जानाति, तदा, तस्मिन् काले, सः=असौ द्रष्टा पुरुषो देही, मद्भावं=ममेश्वरस्य भावं स्वरूपम्, अधिगच्छति=प्राप्नोति, "ब्रह्म वेद ब्रह्मैव भवति" (मु० उ० ३ । २ । ९) इति श्रुतेर्ब्रह्मैव सम्पद्यते, इत्यर्थः ॥१९॥

अथ "मद्भावं सोऽधिगच्छति" इत्युक्तं विशदयति—

गुणानेतानतीत्य त्रीन्, देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते" ॥२०॥

अर्थः—देही=देहस्वामी पुरुषः, देहसमुद्भवान्=देहोत्पत्तिबीजभूतान्=देहस्य समुद्भवो जन्मोत्पत्तिर्येभ्य इति तद्व्युत्पत्तेः, एतान्=यथोक्तान् त्रीन् गुणान्=सत्त्वरजस्तमोनामकान् त्रीन् गुणान्, अतीत्य=जीवन्नेवातिक्रम्य, जन्ममृत्युजरादुःखैः=जन्म च, मृत्युश्च, जरा च, दुःखानि चाध्यात्मिकादीनि त्रीणि, तैर्विमुक्तः=जीवन्नेव विशेषेण निःशेषेणासंस्पृष्टस्तत्सम्बन्धवर्जितोऽमृतं=पुनर्मरणरहितत्वादमृतो मोक्षस्तत्स्वरूपं ब्रह्म परमात्मानं मामश्नुते=व्याप्नोति प्राप्नोतीत्यर्थः ॥२०॥

अथ गुणातीतमुपश्रुत्य तल्लक्षणं तदाचारं गुणात्ययप्रकारं च प्रतिपित्सुरर्जुनो भगवन्तं पृच्छति—

"अर्जुन उवाच"।

**कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो!।**
**किमाचारः कथं चैताँस्त्रीन् गुणानतिवर्तते ॥२१॥**

अर्थः—प्रभो=हे समर्थ! एतान्=इमान् प्राग्व्याख्यातान्, त्रीन् गुणान्=सत्त्वादिनामकान् त्रीन् गुणान्, अतीतः=अतिक्रान्तः, अतिक्रम्य वर्तमानो देही, पुरुषः, कैर्लिङ्गैः=किंभूतैश्चिह्नैर्भवति=ज्ञायते, विषयेण विषयिलक्षणात्। किमाचारः=कीदृगाचारवान्, कः आचारोऽस्येति तद्व्युत्पत्तेः, च=तथा, कथं=केन प्रकारेण त्रीन् गुणान्=एतान् त्रीन् गुणान्, अतिवर्तते=अतिशेते, अतिक्रम्य लौकिवैदिककर्मसु प्रवर्तते, इत्यर्थः ॥ २१ ॥

अथार्जुनेन पृष्टो भगवानुत्तरमाह—

"श्री भगवानुवाच"।

**"प्रकाशं च प्रवृत्तिं च, मोहमेव च पाण्डव!।**
**न द्वेष्टि सम्प्रवृत्तानि, न निवृत्तानि कांक्षति" ॥२२॥**

अर्थः—पाण्डव=हे पाण्डुपुत्र! यः पुरुषः, प्रकाशं=सत्त्वकार्यं प्रकाशं ज्ञानं, च=तथा, प्रवृत्तिं=रजःकार्यं प्रवृत्तिमुद्योगं, च=तथा, मोहं=तमःकार्यं भ्रमं, तानेतान् त्रीन् गुणान् सत्त्वादिगुणत्रयकार्यभूतान्, तान्येतानि गुणत्रयकार्याणि, च=तथाऽन्याणि तत्कार्याणि, एव=निश्चयेन, सम्प्रवृत्तानि=सम्यग्विषयभावेनोद्भूतानि, स्वसामग्रीवशाद् यथायथं प्राप्तानि, न द्वेष्टि=न द्वेषयति, न वैरयति, निवृत्तानि=प्रवृत्त्य निवृत्तिं गतानि, नष्टानि तानि, न कांक्षति=न वाञ्छति, न तानि प्रेप्सति, स गुणकार्येषु तेषु रागद्वेषशून्यो गुणातीत उच्यते, इति चतुर्थेनान्वयः॥२२॥

अथाद्यं लक्षणप्रश्नं प्रत्युच्य "किमाचारः" इति द्वितीयं प्रश्नं लक्षणमुखेनैव प्रतिवचनयति त्रिभिः—

**"उदासीनवदासीनो गुणैर्यो न विचाल्यते।**
**गुणाः वर्तन्ते इत्येव, योऽवतिष्ठति नेङ्गते" ॥२३॥**

अर्थः—यः=यः पुरुषः, उदासीनवद्=द्वाभ्यां विवदमानाभ्यामुदास्ते, न द्वयोस्तयोः कस्यचित् पक्षं श्रयते, न कञ्चिद्रज्यति, न कञ्चिद् द्वेष्टि, स उदासीनस्तटस्थः, तद्वदासीनः=रागद्वेषशून्यतया स्वस्मिन् स्थितः, गुणैः=सुखदुःखाद्याकारपरिणतैर्गुणैर्न विचाल्यते=न प्रच्याव्यते, रागद्वेषादिकमुत्पाद्य न स्वस्मान्निपात्यते, किन्तु गुणा एव=कार्यकरणविषयाकारपरिणता गुणा एव, नात्मा पुरुषः क्षेत्रज्ञः, इत्यवधारणार्थः, अन्योऽन्यस्मिन् वर्तन्ते=परस्परास्मिन प्रवर्तन्ते, इति=एवं ज्ञात्वा योऽवतिष्ठति=योऽवतिष्ठते, निश्चलमास्ते, नेङ्गते=न कम्पते, न हर्षविषादाभ्यामाकुलायते, स गुणातीत उच्यते इत्यर्थः ॥ २३ ॥

किञ्च—

"समदुःखसुखः स्वस्थः, समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः" ॥२४॥

अर्थः—समदुःखसुखः=समे तुल्ये दुःखसुखे यस्य, स दुःखसुखतुल्यचित्तः, न सुखे रागो न दुःखे द्वेषः, प्राप्तयोः सुखदुःखयोः रागद्वेषशून्यमनाः, स्वस्थः=स्वस्मिन्नात्मनि स्थितः, सर्वदा सर्वत्रात्मैक दर्शनः, समलोष्टाश्मकाञ्चनः=लोष्टः पांसुपिण्डः, अश्मा पाषाणः, काञ्चनं सुवर्णं, तानि समानि तुल्यानि हेयोपादेयभावरहितानि यस्य, स वस्तुमात्रस्पृहारहितो निःस्पृहः, तुल्यप्रियाप्रियः=सुखसाधनवस्तुसंयोगः प्रियः, तद्वियोगोऽप्रियः, एवं दुःखसाधनवस्तुवियोगः प्रियः, तत्संयोगोऽप्रियः, तौ तुल्यौ समौ यस्य, स प्रियाप्रियवस्तुसंयोगवियोगयोः समचित्तः, संयोगे न सुख्यति, वियोगे न दुःख्यतीत्येतद्, धीरः=धैर्योपेतः सुदृढचित्तः, सम्पदापदाभ्यामविकम्प्यः, आगमापायित्वनिश्चयात्, तुल्यनिन्दात्मसंस्तुतिः=आत्मगुणोक्तिः संस्तुतिः, दोषोक्तिर्निन्दा, ते तुल्ये समे यस्य, स स्वकर्तव्यगोचरात्मनिन्दास्तुत्योस्तुल्यान्तःकरणः, स्तुतिनिन्दालक्षणस्य लोकस्वभावस्यापर्य्यनुयोज्यत्वेनाकिञ्चित्करत्वान्निरन्तरात्मकर्तव्यपालनपर इत्यर्थः ॥२४॥

"मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी, गुणातीतः स उच्यते" ॥२५॥

अर्थः—मानापमानयोः=सत्कारो मानः, तिरस्कारोऽपमानः, अवमानः, तयोः सत्कारतिरस्कारयोरादरानादरयोस्तुल्यः=समानः, गुरुकार्येषु कदाचिन्मानस्य कदाचिदवमानस्यावश्यम्भावित्वेन प्राप्तयोस्तयोः साधारणः, सर्वदा निर्विकारान्तःकरणः, हर्षविषादौ चित्तविकारौ, तद्रहितः, मित्रारिपक्षयोः=मित्रपक्षः सखिपक्षः, अरिपक्षः शत्रुपक्षः, तयोः सखिशत्रुपक्षयोस्तुल्यः=सदृशो निर्विशेषः, आत्मत्वेन तुल्यत्वात्, कार्यकृतो हि मित्रारिभावो नात्मकृतः। सर्वारम्भपरित्यागी=आरभ्यन्ते दृष्टादृष्टफलोद्देशेनेत्यारम्भाः काम्यकर्माणि, तेषां सर्वेषां दृष्टादृष्टफलानां काम्यकर्मणां परितः सर्वतस्त्यागशीलो यः पुरुषः, सः=असौ गुणातीतः=गुणानतिक्रान्तः उच्यते=कथ्यते, वेदविद्भिरित्यर्थः ॥ २४ ॥

अथ "कथमेतान् त्रीन् गुणानतिवर्तते" इति तृतीयप्रश्नस्योत्तरमाह—

"मां च योऽव्यभिचारेण, भक्तियोगेन सेवते ।

स गुणान् समतीत्यैतान्, ब्रह्मभूयाय कल्पते" ॥२६॥

अर्थः—चस्त्वर्थो भिन्नक्रमः, यश्च=यस्तु पुरुषो, न सर्व इति तोरर्थः, अव्यभिचारेण=नास्ति व्यभिचारो यस्य कदाचित्, तेन, एकान्तेन, भक्तियोगेन=परमप्रेमलक्षणेन भक्त्याख्येन योगेन, मां=विश्वरूपेश्वरं मां, सेवते=भजते, मदाज्ञामनुवर्तते, सः=असौ पुरुषः, एतान्=इमान् यथोक्तलक्षणान् गुणान्=सत्त्वरजस्तमःसंज्ञकान् त्रीन् गुणान्, समतीत्य=सम्यगनायासेनातिक्रम्य ब्रह्मभूयाय=भुवो भावे क्यप्, ब्रह्मभावाय ब्रह्मत्वाय, जीवन्नेव ब्रह्मरूपेणावस्थानाय, कल्पते=समर्थः सम्पद्यते, समर्थायते, ब्रह्मत्वमश्नुते, इत्यर्थः ॥२६॥

ननु कुतस्तव भक्तो गुणानेतान् समतीत्य ब्रह्मभूयाय कल्पते? तत्राह—

"ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।

शाश्वतस्य च धर्मस्य, सुखस्यैकान्तिकस्य च" ॥२७॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥१४॥

अर्थः—हि=यस्मात्, अहं=विश्वरूपेश्वरोऽहम्, अव्ययस्य=व्ययो विनाशस्तद्रहितस्याविनाशिनः, च=तथाऽमृतस्य=मोक्षस्वरूपस्य नित्यमुक्तस्य, ब्रह्मणः=परमात्मनः, प्रतिष्ठा=स्थितिराश्रयः काष्ठा, परागतिः, प्रतितिष्ठत्यस्मिन्निति तद्व्युत्पत्तेः । अहमेवाक्षरं परं ब्रह्म विश्वरूपमापन्नं प्रतितिष्ठामि, नास्ति मद्व्यतिरिक्तं ब्रह्म, अतो विश्वरूपेश्वरे मय्येव ब्रह्मशब्दो वाचकत्वेन प्रतितिष्ठति, मय्येव पर्यवस्यति, मामेवाश्रयते, न मत्तः परमर्थान्तरं किञ्चिद् गच्छति, यत्र पर्यवसानं, यतः परं न गमनं, सा स्थितिः, स आश्रयः, सा काष्ठा, स परागतिः, सैव प्रतिष्ठा । च=तथा, शाश्वतस्य=शश्वद्भवस्य सनातनस्य, धर्मस्य=वेदोदितस्य कर्मयोगाख्यस्य सुकृतस्य, प्रतिष्ठा=आश्रयः, काष्ठा, परागतिः, मामेव विश्वरूपेश्वरं कर्मयोगाख्यो धर्मः शश्वदाश्रयते, मय्येव प्रतितिष्ठति, मय्येव पर्यवस्यति, नास्ति मत्तः परतरः कश्चिदपरः कर्मयोगी, तेनाहं तस्य शाश्वतस्य धर्मस्य प्रतिष्ठा, च=तथा, ऐकान्तिकस्य=एकान्तेनाव्यभिचारेण भवस्य जायमानस्य, सुखस्य=कर्मयोगफलभूतस्याभ्युदयनिःश्रेयसलक्षणस्याखण्डानन्दस्य प्रतिष्ठा=आश्रयः काष्ठा, पर्यवसानभूमिः, आभ्युदयिकं नैश्रेयसिकं च सुखं कर्मयोगस्य फलम्, तच्च मामेव विश्वरूपेश्वरमाश्रयते, मय्येव प्रतितिष्ठति, मय्येव पर्यवस्यति, तेनाहं तस्य प्रतिष्ठा । यो हि विश्वरूपेश्वरं मामव्यभिचारेण भक्तियोगेन सेवते, कर्मयोगगोचरां मदाज्ञामनुवर्तते, सोऽवश्यं मत्तः सकाशादाभ्युदयिकं नैश्रेयसिकं चोभयविधं सुखं विन्दते । तदुभयविधसुखलाभ एव चेहामुत्र ब्रह्मभावलाभो नापरः कश्चनेत्यर्थः ॥२७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्ये चतुर्दशोऽध्यायः ॥१४॥

— - —

# "अथ पञ्चदशोऽध्यायः" ।

पूर्वस्मिन् चतुर्दशाध्याये संसारबन्धहेतुभूतान् प्रकृतिसम्भवान् सत्त्वरजस्तमःसंज्ञकान् गुणान् सविस्तरं व्याख्याय तदतीततोपायम्, अतीतस्य ब्रह्मभावप्राप्तिलक्षणमोक्षस्योपायं च विश्वरूपेश्वरस्य ब्रह्मणः परमात्मनोऽव्यभिचारेण भक्तियोगेन सेवां न्यरूरुपत् । न च तात्त्विकं रूपमजानद्भिः पुंभिरेष भगवान् अव्यभिचारेण भक्तियोगेन सेवितुं शक्यते, अतो भगवतोऽस्य तात्त्विकं रूपं वक्तव्यम्, तदर्थं पञ्चदशमध्यायमारभमाणः संसारमूलकारणत्वेन तस्य तात्त्विकं रूपं वर्णयिष्यन्नादौ वृक्षरूपककल्पनया संगपरित्यागेन निवासस्य हेतोः संसारस्वरूपं तावदुपवर्णयति द्वाभ्याम्—

"श्रीभगवानुवाच" ।

**ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।**
**छन्दांसि यस्य पर्णानि, यस्तं वेद स वेदवित्" ॥१॥**

अर्थः—ऊर्ध्वमूलम्=ऊर्ध्वम् उन्नतं, कृत्स्नात् प्रकृतितत्कार्यादुपरि वर्तमानं,यदुपरि नास्ति किञ्चिदन्यत् "तस्माद् हान्यत् न परः किञ्चनास" (ऋ० १० । १२९ । २) इति मन्त्रवर्णात्, तत् पुरुषाख्यं परमक्षरं ब्रह्म "पुरुषान्न परं किञ्चित्, सा काष्ठा, सा परा गतिः" (कठो० ३ । ११) इति श्रुतेः, मूलं कारणं बीजं यस्य संसारवृक्षस्य, तं सर्वोत्कृष्टब्रह्ममूलकम्, अधःशाखम्=ऊर्ध्वान्मूलभूतबीजात् कारणाद् ब्रह्मणोऽधोऽधस्ताद् वर्तमानाः अर्वाचीना अव्यक्तमहदहङ्कारपञ्चतन्मात्राद्या नानादिक्प्रसृतत्वाच्छाखा इव शाखा यस्य, तमधःशाखम्,मूलमारभ्य शाखावधिः स्कन्धोऽव्यक्तं त्रिगुणा प्रकृतिः,ततो निसृताः प्रधानशाखाः महदारभ्य पृथिव्यन्तास्त्रयोविंशतितत्त्वात्मिकाः, ताश्च मूलादधइत्यधःशाखम्,अव्ययं=न विद्यते व्ययो विनाशोऽन्तो यस्य,तमविच्छन्नप्रवाहत्वादनन्तम्,तथा छन्दांसि=गायत्र्यादिछन्दोभिर्युक्तत्वादृग्वेदस्य मन्त्राश्छन्दांसि, तैर्विहितत्वाच्छन्दांसि यज्ञदानतपःकर्माणि, यस्य= यस्य संसारवृक्षस्य, पर्णानि=पर्णानीव पर्णानि पत्राणि, पर्णवच्छोभायोः कारणानि, वृक्षो हि पर्णैः शोभते,संसारो यज्ञदानतपःकर्मभिरित्युभयोः

संसारवृक्षयोः सादृश्यम्, तं छन्दःपर्णकम्, अश्वत्थं=श्वोऽपि स्थातेति विश्वासानर्हत्वादश्वत्थं संसारवृक्षं,प्राहुः=कथयन्ति वेदविदो विद्वांसः, तम्=अमुमश्वत्थं संसारवृक्षं कृत्स्नं मूलमारभ्य शाखोपशाखान्तं, यः=यः पुरुषो वेद=वेत्ति जानाति,सः=असौ पुरुषो वेदवित्=वेदार्थवित्। वेदो हि सर्वो ब्रह्मणि परेऽक्षरेऽधिनिषीदति, यत्रैतत् समाम्नातं भवति

"ऋचोऽक्षरे परमे व्योमन्, यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति, य इत्तद् विदुस्त इमे समासते"

(ऋ० १०।१६४।३९) इति । परममक्षरं ब्रह्म च न कृत्स्नात् संसारवृक्षादश्वत्थाद् व्यतिरिच्यते। नहि मूलं परममक्षरं ब्रह्मारभ्य जडचेतनात्मकसर्वशाखोपशाखान्तं कृत्स्नं संसारवृक्षं परित्यज्यान्यत् किञ्चिद् ब्रह्म कथञ्चिदुपवर्णयितुं शक्यते। श्रुतयश्च "ब्रह्मैवेदं विश्वम्" (मुं० २।२।११) "सर्वं ह्येतद् ब्रह्म" (माण्डू० २) "सर्वं खल्विदं ब्रह्म" (छां० ३।१४।१) "आत्मैवेदं सर्वम्" (छां० ७।२५।२) "इदं सर्वं यदयमात्मा" (बृह० ४।५।७) इत्याद्याः परमं ब्रह्मैव सर्वमेतदिति व्यक्तं श्रावयन्ति। एष एव चाखिलस्य वेदस्यार्थः। यःपुरुषः कृत्स्नं संसारवृक्षं वेत्ति, स परमं ब्रह्म वेत्ति, कृत्स्नस्य संसारवृक्षस्य तदात्मकत्वात्। अतोऽसौ वेदार्थविदित्यर्थः ॥१॥

अथ संसारवृक्षस्यान्यं शाखाविस्तारमाह—

**"अधश्चोर्ध्वं च प्रसृतास्तस्य शाखाः, गुणप्रवृद्धाः विषयप्रवालाः। अधश्च मूलान्यनुसन्ततानि, कर्मानुबन्धीनि मनुष्यलोके" ॥२॥**

अर्थः—तस्य=अमुष्य यथोक्तस्य संसारवृक्षस्य, गुणप्रवृद्धाः= सत्त्वादिगुणवृत्तैः प्रकाशादिभिः प्रकर्षेण वृद्धिं गताः,भृशं पुष्टाः,विषयप्रवालाः=विषयाः शब्दादयः उपभोग्यपदार्थाः प्रवालाः, आपातरमणीयत्वात् प्रवाला इव पल्लवा इव, यासां शाखानां, ताः नानाविधोपभोग्यपदार्थकिसलयाः, शाखाः=शाखाभ्यो निसृतत्वाच्छाखाः ब्रह्मादिस्थावरान्ताः जीवरूपाः उपशाखाः, अधश्चोर्ध्वं च प्रसृताः=

अधोऽपि प्रसृताः,ऊर्ध्वमपि प्रसृताः,प्रसृतिव्याप्तेरुभयत्र समत्वप्रदर्शनार्थं चकारद्वयं,प्रसृतिःप्रसारो विस्तारो व्याप्तिः,अधः पश्वादिस्थावरान्तम् ऊर्ध्वं मनुष्यादिब्रह्मान्तम्,महत्तत्त्वदेहो हिरण्यगर्भःप्रथमो जीवो ब्रह्मा, तत्पर्यन्तं प्रसारं विस्तारं प्राप्ताः व्याप्ताः, च=तथा, तस्य संसारवृक्षस्य मूलानि=मुख्यमूलस्य प्रागुक्तत्वादुपमूलानि,ताभ्यः उपशाखाभ्यः जीव-रूपाभ्यः उद्भूतानि,क्लेशकर्मतद्विपाकवासनालक्षणानि, अधः=अधस्तात् स्थावरान्तम्,अनुसन्ततानि=तत्तज्जीवानुरूपं सम्यगविच्छेदेन विस्तृतानि, सर्वत्रानुप्रविष्टानि यानि, तानि मनुष्यलोके=अस्मिन् मनुष्यलोके, कर्मानुबन्धीनि=कर्म शुभाशुभम् अनुबन्धोऽनुबन्धनमस्ति येषां, तानि मनुष्याणां शुभाशुभैः कर्मवराटकैरनुक्रमेण बद्धानीत्यर्थः ॥२॥

अथाश्वत्थनामकं संसारवृक्षमुपवर्ण्य तस्य दुर्ज्ञेयस्वरूपत्वेन मनुष्याणां कर्तव्यमाह द्वाभ्याम्—

"न रूपमस्येह तथोपलभ्यते, नान्तो न चादि-र्न च सम्प्रतिष्ठा । अश्वत्थमेनं सुविरूढमूलमसङ्ग-शस्त्रेण दृढेन छित्त्वा" ॥३॥

अर्थः—अस्य=एतस्य संसारवृक्षस्य, रूपं=स्वरूपम, इह=अस्मिन् लोके, तथा=यथोपवर्णितं तथा, नोपलभ्यते=न विज्ञायते, नान्तः=नावसानं समाप्तिः, न चादिः=नैवारम्भः उपक्रमः प्राथम्यं, नच=नैव सम्प्रतिष्ठा=स्थितिः, मध्यम, उपलभ्यते=विज्ञायते। सुवि-रूढमूलं=सुष्ठु विरूढानि विरोहं गतानि, दार्ढ्यं प्राप्तानि, सुदृढानि, मूलानि क्लेशकर्मतद्विपाकवासनारूपाण्युपमूलानि यस्य, तं नितान्त-दृढोपमूलम, एनं=पूर्वोपवर्णितरूपमेतम् , अश्वत्थम्=अश्वत्थनामकं संसारवृक्षम,दृढेन=कुण्ठीभावरहितेन विवेकतीक्ष्णेन, असङ्गशस्त्रेण = विकारहेतुः सम्बन्धः सङ्गः सक्तिरासक्तिः,अहंममभावः,तदभावलक्षणेन शस्त्रेण कुठारेण, कर्तृत्वभोक्तृत्वाभिमानाभावरूपपरश्वधेन, छित्त्वा= द्वैधीकृत्य, उत्कृत्य, पृकृत्येत्यर्थः ॥ २ ॥

"ततः पदं तत् परिमार्गितव्यं, यस्मिन् गताः न निवर्तन्ति भूयः । तमेव चाद्यं पुरुषं प्रपद्ये, यतः प्रवृत्तिः प्रसृता पुराणी" ॥४॥

अर्थः—ततः = तस्मात् संसारवृक्षछेदनादनन्तरं, तत्=अदः संसारवृक्षमूलभूतं पदं=परब्रह्माख्यं परमं पदं, पदनीयत्वात् पदं, परिमार्गितव्यम्=अन्वेष्टव्यम्, अन्विष्य प्राप्तव्यं, यस्मिन्=यस्मिन् परस्मिन् ब्रह्मणि पदे,गताः=प्राप्ताः पुरुषाः, समुद्रे सरित इव मिलिताः, प्रविष्टाः, भूयः=पुनः, न निवर्तन्ति=न निवर्तन्ते, न संसाराय पुनरावर्तन्ते, न पुनः शरीरत्वाय कल्पन्ते। तमेव=योऽस्य संसारवृक्षस्य मूलभूतः पदशब्देनोक्तोऽमुमेव, नान्यमित्यवधारणार्थः, च=निश्चयेन, आद्यं=संसारवृक्षस्यादौ भवं, प्राथमिकं, पुरुषं=येनेदं बहिरन्तः सर्वं पूर्णं, तं, पुरिषु पूर्षु वा शयनात् पुरुषं परं ब्रह्म परमात्मानं, प्रपद्ये=प्रपद्येत, आर्षः पुरुषव्यत्ययः, शरणत्वेनोपाददीत, तं प्राप्तुं तमेवैकान्तभक्त्योपासीत,सेवेत,यतः=यस्मात् संसारवृक्षस्य बीजभूताद् आद्यात्पुरुषात् परब्रह्मणः परमात्मनः सकाशात् पुराणी=पुरातनी, सनातनी, शाश्वतिकी, प्रवृत्तिः=संसारवृक्षप्रवृत्तिः प्रसृता=प्रसारं विस्तारं गतेत्यर्थः ॥ ४ ॥

अथ यथोक्तपदप्राप्तौ साधनान्तराणि दर्शयन्नाह—

“निर्मानमोहाः जितसङ्गदोषाः अध्यात्मनित्याः विनिवृत्तकामाः। द्वन्द्वैर्विमुक्ताः दुःखसुखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत्” ॥५॥

अर्थः—निर्मानमोहाः = मानोऽभिमानोऽहङ्कारो गर्वः, मोहो भ्रमो विपर्ययः, तौ निर्गतौ येभ्यः, ताभ्यां वा ये निष्क्रान्ताः, ते मानमोहरहिताः, जितसङ्गदोषाः=सङ्गःसक्तिः,स एव दोषः, रागादिदोषहेतुत्वात्, जितः सङ्गदोषो यैस्ते भोग्यपदार्थानां संगेऽपि सङ्गवर्जिताः, अध्यात्मनित्याः=आत्मनि नित्याः नित्यस्थितिकाः, नित्यात्मनिष्ठाः, विनिवृत्तकामाः=विशेषेण निवृत्ताः कामाः भोग्यपदार्थाभिलाषाः येषां, ते भोग्यान् पदार्थानुपभुञ्जाना अपि तत्कामनाविरहिताः, सुखदुःखसंज्ञैः=सुखदुःखलाभालाभजयपराजयादिनामकैर्द्वन्द्वैः=युग्मैर्विमुक्ताः=परित्यक्ताः, अमूढाः=विपरीतज्ञानाः मूढास्तेभ्यो भिन्नाः यथार्थज्ञानाः कर्मयोगिनः, तद्=अदः संसारवृक्षबीजभूतम्,अव्ययं=व्ययो विनाशः, तद्रहितं नित्यं निर्विकारं, पदं = परब्रह्माख्यं परमं पदं, गच्छन्ति= प्राप्नुवन्तीत्यर्थः ॥ ५ ॥

अथ तदेव गन्तव्यं पदं विशिनष्टि—

**"न तद् भासयते सूर्यो, न शशाङ्को न पावकः।**
**यद् गत्वा न निवर्तन्ते, तद् धाम परमं मम" ॥६॥**

अर्थः—तद्=अदः परब्रह्माख्यं परमं पदं, सूर्यः=सर्वावभासनशक्तिरादित्यो न भासयते=न भासयति, न दीपयति, न प्रकाशयति, न शशाङ्कः=चन्द्रमाः, न पावकः=अग्निर्भासयते=प्रकाशयति, तेषां तद्भासनसामर्थ्याभावात्। आह च सहेतुकं श्रुतिः "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं, तस्य भासा सर्वमिदं विभाति" (कठो० ५। १५) इति। नहि भास्यानि भासकं स्वं कदाचित् कथञ्चिद् भासयितुमीशते। भास्यानि सूर्यादीनि, भासकं परं ब्रह्म, सूर्यादीनां भासकत्वं तु तद्दत्तभासनशक्त्यैव न स्वतः। यत्=यत् परब्रह्माख्यं परमं पदं, गत्वा=इत्वा, प्राप्य, उपेत्य, कर्मयोगिनो न निवर्तन्ते=न संसाराय पुनरावर्तन्ते, तत्=तदेव सूर्यादिभिरभास्यं कर्मयोगिभिश्च प्राप्यं नित्यं शाश्वतं, मम=परब्रह्मणः परमात्मनः पुरुषोत्तमस्य मम, परमं=सर्वोत्कृष्टं, धाम=तेजोमयस्वरूपमित्यर्थः॥६॥

अथात्मनः संसारवृक्षबीजत्वं कर्मयोगिना जीवेन प्राप्यत्वं चाभिधाय प्रापकस्य तस्यात्मानन्यत्वं शरीरेन्द्रियाधिष्ठातृत्वंचाभिधित्सुराह—

**"ममैवांशो जीवलोके, जीवभूतः सनातनः।**
**मनःषष्ठानीन्द्रियाणि, प्रकृतिस्थानि कर्षति" ॥७॥**

अर्थः—ममैव=परब्रह्मणः परमात्मनो ममैव, नान्यस्येत्यवधारणार्थः, अंशः=अंश इवांशः, सनातनः=सनातनस्य ममांशत्वात् सनातनः शाश्वतः, जीवलोके=ब्रह्मादिस्थावरान्तानां जीवानां लोके विषयभोगस्थाने शरीरे, जीवभूतः=जीवरूपेण वर्तमानः, जीवभावं प्राप्तोऽवतिष्ठते। स मनःषष्ठानि=मनः षष्ठं येषां, तानीन्द्रियाणि=जीवभूतस्येन्द्रस्यात्मनो विषयोपलब्धिकरणतया लिङ्गानि श्रोत्रत्वक्चक्षूरसनघ्राणानि पञ्चज्ञानेन्द्रियाणि, हस्तपादपायूपस्थवागाख्यानि पञ्चकर्मेन्द्रियाणीत्यपि द्रष्टव्यम्, मनःसहितानि सर्वाणीन्द्रियाणि, प्रकृतिस्थानि=प्रकृतिःस्वभावो विषयप्रावण्यं, तत्र स्थितानि, विषयप्रवणस्वभावानि, यत्रेदं श्रूयते

"पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात् पराङ् पश्यति, नान्तरात्मन्" ( कठो० ४ । १ ) इति, कर्षति=विषयेषु शब्दादिषु भोगार्थमाकर्षति प्रवर्तयत्यधिष्ठातृत्वादित्यर्थः ॥ ७ ॥

अथास्य शरीरेन्द्रियाधिष्ठातृत्वं यावज्जीवभावं दिदर्शयिषुराह—

**"शरीरं यदवाप्नोति, यच्चाप्युत्क्रामतीश्वरः ।**
**गृहीत्वैतानि संयाति, वायुर्गन्धानिवाशयात्" ॥८॥**

अर्थः - ईश्वरः=शरीरेन्द्रियस्वामी जीवात्मा क्षेत्रज्ञः, यद्=यदा, शरीरं=पूर्वस्माच्छरीरादन्यच्छरीरम्, अवाप्नोति=प्राप्नोति, गृह्णाति, च=तथा, यद्=यदाऽपि=निश्चयेन, उत्क्रामति=शरीरादस्मान्निष्क्रामति, बहिर्निर्याति, शरीरान्तरग्रहणार्थं निर्गच्छति, तदा, एतानि=इमकानि मनःषष्ठानि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि च भूतसूक्ष्मसहितानि, गृहीत्वा= उपादाय, संयाति=सम्यक् पुनरागमनराहित्येन याति प्रयाति, गच्छति, शरीरादिन्द्रियाणि गृहीत्वा याने दृष्टान्तः, इव = यथा, आशयात्= गन्धाश्रयात् कुसुमादेर्गन्धान्=गन्धात्मकान् सूक्ष्मानंशान् गृहीत्वा वायुः=पवनः संयाति=गच्छतीत्यर्थः ॥ ८ ॥

अथेन्द्रियाणि गृहीत्वा शरीरान्तरं गतो जीवः किं कुरुते ? तत्राह—

**"श्रोत्रं चक्षुः स्पर्शनं च, रसनं घ्राणमेव च ।**
**अधिष्ठाय मनश्चायं, विषयानुपसेवते" ॥ ९ ॥**

अर्थः—अयम्=एष पूर्वशरीरादिन्द्रियाणि गृहीत्वा शरीरान्तरं गतो देहेन्द्रियसङ्घातेश्वरो जीवात्मा क्षेत्रज्ञः, श्रोत्रं=श्रवणं, चक्षुः= नयनं, च=तथा, स्पर्शनं=त्वगिन्द्रियं, रसनं=जिह्वां, च = तथा, एव= निश्चयेन घ्राणं=नासां, च=तथा मनः=षष्ठं मनोऽन्तःकरणं, चित्तं, पञ्च कर्मेन्द्रियाणि, इत्यपि द्रष्टव्यम्, तानीमानि सर्वाणीन्द्रियाण्यधिष्ठाय= अधिकारे विधाय यथेच्छं प्रवर्त्य, विषयान् = तत्तदिन्द्रियविषयान् शब्दादीनुपभोग्यानर्थान्, उपसेवते=उपभुङ्क्त इत्यर्थः ॥ ९ ॥

अथैवम्भूतस्य जीवात्मनो ज्ञानस्य दौर्लभ्यमाह—

"उत्क्रामन्तं स्थितं वाऽपि, भुञ्जानं वा गुणान्वितम्।
विमूढाः नानुपश्यन्ति, पश्यन्ति ज्ञानचक्षुषः" ॥१०॥

अर्थः—उत्क्रामन्तं=देहान्निष्क्रामन्तं, बहिर्गच्छन्तं, देहं परित्यजन्तं, स्थितं वाऽपि = विकल्पार्थो वाकारः,अवधारणार्थोऽपिः,अथवा तस्मिन्नेव देहे स्थितं तिष्ठन्तं, वा=अथवा भुञ्जानं=विषयानुपसेवमानं, गुणान्वितं=गुणैरिन्द्रियैरन्वितं युक्तं जीवात्मानं, विमूढाः = विशेषेण मूढाः सर्वथा विवेकचक्षुर्हीनाः पुरुषाः, नानुपश्यन्ति=नावलोकयन्ति, ज्ञानचक्षुषः=ज्ञानं वस्तुयाथात्म्यवेदनं,तदेव चक्षुर्दृष्टिर्येषां,ते ज्ञानदृष्टयो विवेकिनो जनाः, पश्यन्ति=याथातथ्येनानुभवन्तीत्यर्थः ॥१०॥

अथोक्तमेवार्थं स्पष्टयति—

"यतन्तो योगिनश्चैनं, पश्यन्त्यात्मन्यवस्थितम्।
यतन्तोऽप्यकृतात्मानो, नैनं पश्यन्त्यचेतसः" ॥११॥

अर्थः—यतन्तः=शास्त्रोक्तैः श्रवणमननादिभिर्वेदनोपायैरात्मानं द्रष्टुं यतमानाः,योगिनः=कर्मयोगिनः, कर्मयोगानुष्ठानेन संस्कृतमनसः, च=एव-निश्चयेन,आत्मनि=देहेऽवस्थितं=क्षेत्रज्ञरूपेण स्थितं वर्तमानम्, एनम्=एतं प्रकृतं देहेन्द्रियस्वामिनमात्मानं, पश्यन्ति=लोचयन्ति। यतन्तोऽपि=शास्त्रोक्तैः श्रवणमननादिभिर्दर्शनोपायैः प्रयतमानाः अपि, अकृतात्मानः = कर्मयोगानुष्ठानाभावादसंस्कृतमनसोऽशुद्धचित्ताः अकर्मयोगिनोऽचेतसः=अल्पबुद्धयोऽविवेकिनो जनाः,नैनं=नैतं प्रकृतदेहेन्द्रियस्वामिनमात्मानं, पश्यन्ति=लोकयन्ति। भक्तिपूर्वकं कर्मयोगानुष्ठानं हि मुख्यतमः आत्मदर्शनोपायः,ये तं परिहाय केवलैः श्रवणमननादिभिरेवोपायैरात्मानं द्रष्टुं प्रयतन्ते, ते शास्त्ररहस्यानभिज्ञत्वादल्पचेतसो विमूढाः सहस्रैरपि पुरुषायुषैरात्मानं द्रष्टुं स्वप्नेऽपि नेशते। नह्यकर्मयोगिनः पुरुषाः आत्मदर्शनेऽधिक्रियन्ते,बलाद्वा वाऽधिकारिणःसम्पद्यमानाः कश्चित् कदाचिदात्मदर्शनायावकल्पन्ते, संन्यासिनः स्युर्गृहमेधिनो वा भवेयुर्नास्ति कश्चिद् विशेषस्तुल्यत्वादित्यर्थः ॥११॥

अथ ब्रह्मादिस्थावरान्तेषु शरीरेषु यथाऽहं परं ब्रह्म परमात्मा जीवरूपेणावस्थितः, तथा सूर्य्यादिषु पदार्थेष्वपि तेजआदिरूपेणाहमेवास्म्यवस्थित इत्याह त्रिभिः—

"यदादित्यगतं तेजो, जगद् भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ, तत्तेजो विद्धि मामकम्" ॥१२॥

अर्थः—आदित्यगतम्=आदित्यः सूर्यः, तत्र गतं प्राप्तं स्थितं, यत् तेजः=ज्योतिर्दीप्तिः प्रकाशो अखिलं=निखिलं सकलं जगद्=विश्वं, भासयते=भासयति, प्रकाशयति, यत्=यत्तेजश्चन्द्रमसि=चन्द्रे गतं स्थितं, च=तथा, यत्=यत् तेजोऽग्नौ=हुतवहे गतं स्थितं, निखिलं जगदवभासयते, तत् तेजः=ज्योतिर्मामकं=मामकीनं विद्धि=जानीहीत्यर्थः ॥१२॥

"गामाविश्य च भूतानि, धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः, सोमो भूत्वा रसात्मकः" ॥१३॥

अर्थः—च=तथा, अहम्=ईश्वरोऽहम्, ओजसा=बलेन, नैजेन धारकेणाकर्षणाख्येन सामर्थ्येन, गां=गामुकां पृथिवीम्, आविश्य=प्रविश्य, सूर्यमण्डलेन साकमाकृष्याकर्षकभावसम्बन्धसम्पादनेन दृढां विधाय, यत्रेदमाम्नायते "येन द्यौरुग्रा पृथिवी च दृढा, स्वः स्तभितं, येन नाकः" (ऋ० १० । १२१ । ५) इति, स्वः सूर्यः, नाकश्चन्द्रः, भूतानि=चराचराणि पृथिव्याश्रयाणि सर्वाणि वस्तूनि, धारयामि=बिभर्मि, स्तम्भयामि। च=तथा, रसात्मकः=रसो जलं, तत्स्वभावः, सर्वरसमयः, सोमः=चन्द्रो भूत्वा=सम्पद्य, सोमरूपेण स्थितः, सर्वाः=समस्ताः, ओषधीः=व्रीहियवगोधूमाद्याः, वृक्षलतातृणगुल्माद्याश्च, पुष्णामि=वर्धयामि, पुष्टिमतीर्विदधामीत्यर्थः ॥१३॥

किञ्च—

"अहं वैश्वानरो भूत्वा, प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्" ॥१४॥

अर्थः—अहम्=ईश्वरोऽहं, वैश्वानरः=जाठरोऽग्निः "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते" (श० ३०

५ । ९ । १ ) इति श्रुतेः, भूत्वा=वृत्वा, सम्पद्य, प्राणिनां=प्राणवतां सर्वेषां जीवानां, देहं = शरीरम्, आश्रितः = प्रविष्टः, शरीरस्यान्तर्मध्ये प्रविश्य, प्राणापानसमायुक्तः=उच्छ्वासनिश्वासरूपाभ्यां प्राणापानाभ्यामुद्दीपकाभ्यां पाकसहकारिभ्यां समायुक्तः सम्यगाधुक्षितः, प्रज्वालितः, चतुर्विधं=भक्ष्यं, भोज्यं, लेह्यं, चोष्यमिति चतुष्प्रकारकम्, अन्नं= प्राणिभिरद्यमानं वस्तुमात्रं, पचामि=जीर्णयामि पक्तिं नयामीत्यर्थः ।

दन्तैश्चूर्णीकृत्य यदन्नं भक्ष्यते मोदकापूपादि, तद् भक्ष्यम्, दन्तावघातं विनैव केवलं जिह्वया विलोड्य यन्निगीर्यते यवागूसूपौदनपायसादि, तद् भोज्यम्, यज्जिह्वायां निःक्षिप्य रसास्वादनेन निगीर्यते द्रवीभूतं मध्वादि, तल्लेह्यम्, दन्तैर्निष्पीड्य रसांशं निगीर्यावशिष्टं यत् त्यज्यते सहकारेक्षुदण्डादि, तच्चोष्यम् ॥१४॥

किमधिकेन ?

**"सर्वस्य चाहं हृदि सन्निविष्टो, मत्तः स्मृतिर्ज्ञानमपोहनं च । वेदैश्च सर्वैरहमेव वेद्यो, वेदान्तकृद् वेदविदेव चाहम्" ॥१५॥**

अर्थः—अवधारणे चः, अहम्=ईश्वरोऽहं, च=निश्चयेन, सर्वस्य=समस्तस्य ब्रह्मादिस्थावरान्तस्य प्राणिजातस्य हृदि=हृदये सन्निविष्टः=सम्यगन्तरात्मरूपेण निविष्टः प्रविष्टः, मत्तः=सर्वान्तरात्मनो मत् सकाशात्, स्मृतिः=पूर्वज्ञातवस्तुविषयोपस्थितिश्चिन्ता प्राणिमात्रस्य जायते, ज्ञानं=विषयेन्द्रियसंस्पर्शजं वस्तुज्ञानं, च=तथा, अपोहनं=स्मृतिज्ञानयोरपगमनमपायो मत्त एव बोभूयते । च=तथा, सर्वैः=समस्तैर्वेदैः=मन्त्रब्राह्मणोपनिषदात्मकैर्मुख्यगौणवृत्त्या वेदशब्दाभिधेयैरहमेव=सर्वान्तरात्माऽहमेवेश्वरो, नान्य इत्यवधारणार्थः, वेद्यः= वेदितुं योग्यः । मन्त्राः स्युर्ब्राह्मणानि वा भवेयुरुपनिषदो वा, सर्वे वेदाः सपरिवारां प्रकृतिं, तद्भोक्तारं पुरुषं च मत्प्रकृतित्वेन वेदयित्वा मय्येव सर्वान्तरात्मनि पर्यवस्यन्ति । मत्परस्यान्यस्य कस्यचिदभावात्, मद्वेदनेनैव च सर्वस्य वेदनसम्भवात् । यत्रेदं श्रूयते "आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्" ( बृ०उ० ४।५।६ ) इति ।

अतोऽहं निखिलवेदवेदितव्यः, वेदान्तकृत्=वेदसिद्धान्तोपदेशकृत्, वेदसिद्धान्तः कर्मयोगः "अप्नस्वती मम धीरस्तु शक्र !"(ऋ०१०।४२।३) इत्यादिमन्त्रवर्णात् "कामात्मता न प्रशस्ता, न चैवेहास्त्यकामता । काम्यो हि वेदाधिगमः, कर्मयोगश्च वैदिकः" ( मनु०२।२ ) इत्यादि-स्मृतेश्च, तस्योपदेष्टा गुरुः "इमं विवस्वते योगं प्रोक्तवानहमव्ययम्" ( गी० ४ । १ ) इति प्रागुक्तेः, च=तथा, एव=निश्चयेन, वेदवित्= वेदार्थविद् वेदज्ञोऽहमस्मीत्यर्थः ॥१५॥

अथ यः सर्वस्य हृदि सन्निविष्टोऽन्तरात्मा, स एव परमात्मा, स एव पुरुषोत्तम इति विवक्षुराह—

**"द्वाविमौ पुरुषौ लोके, क्षरश्चाक्षर एव च !**
**क्षरः सर्वाणि भूतानि, कूटस्थोऽक्षर उच्यते" ॥१६॥**

अर्थः—लोके=संसारे, इमौ=एतौ प्रत्यक्षादिसिद्धौ, द्वौ= द्विसंख्याकौ,पुरुषौ=पुरुषस्य जीवात्मनः क्षेत्रज्ञस्य भोगापवर्गार्थत्वात् पुरुषौ पुरुषशब्दव्यपदेश्यौ विज्ञातव्यौ, तयोरेकः क्षरः, च = तथा, एव=निश्चयेनापरोऽक्षरः, च=तौ कार्यकारणरूपौ व्यक्ताव्यक्तौ द्वौ । तत्र सर्वाणि=सकलानि महदहङ्कारेन्द्रियतन्मात्रसहितानि भूतानि= स्थूलभूतानि पञ्च, क्षरः=क्षरशब्दार्थः, क्षरणात्, क्षरणं विनाशस्त-च्छीलत्वात्,कूटस्थः=तेषु महदादिस्थूलभूतान्तेषु त्रयोविंशतिविकारेषु राशिभूतेषु कारणात्मनाऽवस्थितः,राशिः कूटः,तत्र तिष्ठति यः,सः, इति तद्व्युत्पत्तेः, मायानाम्नी त्रिगुणात्मिका प्रकृतिरक्षरः=अक्षरशब्दार्थः, उच्यते=कथ्यते इत्यर्थः ॥ १६ ॥

अथ यदर्थमिमौ क्षराक्षरौ पुरुषौ कथितौ लक्षितौ च, तमाह—

**"उत्तमः पुरुषस्त्वन्यः, परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य, बिभर्त्यव्यय ईश्वरः" ॥१७॥**

अर्थः—उत्तमः पुरुषस्तु=पूर्वोक्तयोः क्षराक्षरयोः पुरुषयोरनु-त्तमत्वं तुना द्योत्यते, क्षराक्षराभ्यामिति विपरिणम्यानुषज्यते, कार्य-कारणरूपाभ्यां व्यक्ताव्यक्ताभ्यां क्षराक्षराभ्यां पुरुषाभ्यामुत्कृष्टतमोऽन्त-रात्मा पुरुषस्त्वन्यः=क्षराक्षराभ्यां ताभ्यां विलक्षणः, क्षरः स्वरूपतः

क्षरति, अक्षरः स्वरूपतोऽक्षरणेऽपि धर्मतः क्षरति, अन्तरात्मा पुरुषस्तु न स्वरूपतः क्षरति, न धर्मतः क्षरतीति ताभ्यां विलक्षणस्ताभ्यां भिन्नः, परमात्मा=प्रकृतितत्कार्यसंस्पर्शराहितत्वेन नित्यशुद्धबुद्धमुक्तस्वरूपत्वात् परमश्चासावात्मेति=एवमुदाहृतः=कथितः, "एतावानस्य महिमा, अतो ज्यायांश्च पूरुषः। पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि" (ऋ० १०।९०।३) "इन्द्रियेभ्यः परं मनः, मनसः सत्त्वमुत्तमम्। सत्त्वादधि महानात्मा, महतोऽव्यक्तमुत्तमम्। अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च। यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति" (कठो० ६। ७-८) इतिश्रुतिभ्यां प्रतिपादितः। यः परमात्मा, लोकत्रयं=भूर्भुवःस्वराख्यं लोकत्रयं, विश्वं जगद्, आविश्य=कारणात्मनाऽनुप्रविश्य बहिरन्तर्व्याप्य, बिभर्ति=दधाति, धारयति पोषयति च, यत्रैतच्छ्रूयते "संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः" (श्वेता० १।८) इति। भरते=धत्ते। अव्ययः=व्ययो विनाशस्तेन विकारमात्रं लक्ष्यते, न विद्यते व्ययो विकारो यस्य स निर्विकारः, ईश्वरः=विश्वस्य स्वामी नायकः प्रभुरित्यर्थः ॥२७॥

अथ यः क्षराक्षराभ्यामुत्तमः पुरुषः, यः परमात्मा लोकत्रयस्य भर्ता, स एवाहं पुरुषोत्तम इति नामनिर्वचनपुरस्सरमाह—

**"यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः।**
**अतोऽस्मि लोके वेदे च, प्रथितः पुरुषोत्तमः" ॥१८॥**

अर्थः—यस्मात्=यस्माद्धेतोरहं=सर्वभूतान्तरात्मा परमात्मा क्षेत्रज्ञः पुरुषोऽहमीश्वरः, क्षरं=महदादिस्थूलभूतान्तं प्रकृतिकार्यं चरनामानं पुरुषम्, अतीतः=अतिक्रान्तः, सर्वथा तद्दोषैरसंस्पृष्टः, च=तथाऽक्षरादपि=क्षरमपिना समुच्चीयते, यथा क्षरमतीत्य वर्तनात् क्षरादुत्तमः, तथा क्षरकारणात् प्रकृत्याख्यादक्षरनाम्नः पुरुषादपि, उत्तमः=उत्कृष्टतमो, नियन्तृत्वात्। अतः=अस्माद्धेतोर्लोके=भक्तवर्गे, च=तथा, वेदे="अगन्म ज्योतिरुत्तमम्" (ऋ० १।५०।१०) "विष्णोः पदे परमे" (ऋ० १।१५४।५) "नकिरिन्द्र! त्वदुत्तरो न ज्यायान् अस्ति वृत्रहन्!। नकिरेवा यथा त्वम्" (ऋ० ४।३०।१) इत्यादि-

वेदे, पुरुषोत्तमः=पुरुषाभ्यां क्षराक्षराभ्यामुत्कृष्टत्वात् पुरुषोत्तम इति प्रथितः=प्रख्यातोऽस्मि=भवामीत्यर्थः ॥१८॥

अथैवम्भूतेश्वरज्ञानस्य फलमाह—

"यो मामेवमसंमूढो, जानाति पुरुषोत्तमम् ।
स सर्वविद् भजति मां, सर्वभावेन भारत !" ॥१९॥

अर्थः—भारत=हे भरतवंशोद्भव ! यः=यः पुमान्, असंमूढः=सम्मोहवर्जितः, सम्मोहो भ्रान्तिज्ञानं, तद्रहितो निश्चितमतिः सन्, एवं=यथोक्तप्रकारेण, मां=सर्वभूतान्तरात्मानं परमात्मानं क्षेत्रस्वामिनमीश्वरं मां, पुरुषोत्तमं=क्षराक्षराभ्यां व्यक्ताव्यक्ताभ्यां पुरुषभोगापवर्गार्थत्वात्पुरुषनामाकाभ्यामुत्कृष्टत्वात् पुरुषोत्तमं, जानाति=वेत्ति, सः=असौ सर्ववित्=सर्वरूपेण स्थितस्येश्वरस्य मम वेत्ता ज्ञाता द्रष्टा भवन्, सर्वं मामेव विदन्,मां=पुरुषोत्तमं मां, सर्वभावेन=सर्वप्रकारेण,कायेन वाचा मनसा, भजति=भजते, सेवते, मदाज्ञामनुवर्तते इत्यर्थः ॥१९॥

अथाध्यायार्थमुपसंहरन्नाह—

"इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ! ।
एतद् बुद्ध्वा बुद्धिमान् स्यात्,कृतकृत्यश्च भारत !" ॥२०॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरषोत्तमयोगो नाम पञ्चदशोऽध्यायः॥ १५॥

अर्थः—अनघ=हे निष्पाप! इति=अनेन प्रकारेण, "ऊर्ध्वमूलमधःशाखम्"इत्यादिना प्रकारेण,इदम्=एतद् गुह्यतमं=रहस्यतमं, शास्त्रं=गीतोपनिषदाख्यं शास्त्रं, मया=मयका कृष्णेनोक्तम्=अभिहितम् । भारत=हे भरतवंशोद्भव! एतद्=इदं मयोक्तं गुह्यतमं शास्त्रं बुद्ध्वा=मत्वा,बुद्धिमान्=सम्यग् ज्ञानवान्,च=तथा कृतकृत्यः=विदितवेदितव्यः, सम्यग् ज्ञानप्राप्त्यै यत्कृत्यं कर्तव्यं,तत् कृतं येनेति तद्व्युत्पत्तेः, "यस्तं वेद स वेदवित्" इत्युपक्रमात्, स्यात्=भवतीत्यर्थः ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्ये पञ्चदशोऽध्यायः॥१५॥

# "अथ षोडशोऽध्यायः"।

पूर्वस्मिन्नध्यायेऽन्ते "स सर्वविद् भजति मां सर्वभावेन भारत !" इति समचीकृतत्। तत्र कोऽसौ मनुष्यो भजति देवो वाऽसुरो वा, कोऽसौ न भजतीति विशेषतः संकीर्तनार्थं षोडशाध्यायमारभते। "द्वया ह प्राजापत्याः देवाश्चासुराश्च" (बृ० उ० १।३।१) इति श्रुतेर्मनुष्याणां द्वौ भेदौ देवा असुराश्चेति। येषां दैवी सम्पत्, ते देवाः, येषामासुरी सम्पत्, तेऽसुराः। अन्तःकरणस्य मनसः शुभाः वृत्तयो दैवी सम्पत्, अशुभाः वृत्तय आसुरी सम्पत्। सम्पत् सम्पत्तिः, विभूतिरैश्वर्यमित्यनर्थान्तरम्। सम्पदो द्वैविध्याद् मनुष्या अपि द्विविधाः। तत्रेश्वरभक्तिप्रयोजकत्वेन मोक्षहेतुत्वादभ्यर्हिता दैवी सम्पत्, तद्विपरीताऽऽसुरी सम्पत्। तामेतामग्रे विस्तरेणाभिधास्यते। अभ्यर्हितां दैवीं प्रथममाह त्रिभिः—

"श्रीभगवानुवाच"।

**"अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः।**
**दानं दमश्च यज्ञश्च, स्वाध्यायस्तप आर्जवम्" ॥१॥**

अर्थः—अभयं=भयराहित्यम, अभीरुत्वं, सत्त्वसंशुद्धिः=अन्तःकरणं सत्त्वं, तस्य शुद्धिर्लोकव्यवहारेषु परवञ्चनमायाऽनृतादिपरिवर्जनं, ज्ञानयोगव्यवस्थितिः=ज्ञाने कर्मयोगे च व्यवस्थानं, सर्वदा तन्निष्ठत्वम्। दानं=न्यायार्जितस्य धनधान्यादेर्यथाशक्ति संविभागः, च=तथा, दमः=बाह्येन्द्रियसंयमः, ऋतुकालाद्यतिरिक्तकालेषु मैथुनाद्यभावः, च=तथा यज्ञः=देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्यज्ञ इति पञ्चमहायज्ञान्तर्गतश्चतुर्विधो यज्ञः, स्वाध्यायः=ब्रह्मयज्ञः, प्रतिदिनं यथावकाशं स्वधर्मपुस्तकस्य ऋग्वेदस्याध्ययनं, तपः=सुखदुःखहानिलाभजयपराजयादिद्वन्द्वसहनम्, आर्जवम्=अवक्रत्वं, सरलत्वं, कुटिलताराहित्यं, मनोवाक्कायकर्मसु सर्वदैकरूप्यमित्यर्थः ॥ १ ॥

**"अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्।**
**दया भूतेष्वलोलुप्त्वं, मार्दवं ह्रीरचापलम्" ॥२॥**

अर्थः—अहिंसा=हिंसा हिंसनं पीडनं प्राणिनां, तद्राहितता, सत्यं= यथार्थभाषणं, यथादृष्टश्रुतकथनम्, अनृतवर्जनम्, अक्रोध=क्रोधाभावः, यथाशक्ति क्रोधोपशमः, त्यागः=सर्वकर्मफलत्यागः, शान्तिः=शमः, अन्तःकरणसंयमः, अपैशुनं=परस्मै वा, राज्ञे वा, राजाधिकारिणे वा, यस्मै कस्मैचित् परदोषाणां श्रावयिता पिशुनः, तस्य भावो धर्मः पैशुनं, तद्रहितता, परोक्षे परदोषप्रकाशनम् । भूतेषु=प्राणिषु, दया= कृपा, तदीयदुःखनिवृत्त्यै यथासामर्थ्यं यत्नः, अलोलुप्त्वम्=अतिलोभो लोलुप्त्वं, तदभावः, मार्दवं=मृदुता, नम्रताऽक्रौर्यं, ह्रीः=अकार्यकरणे लज्जा, अचापलं=विना प्रयोजनं वाक्पाणिपादादीनां चालनं, व्यापारणं चापलं, तद्वर्जनं, स्थैर्यं, नैश्चल्यं, वृथा चेष्टाराहित्यमित्यर्थः ॥ २॥

"तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति सम्पदं दैवीमभिजातस्य भारत !" ॥३॥

अर्थः—भारत=हे भरतवंशोद्भव ! तेजः=प्रागल्भ्यं, परैरभि-भवितुमशक्यत्वं, क्षमा=निर्बलापराधसहिष्णुता, धृतिः=धैर्यं, महत्यामप्यापदि स्वधर्मादचलनेन कर्तव्यावधारणे दार्ढ्यं, शौचं=बाह्या-भ्यन्तरनैर्मल्यं, मृज्जलादिकृतं बाह्यं, रागद्वेषादिकालुष्याभावकृतमा-भ्यन्तरम्, अद्रोहः=विश्वासघातो द्रोहः, तदभावः, नातिमानिता=अत्यर्थं मानोऽतिमानः, आत्मनि पूज्यत्वाभिमानातिशयः, स विद्यते यस्य, सोऽतिमानी, तस्य भावोऽतिमानिता, तस्या अभावो नातिमानिता, स्वस्मिन् पूज्यत्वातिशयभावनाशून्यता । ते एते अभयादयो नाति-मानितान्ताः षड्विंशतिरन्तःकरणवृत्तिलक्षणाः शुभगुणाः, दैवीं= देवानां देवभक्तानां विश्वरूपेश्वरसेवकानां कर्मयोगिनां सम्बन्धिनी दैवी, तां सम्पदं=शुभवृत्तिलक्षणां विभूतिं समृद्धिम्, अभिजातस्य= अभिलक्ष्योत्पन्नस्य, तामभितो वर्तितुमुद्भूतस्य भाविकल्याणस्य मनु-पुत्रस्य भवन्ति=सम्भवन्तीत्यर्थः ॥३॥

अथासुरसम्पदमाह—

"दम्भो दर्पोऽतिमानश्च, क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ ! सम्पदमासुरीम्" ॥४॥

अर्थः—दम्भः=स्वस्यान्यथा प्रदर्शनं, वेषभाषाक्रियाचातुर्यादिभिरमहत्त्वेऽपि स्वमहत्त्वप्रकटनम्,अधार्मिकत्वेऽपि धार्मिकत्वेनात्मनः ख्यापनं, दर्पः=धनजनविद्यादिनिमित्तो महदवज्ञाहेतुर्मदः, च=तथा, अतिमानः=अत्यर्थमात्मनि पूज्यत्वाभिमानः, क्रोधः=कोपः, स्वपरपीडाहेतुरभिज्वलनात्मको मनोवृत्तिविशेषः, च=तथा, एव=निश्चयेन पारुष्यं=परुषो निष्ठुरः,तस्य भावः पारुष्यं निष्ठुरत्वं,प्रत्यक्षरूक्षवदनशीलत्वं, च=तथा,अज्ञानं=कार्याकार्यज्ञानराहित्यम्, एते दम्भादयोऽज्ञानान्ताः षट् मनोवृत्तिलक्षणाः अशुभगुणाः,पार्थ=हे पृथापुत्र! आसुरीं=सुराः देवाः, देवाधिदेवभक्ताः कर्मयोगिनोमनुष्याः, तद्भिन्ना असुराः, अनीश्वरभक्ताःअकर्मयोगिनः,तेषां सम्बन्धिनी सम्पदासुरी,तामासुरीं सम्पदम्=अशुभवृत्तिलक्षणां विभूतिम् , अभिजातस्य=अभिलक्ष्योत्पन्नस्य भविष्यदकल्याणस्य मनुष्यस्य, भवन्ति सम्भवन्तीत्यर्थः ॥४॥

अथोक्तयोर्दैवासुरसम्पदोः फलभेदं वदन् अर्जुनस्यासुरस्वभावशङ्कां वारयति—

**"दैवी सम्पद् विमोक्षाय, निबन्धायासुरी मता ।**
**मा शुचः सम्पदं दैवीमभिजातोऽसि पाण्डव !" ॥५॥**

अर्थः—दैवी सम्पद्=अभयं सत्त्वसंशुद्धिरित्यादिनोक्ता दैवी सम्पद्, विमोक्षाय=संसारबन्धनाद् विशेषेण पुनरावृत्तिशून्येन मोचनाय मुक्तये, ब्रह्मभावप्राप्त्यर्थम्, आसुरी सम्पत्=दम्भो दर्पोऽतिमानश्चेत्यादिनोक्ताऽसुराणां सम्पत्, निबन्धाय=नियमेन बन्धनाय नीचैर्गमनाय, मता=सम्मता वेदविदां पण्डितानाम् । पाण्डव=हे पाण्डुपुत्र ! त्वं दैवीं सम्पदं=देवानां सम्बन्धिनीं विभूतिमभिजातः=अभिलक्ष्योत्पन्नो भविष्यच्छ्रेयस्कोऽसि=भवसि, नासुरीं सम्पदम्, अतो मा शुचः=मा शोकं कृथाः, किमहं दैवसम्पदमभिजातो यद्वाऽऽसुरसम्पदमिति शङ्कया मा शोकं कार्षीरित्यर्थः ॥५॥

ननु सम्पद्द्वैविध्ये भूतसर्गेणापि देवासुरभेदाद् द्विविधेन भवितव्यम् । "त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवाः मनुष्याः असुराः" ( बृहदा० ५ । २ । १ ) इति श्रुत्या च त्रिविधो भूतसर्गः श्रूयते, अतः सम्पद्द्वैविध्योक्तिरयुक्ता ? तत्राह—

"द्वौ भूतसर्गौ लोकेऽस्मिन्, दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्तः, आसुरं पार्थ !मे शृणु" ॥६॥

अर्थः—अस्मिन्=एतस्मिन्, लोके=जगति, द्वौ=द्विसंख्याकौ द्विप्रकारौ, भूतसर्गौ=भूतानां प्राणिनां मनुष्याणां सर्गौ सृष्टी, तयोरेको दैवः=देवसम्बन्धी सर्गः, च=तथा, एव=निश्चयेनापरः आसुरः=असुरसम्बन्धी सर्गः। गुणप्रकृतिभेदात् खलु मनुष्यसर्गस्त्रेधा विभज्यते सात्त्विको राजसस्तामस इति । तत्र सत्त्वगुणप्रकृतिको मनुष्यसर्गः, सात्त्विकः, रजोगुणप्रकृतिको मनुष्यसर्गो राजसः, तमोगुणप्रकृतिको मनुष्यसर्गस्तामसः। तेषां दैवसम्पद्योगात् सात्त्विको दैवः, स एव "नवमे दैवीं प्रकृतिमाश्रितः" इत्यवाचि। आसुरसम्पद्योगाद् राजसस्तामसश्चासुरः । स एव किञ्चिदवान्तरभेदमाश्रित्य नवमे "राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रितः"इत्यभ्यधायि। द्वाभ्यामाभ्यां दैवासुरसर्गाभ्यां भिन्नो नास्ति कश्चिन्मनुष्यसर्गस्तृतीयः । "त्रयाः प्राजापत्यया:"इति श्रुतौ च दमदानदयार्हाः मनुष्याः एवाऽऽसुरप्रकृतिमाश्रितत्वादसुराः सन्तः केनचित्साधर्म्येण देवाः, मनुष्याः, असुराः इत्युपचर्यन्ते, अतो न सर्गत्रैविध्यश्रुतिविरोधेन सम्पद्द्वैविध्योक्तिरयुक्ता ।"तदद्य वाचः प्रथमं मसीय येनासुराँ अभि देवाः असाम" (ऋ० १०।५३।४) इत्यादिमन्त्रवर्णाद् "उभये वै एते प्रजापते रध्यसृज्यन्त देवाश्चासुराश्च" (तै० ब्रा० १।४।१) "ते उभये प्राजापत्याः प्रजापतेः पितुर्दायमुपेयुः" (शत० १।७।२ २२) "देवाश्च वै असुराश्चोभये प्राजापत्याः पस्पृधिरे" (शत० ११।१।८।१) इत्यादिब्राह्मणश्रुतिभ्यश्च दैवासरभेदेन मनुष्यसर्गद्वैविध्यं निश्चीयते तराम् । अतो मनुष्या एव देवाः,मनुष्या एवासुराः। सात्त्विकाः देवाः,तामसा इव राजसाश्च तमोबहुलत्वात् कतिपयवृत्तसाधर्म्येणासुराः एव, न ततो व्यतिरिच्यन्ते, इति भगवदाशयः । दैवीं प्रकृतिं श्रितानां देवानां भूतानां सर्गो दैवः, आसरीं राक्षसीं प्रकृतिं श्रितानामसुराणां भूतानां सर्गः आसुरः । तयोरुभयोर्भूतसर्गयोर्दैवः=दैवो भूतसर्गो विस्तरशः=विस्तरेण "अभयं सत्त्वसंशुद्धिः" इत्यादिना, प्रोक्तः=

प्रोदितः, प्रकथितः, आसुरम्=आसुरं भूतसर्गम् इदानीं पार्थ=हे पृथापुत्र! मे=मम वचनात् शृणु=मया विस्तरेणोच्यमानमाकर्णयेत्यर्थः ॥ ६ ॥
अथ प्रतिज्ञातमासुरं भूतसर्गं निरूपयति द्वादशभिः—

"प्रवृत्तिं च निवृत्तिं च, जनाः न विदुरासुराः ।
न शौचं नापि चाचारो, न सत्यं तेषु विद्यते" ॥७॥

अर्थः—आसुराः=आसुरीं सम्पदमभिजाताः असुराः राक्षसाः, जनाः=मनुष्याः, प्रवृत्तिं=वेदविहितेषु कर्मसु प्रवृत्तिं, च=तथा, निवृत्तिं=वेदनिषिद्धेभ्यस्तेभ्यो निवृत्तिं, च=निश्चयेन, न विदुः=न विदन्ति, यस्मिन् अभ्युदयनिश्रेयसहेतौ धर्मे प्रवर्तितव्यं, यस्मादनर्थहेतोरधर्मान्निवर्तितव्यं, तं प्रवृत्तिनिवृत्तिविषयं धर्मं चाधर्मं च न जानन्ति। न शौचं=न बाह्याभ्यन्तरं शौचं, तेषु=अमीषु मनुष्यासुरेषु विद्यते=वर्तते, च=तथाऽऽचारोऽपि=शिष्टाचारोऽपि तेषु न विद्यते, न सत्यं=यथार्थभाषणं तेषु विद्यते, येषां धर्माधर्मविषयं ज्ञानं नास्ति, न बाह्यान्तरं शौचं, न साध्वाचरणं, नापि यथार्थभाषणमस्ति, तेऽसुराः मनुष्या इत्यर्थः॥

"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत् कामहैतुकम्" ॥८॥

अर्थः—ते=अमी आसुराः जनाः, मनुष्येष्वसुराः मनुष्याः, जगत्=पूर्ववर्णितमूर्ध्वमूलाधःशाखोपशाखादिकमश्वत्थरूपं प्राण्यप्राण्यात्मकं कृत्स्नं जगद्, विश्वम्, असत्यं=न विद्यते सत्यं त्रिकालाबाध्यं परं ब्रह्म मूलं यस्य, तत् सत्यपरब्रह्ममूलरहितत्वादमूलं, मूलहीनम्, अप्रतिष्ठं=न विद्यते प्रतिष्ठा स्थितिस्थानमाधारो जीवनकाले प्रलयकाले च यस्य, तत् सत्यपरब्रह्माधाररहितत्वान्निराधारम्, अनीश्वरं=न विद्यते ईश्वरः स्वामी, नियन्ता, शासिता, शुभाशुभकर्मणामध्यक्षो यस्य, तत् निःस्वामिकं, नियन्तृवर्जितं, शासितृहीनं, कर्मफलदातृशून्यम्, आहुः=कथयन्ति, "वेनस्तत् पश्यन्निहितं गुहा सद्, यत्र विश्वं भवत्येकनीडम्" (यजु० ३२ । ८) "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद् विजिज्ञासस्व, तद् ब्रह्म" (तै० उ० ३ । १) "सन्मूलाः सोम्य !

इमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" (छां० ६ । ८ । ६) "जन्माद्यस्य यतः" (वेदा० १ । १ । २) "ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्" ( न्याय० ४ । १ । १९) इत्यादिश्रुतिस्मृतिवाक्यानि जगन्मूलप्रतिष्ठेश्वरप्रतिपादकानि कदर्थयन्ति । किञ्चापरस्परसम्भूतं=परापरशब्दावन्यशब्दपर्यायौ, अपरश्च परश्चापरस्परं स्त्रीपुरुषयोर्मिथुनं, तस्मादन्योऽन्यस्मात्, कामप्रेरितयोः स्त्रीपुरुषयोर्द्वन्द्वात् संगमात्, अनादिकालतो नैरन्तर्येण प्रवृत्तात् सम्भूतं जातं सर्वं प्राण्यात्मकं जगत्, किमन्यत्=किमाक्षेपे, तस्मादन्यदपरं कारणमीश्वरो वा, धर्माधर्माख्यमदृष्टं वा, किमस्ति, नास्ति किञ्चित्, कामहेतुकं=स्त्रीपुरुषयोः कामः-प्रजासृष्टौ राग एव, हेतुः कारणं यस्य, तत् कामहेतुकं, कामहेतुकमेव कामहैतुकं, सर्वं प्राण्यात्मकं जगन्नादृष्टहेतुकं न वेश्वरहेतुकं, किन्तु कामहेतुकमित्यर्थः ॥ ८ ॥

**"एतां दृष्टिमवष्टभ्य, नष्टात्मानोऽल्पबुद्धयः ।**
**प्रभवन्त्युग्रकर्माणः, क्षयाय जगतोऽहिताः" ॥९॥**

अर्थः—ते, इत्यनुषज्यते । एताम्=इमां प्रागुक्तां, दृष्टिं=जगदीश्वरविषयं दर्शनं निश्चयम्, अवष्टभ्य=अवलम्ब्य, आश्रित्य, ते, नष्टात्मानः=तिरोहितान्तःकरणाः मलिनचेतसः, नष्टस्तिरोहितः पापमलाच्छादित आत्मा चेतो येषामिति तद्व्युत्पत्तेः, अल्पबुद्धयः=अल्पज्ञानाः अदूरदर्शिनः, उग्रकर्माणः=क्रूरकर्माणो हिंस्राः, जगतः=जङ्गमस्य प्राणिजातस्याहिताः=शत्रवः, क्षयाय=सर्वलोकनाशाय, प्रभवन्ति=उद्भवन्तीत्यर्थः ॥ ९ ॥

**"काममाश्रित्य दुष्पूरं, दम्भमानमदान्विताः ।**
**मोहाद् गृहीत्वाऽसद्ग्राहान्, प्रवर्तन्तेऽशुचिव्रताः" ॥१०॥**

अर्थः—तेऽनुषङ्गः पूर्ववत् । दुष्पूरं=दुःखेन पूरः पूरणं यस्य, तमशक्यपूरणं, पूरयितुमशक्यं, कामं=तत्तद्विषयाभिलाषम्, आश्रित्य=अवष्टभ्य, मोहात्=अविवेकाद् भ्रमरूपात् मिथ्याप्रत्ययाद्, असद्ग्राहान्=असत्सु असमीचीनेषु शास्त्रप्रतिषिद्धेषु साधनेषु ग्राहा आग्रहाः, असाध्यसिद्धिनिश्चयाः, तान् दुराग्रहरूपान् असमीचीननिश्चयान्

गृहीत्वा=आदाय, ते, दम्भमानमदान्विताः=अधार्मिकत्वेऽप्यात्मनो धार्मिकत्वख्यापनं दम्भः, अपूज्यत्वेऽप्यात्मनि पूज्यत्वाभिनिवेशो मानः, महदवधीरणाहेतुर्धनजनविद्यादिनिमित्तो दर्पो मदः, दम्भश्च मानश्च मदश्च दम्भमानमदाः, तैर्दम्भमानमदैरन्विताः समन्विताः समनुगताः, अशुचिव्रताः=अशुचीनि अशुद्धानि मलिनानि शास्त्रप्रतिषिद्धानि अभक्ष्यभक्षणरूपाणि व्रतानि नियमाः येषां ते शास्त्रप्रतिषिद्धाभक्ष्यभक्षणनियमाः, प्रवर्तन्ते=स्वाभीष्टसिद्धहेतुत्वेनाभिमतेषु लोकशास्त्रप्रतिषिद्धेषु तेषु तेषु कर्मसु व्याप्रियन्ते इत्यर्थः ॥ १० ॥

"चिन्तामपरिमेयां च, प्रलयान्तामुपाश्रिताः।
कामोपभोगपरमा एतावदिति निश्चिताः" ॥११॥

अर्थः—च=किंच, अपरिमेयां=न परिमातुं शक्याम्, अपरिमेयविषयत्वादियत्ता यस्याः न परिमातुं शक्यते, तां विषयकृतेयत्तारहितां, प्रलयान्तां=प्रलयो मरणमन्तोऽवधिर्यस्याः, तां मरणपर्यन्तां यावज्जीवमनुवर्तमानां, चिन्ताम्=आत्मीययोगक्षेमोपायपर्यालोचनलक्षणां मुहुर्मुहुः स्मृतिम्, उपाश्रिताः=समाश्रिताः आस्थिताः, नित्यानन्तचिन्तापराः, कामोपभोगपरमाः=कामाः विषयाः, काम्यन्ते इति तद्व्युत्पत्तेः, तेषां कामानां शब्दादिविषयाणामुपभोगः प्राप्तिरनुभवः परमः सर्वोत्कृष्टो येषां, ते विषयभोगैकनिरताः, एतावदिति निश्चिताः=एतावदेव सुखं, योऽत्र कामोपभोगः, पारत्रिकं सुखं नास्ति किञ्चिदिति संजातनिश्चयाः, कृतनिश्चयाः, निश्चयवन्तस्ते आसुरा जना इत्यर्थः ॥११॥

किञ्च—

"आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।
ईहन्ते कामभोगार्थमन्यायेनार्थसञ्चयान्" ॥१२॥

अर्थः—तेऽनुषङ्गः पूर्ववत्, आशापाशशतैः=अनवगतप्राप्तिसमयार्थविषया अभिलाषाः आशाः, ता एव बन्धनहेतुत्वात् पाशा इव पाशाः, बन्धनरज्जवः, तेषां शतानि, तैर्बद्धाः=नद्धाः संयताः नियन्त्रिताः श्रेयसः प्रच्याव्येतस्ततो नीयमानाः, कामक्रोधपरायणाः=कामश्च क्रोधश्च, तौ परमयनम् आश्रयो येषां, ते कामक्रोधैकनिष्ठाः, कामक्रोध-

वशाः, ते आसुरा जनाः, कामोपभोगार्थं=विषयसुखानुभवार्थं, कामाः विषयाः, तेषामुपभोगस्तज्जनितसुखानुभवस्तदर्थमिति तद्व्युत्पत्तेः, अन्यायेन = शास्त्रविहितोपायो न्यायः, तद्विपरीतेन शास्त्रप्रतिषिद्धेनोपायेन द्यूतचौर्यादिना, अर्थसञ्चयान् = अर्थानां धनधान्यादीनामर्थनीयानां पदार्थानां वस्तूनां सञ्चयान् प्रचयान् सङ्ग्रहान्, ईहन्ते=कामयन्ते, अपेक्षन्ते, लिप्सन्ते इत्यर्थः ॥ १२ ॥

अथ तेषामासुरजनानां मनोराज्यकथनेनाज्ञानविमोहितत्वं वर्णयति—

"इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम्" ॥१३॥

अर्थः—इदम्=एतद् गोहिरण्यादिलक्षणं धनं, अद्य=अस्मिन्नहनि, मया=मयका, लब्धं=प्राप्तम्, इदम्=एतद् लब्धात् प्राप्ताद् धनादन्यत्, मनोरथं=मनोरथविषयत्वान्मनोरथं कांक्षितं विविधं धनं, प्राप्स्ये= लप्स्ये, प्राप्स्यामि। इदम्=एतद् धनमस्ति=मत्सविधे वर्तते, इदम्=एतद्, अपि=च धनं=वित्तं, पुनः=भूयो मे=मम, भविष्यति=वर्त्स्यतीत्यर्थः॥१३॥

अथ तेषां मनोराज्यान्तरमाह—

"असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी, सिद्धोऽहं बलवान् सुखी" ॥१४॥

अर्थः—असौ=सः, शत्रुः=सपत्नो मया=मयका, हतः=अघानि, च=तथाऽपरानपि=अन्यानपि, शत्रून्, सपत्नान्, हनिष्ये=मारयिष्ये। अहमीश्वरः=सर्वेषां स्वामी नियन्ता शासिताऽहम्, अहं भोगी= समस्तैर्भोगापवर्गोपकरणैरुपेतः समन्वितः, भोगाः भोगापवर्गोपकरणानि सन्त्यस्येति तद्व्युत्पत्तेः, सिद्धः=पुत्रैः पौत्रैर्भृत्यादिभिश्च सहायैः सम्पन्नः, अहं बलवान् = स्वतोऽहमोजस्वी, सुखी = नीरोगः, सर्वव्याधिरहित इत्यर्थः ॥१४॥

"आढ्योऽभिजनवानस्मि, कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्ये, इत्यज्ञानविमोहिताः" ॥१५॥

अर्थः—आढ्यः=धनी, धनधान्यसम्पन्नः, अभिजनवान्=कुलमभिजनः, तद्वान् कुलीनोऽहमस्मि=भवामि, अन्यः=अपरो मया सदृशः=समो धनेन जनेन कुलेन विद्यया च तुल्यः, कोऽस्ति=लोकेऽस्मिन् को वर्तते। यक्ष्ये=अहं यागं करिष्ये, तेनान्येभ्यो यज्ञकर्तृभ्यो महतीं प्रतिष्ठां लप्स्ये वेदिष्ये, दास्यामि=ऋत्विग्भ्यः स्तावकेभ्यश्च दक्षिणाधनं दास्यामि, वितरिष्यामि, दानेनापि सर्वानतिशयिष्ये, मोदिष्ये=मोदो हर्षस्तं सखीजनैरनुबोभूयिष्ये, अतिशयेन प्रेष्ये, इति=एवम्, अज्ञानविमोहिताः=अज्ञानमविवेकस्तेन विविधं मोहं भ्रमं, मिथ्याभिनिवेशं गमिताः प्रापिताः, इत्यर्थः ॥१५॥

अथैवम्भूता आसुरा जनाः यां गतिं प्राप्नुवन्ति, तामाह—

**"अनेकचित्तविभ्रान्ताः, मोहजालसमावृताः।**
**प्रसक्ताः कामभोगेषु, पतन्ति नरकेऽशुचौ" ॥१६॥**

अर्थः—अनेकचित्तविभ्रान्ताः=चिन्तनीयविषयाणामनेकत्वात् तद्विषयाणि चित्तान्यनेकानि तरुकप्रकारैरनैकैश्चित्तैर्मनोराज्याख्यैश्चित्तविकारैर्विभ्रान्ताः विविधं भ्रान्ताः, भ्रमं प्राप्ताः, विक्षिप्ताः, अनवस्थितचित्ताः, मोहजालसमावृताः=मोहो विपर्ययः, अकार्ये कार्यप्रत्ययः, अहिते हितप्रत्ययः, असारे सारप्रत्ययः, उपादेये हेयप्रत्ययः, इत्येवमादिविपरीतबुद्धिलक्षणोऽविद्याख्यो मिथ्याप्रत्ययः, स एव जालं, बन्धहेतुत्वात्, तेन समावृताः, सूत्रमयेन जालेन मत्स्याः इव संवेष्टिताः, तिरोहितविवेकबुद्धयः, कामभोगेषु=कामानां विषयाणां भोगेषु सेवनेषु, प्रसक्ताः=अत्यन्तासक्ताः, तत्रैव निषण्णाः, अशुचौ=अपवित्रे मलिने जुगुप्सिते, नरके=न्यरके नीचैर्गमने दुःखबहुले लोके नीचयोनौ, पतन्ति=प्रविशन्तीत्यर्थः ॥ १० ॥

ननु वेदोक्तयज्ञकर्मकर्तॄणां तेषां कथं नरके पातः ? तत्राह—

**"आत्मसम्भाविताः स्तब्धाः धनमानमदान्विताः।**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम्" ॥१७॥**

अर्थः—आत्मसम्भाविताः=आत्मना स्वेनैव सम्भाविताः सर्वगुणविशिष्टाः वयमिति जातसम्भावनाः, आत्मनैवात्मानं महान्तं

मन्यमानाः, स्तब्धाः=अनम्राः, अप्रणताः, धनमानमदान्विताः = धनानिमित्तः स्वस्मिन्नुत्कृष्टत्वाध्यारोपो मानः, तन्निमित्तो दर्पो मदः, ताभ्यां धनोत्कर्षनिमित्ताभ्यां मानमदाभ्यामन्विताः समन्विताः युक्ताः, ते=अमी आसुराः जनाः,नामयज्ञैः=नाम्ना यज्ञाः,न वस्तुतो यज्ञाः,तैः, नाममात्रस्यसम्पादकैर्वा यज्ञैः,दम्भेन=अधार्मिकत्वेऽप्यात्मनो धार्मिकत्वख्यापनेन निमित्तेन, अविधिपूर्वकं=।क्रियाविशेषणं, तत्र द्वितीया विभक्तिः, येन विधिना यज्ञो यष्टव्यः, स विधिः पूर्वमादौ विद्यते यस्य यज्ञस्य, स विधिपूर्वकः, न विधिपूर्वकोऽविधिपूर्वकः, तं विधिविहिताङ्गेतिकर्तव्यताहीनं यथा भवति तथा, यजन्ते=यजन्ति, देवतोद्देशेनाग्नावाहुतीः प्राक्षिपान्ति, ततस्ते न यज्ञकर्मफलभाजः, इति युक्तस्तेषां नरकेऽशुचौ पात इत्यर्थः ॥ १७ ॥

किञ्च—

"अहङ्कारं बलं दर्पं, कामं क्रोधं च संश्रिताः ।
मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः" ॥१८॥

अर्थः—अहङ्कारं=सर्वोत्कृष्टोऽहमित्यात्मनि स्वस्मिन् सर्वोत्कृष्टत्वाभिमानोऽहङ्कारस्तं, बलं=बलात्कारं, हठं, दर्पं=महदवधीरणाहेतुजनधनविद्यादिनिमित्तं गर्वं, कामं=विषयाभिलाषं, च=तथा, क्रोधं=कोपं, संश्रिताः=आश्रिताः आस्थिताः । आत्मपरदेहेषु=स्वदेहेषु परदेहेषु च, माम्=अन्तरात्मरूपेण वर्तमानं क्षेत्रज्ञं मामीश्वरं, प्रद्विषन्तः=प्रकर्षेणापलपन्तः, अनभ्युपगच्छन्तः, अभ्यसूयकाः= अभ्यसूयन्तः, गुणानां दोषरूपेणाविष्करणम् असूया, तां मद्विषयां विदधतः, गुणपूर्णे मयि गुणहीनतां, निर्दोषे मयि दोषान् कथयन्तः, परमनास्तिकास्ते आसुरा जना इत्यर्थः ॥१८॥

नन्वेवंभूतान् तान् किं करोषि ? तत्राह—

"तानहं द्विषतः क्रूरान्, संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु" ॥१९॥

अर्थः—अहम्=ईश्वरोऽहं, तान्=अमून्, द्विषतः=मामात्मपरदेहेषु प्रद्विषतः, क्रूरान्=क्रूरकर्मणो निर्दयान् हिंसापरान्, नराध-

मान् = नरेषु मनुष्येष्वधमान् निकृष्टान्, पुरुषापसदान्, वेदोक्तशासनातिगान्, अशुभान् = पापान्, संसारेषु=संसरणं प्रवहणं संसारः, तेषु जन्ममरणलक्षणेषु प्रवाहेषु, जनित्वा मरणेषु मृत्वा जननेषु, आसुरीषु=आसुरसम्पद्वतां मनुष्याणां सम्बन्धिनीषु योनिषु=उत्पत्तिस्थलीषु, एव=निश्चयेनाजस्रं=निरन्तरं पुनः पुनः, क्षिपामि=पातयामीत्यर्थः॥१९॥

नन्वासुरयोनिषु क्षिप्तानां पुनः किं भवति ? तत्राह—

"आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम्"॥२०॥

अर्थः—कौन्तेय=हे कुन्तीपुत्र ! मूढाः=अज्ञाः अविवेकिनस्ते जनाः, आसुरीम् = आसुरसम्पद्वतामसुराणां मनुष्याणां सम्बन्धिनीं योनिम्=उत्पत्तिभूमिम्, आपन्नाः=प्राप्ताः, जन्मनि जन्मनि=प्रत्येकस्मिन् जन्मनि, माम्=ईश्वरं माम, एव=निश्चयेनाप्राप्य=अनासाद्य, वेदोक्तं मामकप्राप्तिमार्गमनुपलभ्य, ततः = तस्मादासुरयोनेरधमां=निकृष्टां गतिं= योनिं, दारिद्र्यपूर्णां दासतनूं, यान्ति = गच्छन्ति, प्राप्नुवन्तीत्यर्थः॥२०॥

अथ विस्तरेणोक्ताया: आसुर्याः सम्पदोऽत्यन्तानिष्टहेतुत्वाद् हानाय संक्षेपमाह—

"त्रिविधं नरकस्येदं, द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभः, तस्मादेतत् त्रयं त्यजेत्॥२१॥

अर्थः—इदम्=एतत्, त्रिविधं=त्रिप्रकारं, नरकस्य=न्यरकस्य नीचैर्गमनस्य दुःखबहुलस्य निकृष्टयोने द्वारं=प्राप्तौ मार्गः, पन्थाः, उपायः साधनम्, आत्मनः=जीवात्मनः पुरुषस्य, नाशनं=नाशकारणं, पुरुषार्थायोग्यता नाशः, तस्य कारणं हेतुः। अनेन हि पुरुषो द्रागित्येव पुरुषार्थायोग्यः सम्पद्यते, पुरुषार्थायोग्यतासम्पादनमेवात्मनो नाशनम्। किं तद् ? कामः=विषयरागः, क्रोधः=कोपः, तथा लोभः=धनलिप्सा, तस्मात् = यस्मादात्मनो नाशनं नरकस्य द्वारं, तस्माद् एतद् = इदं, त्रयं=त्रितयं, त्यजेत्=उत्सृजेत्, कामादित्रयं जह्यादित्यर्थः ॥ २१ ॥

अथ कामादित्यागे फलमाह—

"एतैर्विमुक्तः कौन्तेय !, तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम्" ॥२२॥

अर्थः—कौन्तेय=हे कुन्तीपुत्र ! एतैः=एभिः पूर्वोक्तैस्त्रिभिः=त्रिसंख्याकैस्तमोद्वारैः=तमसस्तमोबहुलस्य नरकस्य नीचैर्गमनस्य नीचयोनिप्रवेशस्य द्वारैर्द्वारभूतैः साधनैः कामक्रोधलोभाख्यैः श्रेयः-साधनानुष्ठानप्रतिबन्धकैर्विमुक्तः विरहितो नरः=मनुष्यः, आत्मनः=स्वस्य, श्रेयः=श्रेयःसाधनम्, ऐहिकामुष्मिकसुखसाधनं शास्त्रविहितं लोकानुमतं स्ववर्णोचितं भक्तिपूर्वकं निष्कामं कर्माचरति=अनुतिष्ठति, ततः=तस्माच्छ्रेयःसाधनाचरणात्, पराम्=उत्कृष्टामुच्चतमां, गतिम्=ऐहिकामुष्मिकीं मुक्तिसुखस्य परांकाष्ठां,याति=गच्छति,प्राप्नोतीत्यर्थः२२

ननु मनुष्येणात्मश्रेयःसाधनं कर्मानुष्ठातव्यम्, तत् कर्म शास्त्रविहितं स्याद् अविहितं वा भवेत्, किमनेन ? तत्राह—

"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति, न सुखं न परां गतिम्"॥२३॥

अर्थः—यः=यो मनुष्यः,शास्त्रविधिं=शास्त्रम् ऋग्वेदः, शिष्यतेऽनुशिष्यतेऽनेनेति, तद्व्युत्पत्तेः, तदनुकूला च स्मृतिः " श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः । इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्" ( मनु० २ । ९ ) इति स्मरणात्, तस्य विधिं कार्याकार्यगोचरामाज्ञाम्, उत्सृज्य=परित्यज्यातिक्रम्य, कामकारतः=स्वेच्छातो वर्तते=कर्मसु प्रवर्तते, कर्माण्यनुतिष्ठति । सः=असौ मनुष्यो, न सिद्धिं=नैहिकीं पुत्रकलत्रवित्तपशुयशःप्रभृतिवाञ्छितार्थप्राप्तिं, न सुखं=न पारलौकिकं स्वर्गसुखं, न परां = प्रकृष्टां गतिं=ब्रह्मप्राप्तिलक्षणां मुक्तिम्, अवाप्नोति=प्राप्नोतीत्यर्थः ॥ २३ ॥

अथ फलितमर्थमाह—

"तस्माच्छास्त्रं प्रमाणं ते, कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं, कर्म कर्तुमिहार्हसि" ॥२४॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः ॥१६॥

अर्थः— तस्मात्=यस्माच्छास्त्रविधिमुत्सृज्य कर्मकर्तॄणां नृणामैहिकामुष्मिकं किमपि फलं न भवति, तस्मात्, कार्याकार्यव्यवस्थितौ=इदं कर्म मया कर्तव्यम्, इदं कर्म मया न कर्तव्यमित्येवं कर्मगोचरकर्तव्याकर्तव्यव्यवस्थायां, शास्त्रं=वेदस्मृत्याख्यं शास्त्रं, ते=तव प्रमाणं=प्रमितिकरणं, यथार्थज्ञानसाधनम्, अतस्त्वम्, इह=अस्मिन् मनुष्यलोके कर्मभूमौ, शास्त्रविधानोक्तं=विधानं विधिवाक्यं, विधीयतेऽनेनेति तद्व्युत्पत्तेः, तेन शास्त्रविधानेन, कुर्यान्न कुर्यादित्येवंलक्षणेन विधिवाक्येनोक्तं विहितं, कर्म=स्ववर्णोचितं कर्म, ज्ञात्वा=बुद्ध्वा, कर्तुम्=विधातुम्, अनुष्ठातुमर्हसि=योग्योऽसीत्यर्थः ॥२४॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्र-
निष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गी-
तोपनिषद्वैदिकभाष्ये षोडशोऽध्यायः ॥१६॥

---

# "अथ सप्तदशोऽध्यायः"।

षोडशाध्यायेऽन्ते शास्त्रविधिमुत्सृज्य कामकारेण कर्मकर्तॄणां तमोनिष्ठत्वात् फलाभावं भगवान् व्याकशास्त। तत्र शास्त्रविधिं परित्यज्य श्रद्धया कर्मकर्तारोऽपि विधिपरित्यागसामान्येन तमोनिष्ठत्वात् फलाभाविनः स्युः, अथवा श्रद्धायाः सत्त्वगुणकार्यत्वेन सत्त्वनिष्ठत्वाद् रजोगुणकार्यत्वेन वा रजोनिष्ठत्वात् फलभाविनो भवेयुरिति सन्दिहानोऽर्जुनः पृच्छति—

"अर्जुन उवाच"।

"ये शास्त्रविधिमुत्सृज्य, यजन्ते श्रद्धयाऽन्विताः।
तेषां निष्ठा तु का कृष्ण!, सत्त्वमाहो रजस्तमः" ॥१॥

अर्थः—कृष्ण=हे कृष्ण! ये=ये मनुष्याः, शास्त्रविधिं=

शास्त्रविधानम्, उत्सृज्य=परित्यज्य, आलस्यादिनाऽनालोच्य,श्रद्धया= आस्तिक्या बुद्ध्या, अन्विताः=समन्विताः संयुक्ताः, वृद्धव्यवहार-दर्शनमात्रेण परमश्रद्धालवः सन्तो यजन्ते=यज्ञादिकर्म कुर्वते । तेषां तु=शास्त्रविधिमुत्सृज्य कामकारेण कर्मकर्तारस्तुना व्यवच्छिद्यन्ते, अमीषां शास्त्रविधिपरित्यागेऽपि श्रद्धया कर्मकर्तॄणां, निष्ठा=स्थितिः, नितरां स्थीयतेऽस्मिन्निति तद्व्युत्पत्तेः, आश्रयः, अवस्थानभूमिः, का= किंशब्दः प्रश्ने, त्रयाणां गुणानां मध्ये को गुणोऽस्ति ? सत्त्वं=सत्त्वगुणः, रजः= रजोगुणः, आहो=किं वा, तमः=तमोगुणः । किं ते श्रद्धालवो मनुष्याः सत्त्वगुणनिष्ठत्वात् सात्त्विकाः, अथवा रजोगुणनिष्ठत्वाद् राजसाः, यद्वा तमोगुणनिष्ठत्वात् तामसाः इत्यर्थः ।

सात्त्विका दैवसर्गे, राजसास्तमसाश्चासुरसर्गेऽन्तर्भवन्तीति विवेकः ॥१॥

अथ श्रद्धाभेदेनार्जुनस्य प्रश्नमुत्तरयति भगवान्—

"श्री भगवानुवाच" ।

"त्रिविधा भवति श्रद्धा, देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव, तामसी चेति तां शृणु" ॥२॥

अर्थः—देहिनां = देहः शरीरमस्ति स्वाम्यत्वेन येषां, तेषां देहवतां मनुष्याणां, श्रद्धा=कर्मादिगोचराऽऽस्तिक्यबुद्धिस्त्रिविधा=त्रिप्रकारा भवति=जायते, वर्तते, सा=असौ श्रद्धा, स्वभावजा = स्वभावः प्राग्भवीयकर्मादिसंस्कारसहकृता त्रिगुणात्मिका प्रकृतिः, तज्जा, यया त्रिगुणात्मिकया प्रकृत्या शरीरं जन्यते, तया जनिता । सत्त्विकी= सत्त्वगुणप्रधानया प्रकृत्या तया निर्वृत्ता सात्त्विकी, च=तथा, एव= निश्चयेन, राजसी=रजोगुणप्रधानया प्रकृत्या तया निर्वृत्ता राजसी, च= तथा, तामसी=तमोगुणप्रधानया प्रकृत्या तया निर्वृत्ता तामसी, इति= एवं सा त्रिविधा, ताम्=अमूं त्रिविधां श्रद्धां, शृणु=निशामयेत्यर्थः ॥२॥

अथ श्रद्धात्रैविध्ये कारणं, श्रद्धात्रैविध्येन श्रद्धावतां मनुष्याणां च त्रैविध्यमाह—

"सत्त्वानुरूपा सर्वस्य, श्रद्धा भवति भारत ! ।
श्रद्धामयोऽयं पुरुषो, यो यच्छ्रद्धः स एव सः" ॥३॥

अर्थः—भारत=हे भरतवंशोद्भव ! सर्वस्य=कृत्स्नस्य लोकस्य, मनुष्यमात्रस्य, सत्त्वानुरूपा=प्राग्भवीयकर्मादिसंस्कारोपेतायाः सत्त्वगुणप्रधानायास्त्रिगुणात्मिकायाः प्रकृतेः परिणामविशेषत्वात् सत्त्वमन्तःकरणं, तदनुरूपा तत्सदृशी, सत्त्वगुणबहुलेऽन्तःकरणे सात्त्विकी, रजोगुणबहुले राजसी, तमोगुणबहुले तामसी, श्रद्धा=कर्मादिगोचराऽऽस्तिक्यबुद्धिर्भवति=जायते । यस्मादयम्=एष, पुरुषः=मनुष्यः, श्रद्धामयः=श्रद्धाप्रचुरः,श्रद्धाप्रधानः,तस्माद् यः=यो मनुष्यो यच्छ्रद्धः=यच्छ्रद्धावान् ,सात्त्विकराजसतामसीनां श्रद्धानां मध्ये या श्रद्धाऽस्ति विद्यतेऽस्य, सः=असौ मनुष्यः, एव=निश्चयेन, सः=तच्छ्रद्धावान्, यस्य सात्त्विकी श्रद्धा, स सात्त्विकः, यस्य राजसी श्रद्धा, स राजसः, यस्य तामसी श्रद्धा, स तामसः, इत्यर्थः ॥३॥

अथ सात्त्विकादिमनुष्याणां ज्ञानाय लिङ्गान्याह—

"यजन्ते सात्त्विका देवान्, यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये, यजन्ते तामसाः जनाः" ॥४॥

अर्थः—सात्त्विकाः = सात्त्विक्या श्रद्धया युक्ताः मनुष्याः, देवान्=देवाः मातापित्रादयः, यत्रेदमाम्नातं "देवाः ! भवत वाजिनः" (ऋ० १।२३।२)इति,तान्,यजन्ते=पूजयन्ति "मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव" (तै० उ० १।११।२) इत्यादिश्रुतेः,राजसाः=राजस्या श्रद्धयाऽन्विताः मनुष्याः,यक्षरक्षांसि=धनाधिपतयो यक्षाः,हिंसाबहुलाः क्रूरकर्माणो मनुष्याः रक्षांसि,तानि यजन्ते=पूजयन्ति । अन्ये=सात्त्विकराजसेभ्योऽपरे, तामसाः=तामसश्रद्धोपेताः, जनाः=मनुष्याः, प्रेतान्=मृतान् भूम्यन्तर्निहितान्,च=तथा,भूतगणान्=शिवपार्षद्यरूपेण कल्पितान् प्रमथाख्यान् मलिनजन्तुसङ्घान, यजन्ते=पूजयन्ति । तेऽमी मनुष्याः, देवादिपूजालिङ्गैः सात्त्विकाः,राजसास्तामसा वेति प्रतिपत्तव्या इत्यर्थः॥

अथ शास्त्रविधिमुत्सृज्य श्रद्धया यज्ञादिकर्म कुर्वाणाः राजसा वा तामसा वा सर्वे जना यथाऽऽसुरसम्पदः, तथाऽशास्त्रविहितं घोरं तपः श्रद्धया तप्यमाना जनाः अप्यासुरसम्पद इत्याह द्वाभ्याम्—

"अशास्त्रविहितं घोरं, तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः, कामरागबलान्विताः" ॥५॥
"कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं,तान् विद्ध्यासुरनिश्चयान्" ॥६॥

अर्थः—ये=यके, अचेतसः=चेतोरहिताः मूढाः अविवेकिनो जनाः=मनुष्याः, दम्भाहङ्कारसंयुक्ताः=धार्मिकत्वख्यापनं दम्भः, अभिमानोऽहङ्कारः, दम्भश्चाहङ्कारश्च,दम्भाहङ्कारौ,ताभ्यां संयुक्ताः समन्विताः, कामरागबलान्विताः=कामाः विषयाः उपभोग्याः पदार्थाः, काम्यन्ते इति तद्व्युत्पत्तेः,तेषां रागस्तदुपभोगाभिलाषः, स एव बलमत्युग्रदुःखसहनसामर्थ्यं, तेनान्विताः युक्ताः, शरीरस्थं=शरीरे देहे आरम्भकत्वेन स्थितं,शरीराकारेण परिणतं, भूतग्रामं=पृथिव्यादिभूतसमुदायं, कर्शयन्तः=कृशं कुर्वन्तः, उपवासादिना शोषयन्तः,च=तथा, एव=निश्चयेनान्तःशरीरस्थं=शरीरस्य देहस्यान्तर्मध्ये जीवात्मरूपेण तिष्ठन्तं, माम्=ईश्वरं मां, कर्शयन्तः=भोगायतनस्य शरीरस्य कृशीकरणेन कृशीकुर्वन्तः, अशास्त्रविहितं=न शास्त्रेण श्रुतिस्मृत्याख्येन विहितं, शास्त्रबाह्यं, घोरं=दारुणं, बहुपीडाकरं, तपः=शरीरशोषणलक्षणं तपः, तप्यन्ते=श्रद्धया निर्वर्तयन्ति, अनेन नो यथेष्टं भोग्याः पदार्थाः सम्पत्स्यन्ते इत्यादरबुद्ध्या कुर्वन्ति, तान्=अमून् अशास्त्रविहितं घोरं तपस्तप्यमानान् जनान्, आसुरनिश्चयान्=आसुरो निश्चयो निर्णयस्तपआदिविषयो येषां, तान् आसुरसम्पदो मनुष्यान्, मनुष्येष्वसुरान्, विद्धि=जानीहीत्यर्थः ॥५॥६॥

अथ श्रद्धावदाहारादीनां सात्त्विकादिभेदेन त्रैविध्यं वक्तुं प्रतिजानीते पुरुषभेदज्ञापनार्थं, यस्याहारः सात्त्विकः स सात्त्विकः, यस्य राजसः स राजसः, यस्य तामसः स तामस इत्येवमादिना प्रकारेण—

"आहारस्त्वपि सर्वस्य, त्रिविधो भवति प्रियः ।
यज्ञस्तपस्तथा दानं, तेषां भेदमिमं शृणु" ॥७॥

अर्थः—चार्थस्तुः, अपिना दृष्टान्तविधया श्रद्धा समुच्चीयते । तु=किञ्चाहारोऽपि=यथा श्रद्धा त्रिविधा, तथाऽऽहारोऽपि, अन्नाद्यमपि,

आह्रियतेऽद्यते इति तद्व्युत्पत्तेः, त्रिविधः=त्रिप्रकारः, सर्वस्य=कृत्स्नस्य भोक्तुर्जनस्य सात्त्विकादिभेदभिन्नस्य मनुष्यमात्रस्य, प्रियः=इष्टो भवति=अस्ति तथा=यथाऽऽहारस्तथा, यज्ञस्तपो दानं=यज्ञतपोदानानि त्रिविधानि, तेषाम्=अमीषामाहारादीनां चतुर्णाम्, इमम्=इमकं वक्ष्यमाणं भेदं=त्रेधा भेदं, शृण=मत्तः सकाशादाकर्णयेत्यर्थः ॥७॥

अथ प्रतिज्ञातानामाहारादीनां चतुर्णां पूर्वमाहारस्य भेदत्रयमाह त्रिभिः-

**"आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः । रस्याः स्निग्धाः स्थिराः हृद्याः,आहाराः सात्त्विकप्रियाः" ॥८॥**

अर्थः—आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः =आयुर्जीवितं, सत्त्वं व्यवसायो निश्चयस्तदात्मिका बुद्धिः, बलं शरीरे कार्यकरणसामर्थ्यम्, आरोग्यं नीरोगत्वं, व्याध्यभावः, सुखं=भोजनोत्तराह्लादश्चित्तप्रसादस्तृप्तिः, प्रीतिः=अभिरुचिः, तासां विवर्धनाः विशेषेण वर्धकाः वृद्धिहेतवः । रस्याः=रसयितव्याः, आस्वाद्याः, सरसाः, मधुररसप्रधानाः, स्निग्धाः=सहजेनागन्तुकेन वा स्नेहेन युक्ताः, घृततैलमेदसोपेताः, स्थिराः=रसाद्यंशेन शरीरे चिरकालस्थायिनः, चिरतरशरीरोपकारहेतवः, हृद्याः=हृदयंगमाः मनोरमाः, दुर्गन्धादिदृष्टादृष्टदोषशून्याः, एवंविधाः आहाराः=भक्ष्यभोज्यादिलक्षणाः भोजनविशेषाः,सात्त्विकप्रियाः=सात्त्विकानां प्रिया वाञ्छिताः भवन्ति,येषां मनुष्याणामेवम्भूताः आहारास्ते सात्त्विकाः मनुष्या इत्यर्थः ॥८॥

**"कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः । अहाराः राजसस्येष्टाः, दुःखशोकामयप्रदाः" ॥९॥**

अर्थः—कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः =कटवः-कटुरसाः, निम्बरसतुल्यरसाः, अम्लाः-अम्लरसाः, जम्बीररसतुल्यरसाः, लवणाः-लवणोत्कटाः, क्षारबहुलाः, अत्युष्णाः=अतिखराः अत्यन्तोष्णस्पर्शाः, स्पर्शमात्रेण मुखादिदाहकाः, तीक्ष्णाः=बहुमरीचाः,रूक्षाः निःस्नेहाः, विदाहिनः=राजिकादिबहुलाः, कण्ठोदरविदाहकाः, दुःखशोकामयप्रदाः=दुःखं तात्कालिकी पीडा, शोको दौर्मनस्यम्, आमयो

रोगः, तेषां प्रदातारः, आहाराः, राजसस्य=राजसमनुष्यवृन्दस्येष्टाः= प्रियाः भवन्ति, येषां मनुष्याणामित्थंभूताः आहाराः अन्नाद्यभेदास्तेऽमी राजसाः मनुष्या इत्यर्थः ॥९॥

"यातयामं गतरसं, पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं, भोजनं तामसप्रियम्" ॥१०॥

अर्थः—यातयामं=यातो गतो यामः प्रहरो यस्य पक्वस्य सतो भोजनस्योदनादेः, तत् यामान्तरितपाकं, भृशं शैत्यं प्राप्तं, गतरसं= गतो यातो रसः स्वाभाविको रसो यस्य, तत् रसवियुक्तम्, अन्यथा-जातरसं, पूति=दुर्गन्धं, च=तथा, यत् पर्युषितं=पूर्वेद्युः पक्वं, पक्वं सद्रात्र्यन्तरितम् । उच्छिष्टमपि=यातयामत्वाद्यभावेऽप्यन्यभुक्तावशिष्टं, च=तथाऽमेध्यम्=अपवित्रं, मलिनम्, अभक्ष्यं गोमांसं, भोजनम्= आहारस्तामसप्रियं=तामसानां नृणामिष्टं प्रियं, येषां मनुष्याणामेवं-प्रकारकं भोजनं, ते तामसाः मनुष्या इत्यर्थः ॥१०॥

अथ यज्ञत्रैविध्यमाह त्रिभिः—

"अफलाकांक्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्त्विकः" ॥११॥

अर्थः—अफलाकाङ्क्षिभिः=फलस्यैहिकामुष्मिकपदार्थस्याकां-क्षाऽस्ति येषां, ते फलाकांक्षिणः, न फलाकांक्षिणोऽफलाकांक्षिणः, तैः फलाकांक्षाविरहितैर्निष्कामैर्मनुष्यैः, यष्टव्यमेव=अनुष्ठातव्यमेवास्माकं, नानेनान्यत् किञ्चित् फमस्माभिःसाधनीयम्, इति=एवं, मनः=चेतश्चित्तं, समाधाय=निश्चलं विधाय, यो विधिदृष्टः=विधिना ज्ञातः, शास्त्र-विधिना विहितः, यज्ञः=दर्शपूर्णमासचातुर्मास्यपशुबन्धज्योतिष्टोमादि-नामको यज्ञः, इज्यते=अनुष्ठीयते, क्रियते, सः=असौ यज्ञः, सात्त्विकः= सात्त्विको वेदितव्य इत्यर्थः ॥११॥

"अभिसन्धाय तु फलं, दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम्" ॥१२॥

अर्थः—चार्थस्तु:,वार्थोऽपि:,=किञ्च,भरतश्रेष्ठ=हे भरतवंशोत्कृष्ट!, फलं=दृष्टमदृष्टं वा किञ्चित् फलम्, अभिसन्धाय=उद्दिश्य, च=तथा, एव=निश्चयेन, दम्भार्थमपि=स्वस्य धार्मिकत्वख्यापनार्थं वा,यद् =यद् यजनं, यज्ञाख्यं कर्म, इज्यते=क्रियते, तम्=अमुम्, यज्ञं =यजनं,राजसं विद्धि=जानीहीत्यर्थः ॥ १२ ॥

अथ तामसं यज्ञमाह—

"विधिहीनमसृष्टान्नं, मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं, तामसं परिचक्षते" ॥१३॥

अर्थः—विधिहीनं=शास्त्रविधिशून्यं,न जातु शास्त्रेण विहितम्, असृष्टान्नम्=अदत्तान्नं,यज्ञियदेवताभ्यो देयं चरुपुरोडाशादिलक्षणं यदन्नं, तद् यथाविधि यस्मिन् यज्ञे न दत्तम् , न सृष्टं विसृष्टं,यथाविधि न दत्त चरुपुरोडाशादिरूपमन्नं यस्मिन्निति तद्व्युत्पत्तेः, मन्त्रहीनं=याज्या-पुरोऽनुक्याादिमन्त्रैरुज्झितम्, अदक्षिणं=दक्षिणारहितं,श्रद्धाविरहितं= श्रद्धावर्जितं, यज्ञं=कृतं यज्ञं,तामसं=तामसाभिधं, परिचक्षते=परिब्रुवते वेदवादिनः शिष्टा इत्यर्थः ॥ १३ ॥

अथ क्रमप्राप्तस्य तपसः सात्त्विकादिभेदानाख्यातुं प्रथमं तस्य शारीरा-दिभेदेन त्रैविध्यमाह त्रिभिः—

"देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च, शारीरं तप उच्यते" ॥१४॥

अर्थः—देवद्विजगुरुप्राज्ञपूजनं=देवाः मातापित्रादयः, द्विजाः वेदविदो ब्राह्मणाः क्षत्रियाः वैश्याः, गुरवः = धनजनशासनादिना केनाचित् निमित्तेन गौरवं प्राप्ता महान्तो जनाः, प्राज्ञाः विदितवेदित-व्यास्तत्त्वविदो दूरदर्शिनो मनुष्याः, तेषां देवद्विजगुरुप्राज्ञानां पूजनं प्रणामोत्थानप्रत्युत्थानादिना सत्करणं, शौचं=शरीरशुद्धिः, आर्जवं= सरलता, विहिते प्रवृत्तौ प्रतिषिद्धाच्च निवृत्तौ समानरूपता। ब्रह्मचर्यम्= ऋतुकालाभिगामित्वं, निषिद्धमैथुननिवृत्तिश्च, च=तथा, अहिंसा= अशास्त्रीयप्राणिपीडावर्जनम्, एतद् शारीरं=शरीरेण निर्वर्त्यं तपः= तपनम्, उच्यते=कथ्यते इत्यर्थः ॥ १४ ॥

"अनुद्वेगकरं वाक्यं, सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव, वाङ्मयं तप उच्यते" ॥१५॥

अर्थः=अनुद्वेगकरं=नोद्वेगं भयं करोति जनयति परस्य यत्, तत् परातङ्कजनकम्, अपरुषं, सत्यम्=अबाधितार्थं, च=तथा, प्रियहितं=प्रियं च हितं च, सुश्राव्यं, श्रवणे मनःश्रोत्रयोरानन्दकरं प्रियं, परिणामे सुखकरं हितम्, इत्थम्भूतं यद् वाक्यं=वचनं, कथनं, च=तथा, एव=निश्चयेन, स्वाध्यायाभ्यसनं=स्वाध्यायः स्वधर्मपुस्तकं, तस्य ऋग्वेदस्याभ्यसनं प्रतिदिनं पठनं, वाङ्मयं=वाक्प्रधानं, वाचा निर्वर्त्यं, तपः=तपनम्, उच्यते=कथ्यते इत्यर्थः ॥ १५ ॥

"मनःप्रसादः सौम्यत्वं, मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत् तपो मानसमुच्यते" ॥१६॥

अर्थः—मनः प्रसादः=मनसश्चित्तस्य प्रसन्नता निर्मलता, रागद्वेषादिमलरहितता, स्वस्थता, सौम्यत्वम्=अक्रूरत्वं, मौनं=मनोराज्यवर्जनम्, आत्मविनिग्रहः=आत्मनो मनसोऽन्तःकरणस्य विशेषेण निग्रहो निरोधः, प्रतिषिद्धेभ्यो विषयेभ्यः प्रत्याहारः, भावसंशुद्धिः=भावस्य मनसोऽन्तःकरणस्य 'भाव्यते चिन्त्यतेऽर्थोऽनेनेति तद्व्युत्पत्तेः, संशुद्धिः परैर्व्यवहारकाले छलकपटादिराहित्यम्, इति=एवंप्रकारम्, एतद्=इदं सर्वं, मानसं=मनसा निर्वर्त्यं, तपः=तपनम्, उच्यते=कथ्यते इत्यर्थः ॥१६॥

अथ शारीरादिभेदेनोक्तस्य त्रिविधस्य तपसः पुनः सात्त्विकादिभेदेन त्रैविध्यमाह त्रिभिः—

"श्रद्धया परया तप्तं, तपस्तत् त्रिविधं नरैः ।
अफलाकांक्षिभिर्युक्तैः, सात्त्विकं परिचक्षते" ॥१७॥

अर्थः—तत्=अदः पूर्वोक्तं, त्रिविधं=शारीरादिभेदेन त्रिप्रकारकं, तपः=तपनं, अफलाकांक्षिभिः=फलाकांक्षारहितैः, युक्तैः=कर्मयोगयुक्तैः, सिद्धसिद्ध्योः समैर्निर्विकारैर्हर्षग्लानिवर्जितैर्नरैः = मनुष्यैः, परया=प्रकृष्टया, निश्चलया, श्रद्धया = आस्तिक्यबुद्ध्या, तप्तम्= अनुष्ठितं, सात्त्विकं परिचक्षते=व्याचक्षते, अभिदधते वेदविदस्तपस्विन इत्यर्थः ॥ १७ ॥

"सत्कारमानपूजार्थं, तपो दम्भेन चैव यत्।
क्रियते तदिह प्रोक्तं, राजसं चलमध्रुवम्" ॥१८॥

अर्थः—यत् तपः, सत्कारमानपूजार्थं=सत्कारः समीचीनस्तपस्वीति वाक्प्रशंसात्मकः साधुकारः,मानो माननम्, उत्थानाभिवादनादिव्यंग्यो मानसादरः, पूजा पादप्रक्षालनार्चनाशायितृत्वधनदानादिः, तदर्थं, सत्कारमानपूजाप्रयोजनकं, च=तथा, एव=निश्चयेन, दम्भेन=आत्ममहत्त्वप्रदर्शनेनार्थेन,यत् तपः क्रियते=विधीयते,तप्यते,तत्=तत् तपः, इह=अस्मिन् लोके, राजसं=राजसनाम्ना, प्रोक्तं = प्रोदितं, चलं= राजसत्वेऽपि चलं चञ्चलं क्षणिकम्, ऐहिकमात्रफलं, तत्राप्यध्रुवम्= अनिश्चितम्, इहापि न निश्चितफलं, स्यादिह फलं, न वा स्यादिति निश्चयवर्जितं, प्रोक्तं शिष्टैर्वेदविद्भिरित्यर्थः ॥१८॥

"मूढग्राहेणात्मनो यत् पीडया क्रियते तपः।
परस्योत्सादनार्थं वा, तत् तामसमुदाहृतम्" ॥१९॥

अर्थः—मूढग्राहेण=मूढाः अज्ञाः अविवेकिनः, तेषां ग्राह आग्रहोऽभिनिवेशस्तेनाविवेकपूर्वकेण दुराग्रहेणात्मनः=शरीरस्य देहस्य,पीडया= उपवासादिदुःखेन, यत्=यकत्, तपः=तपनं क्रियते=विधीयते, तप्यते, वा=अथवा परस्य=शत्रोरुत्सादनार्थं=विनाशार्थं, परोत्सादनोद्देशेन यत् तपः क्रियते, तत्=तत् तपस्तामसम्, उदाहृतं = कथितमित्यर्थः ॥१९॥

अथ क्रमप्राप्तस्य दानस्य सात्त्विकादिभेदत्रयमाह त्रिभिः—

"दातव्यमिति यद् दानं, दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद् दानं,सात्त्विकं स्मृतम्" ॥२०

अर्थः—दातव्यम्=अस्माभिर्देयमिति=एवम्भूतयाऽऽस्तिक्यबुद्धया यद् दानं=देयवस्तुसमपर्णम्,अनुपकारिणे=प्रत्युपकारः उपकारः, स न विद्यते यस्यासावनुपकारी, तस्मै प्रत्युपकाराकर्त्रे, मामयमुपकरिष्यति कदाचिदित्युद्देशाविषयाय पात्राय, दीयते=देयं वस्तु समर्प्यते, देशे= यस्मिन् देशेऽवश्यदातव्यं, तस्मिन् देशे, च=तथा, काले=यस्मिन् कालेऽवश्यदातव्यं तस्मिन् काले, च=तथा, पात्रे=दानयोग्ये मनुष्ये,

यद् दानं=देयवस्तुसमर्पणं, तद् दानं सात्त्विकं स्मृतं=भाषितं, मुनिभिर्वेदार्थचिन्तकैरित्यर्थः ॥२०॥

अथ राजसं दानमाह—

**"यत्तु प्रत्युपकारार्थं, फलमुद्दिश्य वा पुनः ।**
**दीयते च परिक्लिष्टं, तद् राजसमुदाहृतम्" ॥२१॥**

अर्थः—तुना पूर्वदानतोऽस्य वैलक्षण्यं द्योत्यते, यत्=यकत् दानं, प्रत्युपकारार्थं=कालान्तरेऽयं मामुपकरिष्यतीत्यवमर्थं, वा=अथवा, पुनः=यत् पुनर्दानं, यच्च दानं, फलं=दृष्टमदृष्टं वा किञ्चित् फलम्, उद्दिश्य=अभिसन्धाय, च=तथा, परिक्लिष्टं=कथमेतावद् व्ययितव्यमिति चित्तक्लेशयुक्तं, यथा भवति तथा, दीयते=विधीयते, तत्=तद् दानं, राजसमुदाहृतं=व्याहृतं, स्मृतमित्यर्थः ॥ २१ ॥

अथ तामसं दानमाह—

**"अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।**
**"असत्कृतमवज्ञातं, तत् तामसमुदाहृतम्" ॥२२॥**

अर्थः—यद् दानम्, अदेशकाले=द्वन्द्वैकवद्भावः, न देयं यस्मिन् देशे, न देयं यस्मिन् काले, तस्मिन् दानानर्हे देशे, दानानर्हे च काले, च=तथा, अपात्रेभ्यः=न सन्ति दानपात्राणि यानि, तेभ्योऽयोग्येभ्यो मनुष्येभ्योऽसत्कृतं=प्रियभाषणादिसत्कारशून्यम्, अवज्ञातं=तिरस्कारोऽवज्ञा, तदुपेतं यथा भवति तथा, दीयते=क्रियते, तत् =तद्दानं, तामसमुदाहृतं=कथितमित्यर्थः ॥२२॥

आहारतपोदानयज्ञानां प्रत्येकं सात्त्विकादिभेदत्रयमुदाजहार, सात्त्विकानामुपादानार्थं, राजसानां तामसानां च परिहानार्थम्। अथ सात्त्विकानां तेषामुपादानत्वे हेतुमीश्वराज्ञारूपत्वलक्षणं शास्त्रविहितत्वं व्याजिहीर्षुराह—

**"ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ।**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा" ॥२३॥**

अर्थः—ब्रह्मणः=परब्रह्मणः ईश्वरस्य परमात्मनो निर्देशः=अभिधानशब्दः, निर्दिश्यतेऽभिधीयतेऽनेनेति तद्व्युत्पत्तेः, संज्ञाशब्दो

नामेत्येतत्, ओं तत् सदिति=ओमिति, तदिति, सदिति, एवं त्रिविधः= त्रिप्रकारः, स्मृतः = चिन्तितः "ओं क्रतो ! स्मर" (ईशा० १७) "ओमिति ब्रह्म" (तै० उ० १।८) "तदिति वा एतस्य महतो भूतस्य नाम भवति" (ऐ० आ० ३।३।१९) "वेनस्तत् पश्यत् निहितं गुहा सद्" (यजु० ३२।८) "सदेव सोम्येदमग्र आसीत्" (छां० ६।२।१) "सन्मूलाः सोम्येमाः सर्वाः प्रजाः" (छां० ६।८।६) इत्यादिश्रुतिवाक्येषु कथितः। तेन=यस्य परस्य ब्रह्मणः परमात्मन ईश्वरस्य ओं तत् सदिति त्रिविधो वाचकः शब्दः, तेन ब्रह्मणा, पुरा=पूर्वं, भूतसर्गारम्भे, ब्राह्मणाः = मानुषा इति प्रयोक्तव्ये वेदवेदनाध्ययनवतामेव वेदविहितेषु यज्ञादिकर्मस्वधिकार इति बोधनार्थं ब्राह्मणा इति प्रायुङ्क्त, ब्रह्मणो वेदस्य वेत्तारोऽध्येतारो यज्ञादिकर्माधिकारिणो मनुष्याः, च= तथा, वेदाः = यज्ञादिकर्मविधायकाः ऋग्यजुःसामनामानस्त्रिविधाः वेदमन्त्राः, यत्रेदमाम्नायते "तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे। छन्दांसि यज्ञिरे तस्माद् यजुस्तस्मादजायत" (ऋ० १०। ९०।९) इति। "अहेर्बुध्निय ! मन्त्रं मे गोपाय, यमृषयस्त्रयीविदो विदुः। ऋचो यजूंषि सामानि, सा हि श्रीरमृता सताम्" (तै० ब्रा० १।२१) इति च। च=तथा, यज्ञाः=अग्निहोत्रमुखाः यज्ञाः "गोमां अग्ने ! अविमां अश्वी यज्ञो नृवत्सखा सदमिदप्रमृष्यः। इलावां एषो असुर ! प्रजावान् दीर्घोरयिः पृथुबुध्नः सभावान्" (ऋ० ४।२।५) "यज्ञो वै श्रेष्ठतमं कर्म तस्मान्मनुष्येभ्यो यज्ञं प्राह" (गो० उ० २।१३) "यज्ञमुखं वै अग्निहोत्रम्" (तै० सं० १।६।१०) इत्यादिश्रुतिवाक्येभ्यः, यज्ञग्रहणेनात्र तपोदाने अपि गृह्येते "यज्ञदानतपःक्रियाः" इत्यग्रिमे श्लोके तयोर्ग्रहणात् "तपसा युजा विजहि शत्रून्" (ऋ० १०।८३।३) "तपसा वै लोकं जयन्ति" (शत० ३।४।४।२७) "पृणीयादिन्नाधमानाय तव्यान्" (ऋ० १०।११३।५) इत्यादिश्रुतिवाक्यानि चात्र प्रमाणानि द्रष्टव्यानि, तेन यज्ञाः = तपोदानयज्ञाः, इतीह विवक्षितं वेदितव्यम्। आहारास्तु स्वास्थ्यहेतुत्वाद् दृष्टार्थाः, नादृष्टार्थाः, यथा

तपोदानयज्ञाः, ते चाहाराः सात्त्विका एव प्रायेण वेदविद्भिरुपादीयन्ते न राजसाः न तामसा इत्यग्रिमे श्लोके न तानग्रहीष्ट, विहिताः=व्यधायिषत, ब्रह्मणा तेन निरमायिषतेत्यर्थः ॥ २३ ॥

अथात्र सदाचारं प्रमाणयति—

"तस्मादोमित्युदाहृत्य, यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः, सततं ब्रह्मवादिनाम्" ॥२४॥

अर्थः—तस्मात्=यस्माद् ब्रह्मणा परमात्मना ईश्वरेण पुरा ब्राह्मणाः वेदाः यज्ञाश्च विहिताः, तस्मादेव हेतोर्ब्रह्मवादिनाम्=अस्ति ब्रह्म जगज्जन्मादिहेतुरीश्वरः, सर्वेषां कर्मणामध्यक्षः, फलप्रदा सर्वभूतान्तरात्मा, अस्ति परलोकः, यत्रेह निर्वर्तितं पुण्यं पापं कर्म भुज्यते मनुष्यैरिति वदनशीलानामीश्वरवादिनामास्तिकानां, विधानोक्ताः=वेदविधानोक्ताः, वेदविहिताः, यज्ञदानतपःक्रियाः=यज्ञदानतपोरूपाः क्रियाः, यज्ञदानतपांसि कर्माणि, ओमिति=ओमित्येतद् ब्रह्मणः परमेश्वरस्य नामोदाहृत्य=उच्चार्य, यत्रेदं श्रूयते "ओमिति ब्रह्मा प्रसौति, ओमित्यग्निहोत्रमनुजानाति, ओमिति ब्राह्मणः प्रवक्ष्यन्नाह" (तै० उ० १ । ८) इति, सततं=सर्वदा, प्रवर्तन्ते=अनुष्ठीयन्ते इत्यर्थः ॥ २४ ॥

अथोङ्कारस्य ब्रह्मनाम्नो वेदविहितासु यज्ञदानतपःक्रियासु सदाचारमुखेनान्वयं प्रदर्श्य तदिति ब्रह्मनाम्नोऽन्वयं तत्र प्रदर्शयति—

"तदित्यनभिसन्धाय फलं यज्ञतपःक्रियाः ।
दानक्रियाश्च विविधाः, क्रियन्ते मोक्षकांक्षिभिः ॥२५॥

अर्थः—उदाहृत्येति पदमनुषज्यते । मोक्षकांक्षिभिः=मोक्षस्यैहिकामुष्मिकाद् दुःखादात्मनो मोचनस्य, कांक्षाऽर्थोऽस्ति येषां, तैर्मोक्षार्थिभिर्मुमुक्षुभिः, फलं=दृष्टमदृष्टं किमपि फलम्, अनभिसन्धाय=अनुद्दिश्य, यज्ञतपःक्रियाः=यज्ञरूपाः क्रियाः, यज्ञाः, तपोरूपाः क्रियाः, तपांसि, च=तथा, विविधाः=नानाविधाः, दानक्रियाः=दानरूपाः क्रियाः, दानानि कर्माणि, तदिति=ब्रह्मणस्तदिति नामोदाहृत्य, यदहं यज्ञादिक्रियाजातं करोमि, तेन तत् प्रीयताम्, इत्येवं प्रतिक्रियं ब्रह्मणस्तदिति नामोच्चार्य, क्रियन्ते=निर्वर्त्यन्ते, अनुष्ठीयन्ते, इत्यर्थः ॥ २५ ॥

अथ तृतीयस्य सदिति ब्रह्मनाम्नः सर्वासु यज्ञदानतपःक्रियास्वन्वयं प्रदर्शनार्थमादौ तत्प्रयोगविषयमाह द्वाभ्याम्—

**"सद्भावे साधुभावे च, सदित्येतत् प्रयुज्यते।**
**प्रशस्ते कर्मणि तथा, सच्छब्दः पार्थ! युज्यते" ॥२६॥**

अर्थः—पार्थ=हे पृथापुत्र! सदित्येतद्=ब्रह्मणः सदित्येतद-भिधानपदं, सद्भावे=सत्तायाम्, अस्तित्वे, विद्यमानतायाम्, ब्रह्मास्ति, परलोकोऽस्तीत्येवं विद्यमानतार्थे, च=तथा, साधुभावे=साधुभावः साधुत्वं सद्वृत्तता, तस्मिन्, सन्नयं श्रेष्ठोऽयमित्यस्मिन्नर्थे, प्रयुज्यते= शिष्टैरुच्चार्यते। तथा प्रशस्ते=माङ्गलिके, अप्रतिबन्धेनाशुसुखजनके, कर्मणि = विवाहादिकर्मणि, सच्छब्दः = सदित्येषोऽभिधानशब्दो युज्यते=प्रयुज्यते, महद्भिरुच्चार्यते इत्यर्थः ॥२६॥

**"यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते।**
**कर्म चैव तदर्थीयं, सदित्येवाभिधीयते" ॥२७॥**

अर्थः—च=किञ्च, यज्ञे=वेदविहिते यज्ञे कर्मणि, तपसि= तपःकर्मणि, च=तथा, दाने=दानकर्मणि, स्थितिः=या कर्तव्यबुद्ध्या तत्परत्वेनावस्थितिर्निष्ठा, सा सदिति=सदितिशब्दवाच्या, उच्यते= कथ्यते, समीचीनेयं स्थितिरित्येवमभिधीयते वेदविद्भिः। च=तथा, एव= निश्चयेन, तदर्थीयं=तदा यज्ञदानतपांसि परामृश्यन्ते, तानि अर्थः प्रयोजनं फलं यस्य कर्मणः, तत् तदर्थं, तदर्थमेव तदर्थीयं यज्ञदानतपः- संसिद्धिप्रयोजनकं, यत् कर्म=विद्याधनोपार्जनादिनानाविधं न्याय्यं कर्म, तदपि कर्म, सदित्येव=प्रशस्तं, समीचीनमित्येवं सच्छब्दवाच्यमेव, नत्वसच्छब्दवाच्यमित्यवधारणार्थः, अभिधीयते=कथ्यते, इत्यर्थः ॥२७॥

अथ वेदविहितत्वेनेश्वराज्ञारूपतया सदपि, सफलमपि, यज्ञ- दानतपःकर्म, चेच्छ्रद्धया न क्रियते, तदा तदसत्, तन्निष्फलं, सर्वथा सर्वत्रेत्याह श्रद्धाया तत्र प्रधानाङ्गतावगत्यर्थम्—

**"अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत्।**
**असदित्युच्यते पार्थ!, न च तत् प्रेत्य नो इह" ॥२८॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः ॥१७॥

अर्थः- पार्थ=हे पृथापुत्र ! अश्रद्धया=न श्रद्धया, विना श्रद्धया,श्रद्धामन्तरेण हुतं=हवनं कृतम् अग्निहोत्रादिकर्मानुष्ठितं, दत्तं=दानं कृतं, तपः=शारीरादितपस्तप्तं=सन्तप्तं निर्वर्तितं, च=तथा, यत्=अन्यद् यत् कर्म, कृतं=विहितम् अनुष्ठितं,तत् सर्वम्,असदिति=न सदिति,प्रधानाङ्गभूतायाः श्रद्धाया अभावात् न समीचीनं,न प्रशस्तमित्युच्यते=भाष्यते,तद्=यदश्रद्धया हुतं, दत्तं, तप्तं, कृतं, तत्,न च=नैव, प्रेत्य=मृत्वा, परलोके, नो=नैव,इह=अस्मिल्लोके फलाय कल्पते । यद् ब्रह्म विश्वस्य जगद्वृक्षस्य मूलं,विश्वस्य जगतो जन्मस्थितिप्रलयकारणं, यस्य विश्वं जगत् स्वरूपं,यत् सर्वस्मिन् वस्तुनि बहिरन्तर्व्याप्य स्थितं, सर्वभूतान्तरात्मा,सर्वस्येश्वरो नियन्ता,यस्योंतत्सदिति त्रिविधं नाम,येन यज्ञादिकर्मणामनुष्ठानाय ब्राह्मणाः क्षत्रियाः वैश्याः शूद्राः उदपादिषत, यज्ञादीनि कर्माणि, तद्विधायकास्त्रिविधाः मन्त्राश्चोदभाविषत, तेन ब्रह्मणाऽऽज्ञापितं वेदविहितं यज्ञादि निखिलं कर्म, फलमनभिसन्धाय, केवलया, कर्तव्यबुद्ध्या; परया च श्रद्धया, ब्राह्मणक्षत्रियाविट्शूद्राणां सर्वेषां मनुष्याणां यावज्जीवमनुष्ठातव्यम् । यज्ञादिकर्मणामिव श्राद्धाया अपि तदङ्गत्वेन विहितत्वात् । यत्रैतदाम्नायते "श्रद्धयाऽग्निः समिध्यते,श्रद्धया हूयते हविः। श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि" (ऋ०१०।१५१।१) इति । तस्माद् वेदोक्तं यज्ञादि कर्म कुर्वद्भिः सर्वदा श्रद्धयैव कर्तव्यं, नाश्रद्धया क्वचित् कदाचिदित्यर्थः ॥२८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्ये सप्तदशोऽध्यायः ॥१७॥

———

# "अथाष्टादशोऽध्यायः" ।

समाप्तो गीतार्थो ब्रह्मज्ञानपूर्वकं भक्त्याऽनन्यया श्रद्धया च परया, वेदोक्तं निखिलं कर्मात्मजातिदेशोन्नतिकारणं सर्वशिष्टाविगीतं फलमनभिसन्धाय केवलया कर्तव्यबुद्धया यावज्जीवं निर्वर्तयितव्यमिति । सोऽयं गीतार्थोऽर्जुनस्य सम्यक् निश्चयार्थं, दार्ढ्येण ग्रहणार्थं च, पुनः संक्षेपेण निरूपयितव्यः, सर्वेषां लोकानां कल्याणस्य च हेतोः । नहि सम्यङ्-निश्चयाभावे दार्ढ्येण ग्रहणाभावे चार्जुनो वा लोको वा कश्चिदभ्युदयनिश्रेयसफलके साक्षाद्भगवता वेदेनोक्ते गीतार्थेऽस्मिन् कर्मयोगे सहसा प्रवर्तितुमुत्सहते, सम्यङ्निश्चिते दार्ढ्येण गृहीते च तस्मिन्, सर्वोऽपि निःशङ्कं प्रवर्तिष्यते, इति तस्य पुनः संक्षेपेण निरूपणार्थम् एषोऽष्टादशोऽध्यायः आरभ्यते । तत्र प्रचलितौ संन्यासत्यागशब्दार्थौ गीतार्थे कर्मयोगे प्रवृत्तौ भूरि प्रतिबन्धकौ, इति तावेवादौ पृथक्त्वेन प्रतिपित्सुरर्जुनः प्रश्नयति—

"अर्जुन उवाच" ।

**"संन्यासस्य महाबाहो !, तत्त्वमिच्छामि वेदितुम् !**
**त्यागस्य च हृषीकेश !, पृथक् केशिनिषूदन !" ॥१॥**

अर्थः—महाबाहो=हे महाभुज ! संन्यासस्य=संन्यासशब्दार्थस्य, तत्त्वं=याथार्थ्यं, संन्यासशब्दो यमर्थमाह, तस्य यथार्थं रूपं, वेदितुं=ज्ञातुमिच्छामि = कांक्षामि । च=तथा, हृषीकेश = हे जितेन्द्रिय !, केषिनिषूदन=हे केशिनामकासुरमर्दन !, त्यागस्य = त्यागशब्दार्थस्य, तत्त्वं=याथार्थ्यं, यमर्थं त्यागशब्दः आह, तस्य यथार्थं रूपं, पृथक्= संन्यासात् पृथक्त्वेन भेदेन वेदितुमिच्छामि=वाञ्छामि । संन्यासत्यागशब्दौ किमभिन्नार्थौ, उत भिन्नार्थौ ? चेदभिन्नार्थौ ? तदा कोऽसावर्थः, यमुभौ तौ ब्रूतः । यदि भिन्नार्थौ ? तदाऽन्योऽन्यतो भेदेन तदर्थौ वक्तव्यौ, संन्यासशब्दस्यायमर्थः, त्यागशब्दस्य चायमर्थः, तमहं परस्परतो विभागेन भेदेन विविदिषामि, ज्ञीप्सामि प्रतिपित्से इत्यर्थः ॥१॥

अथार्जुनस्य प्रश्नमुत्तरयति—

"श्रीभगवानुवाच"

"काम्यानां कर्मणां न्यासं, संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः" ॥२॥

अर्थः—कवयः=क्रान्तदर्शिनो वेदविद्वांसः "ये वै अनूचानास्ते कवयः" ( ऐ० ब्रा० २ । २ ) इत्यादिश्रुतेः, काम्यानां=" स्वर्गकामो यजेत, पशुकामो यजेत " इत्येवं कामोपबन्धेन चोदितानाम्, ऐहिकामुष्मिकफलसम्बन्धेन विहितानां, कर्मणाम्=अग्निहोत्रदर्शपूर्णमासप्रभृतिकर्मणां, लौकिकानां च फलकामनया क्रियमाणानां सर्वेषां काम्यकर्मणां, न्यासं=स्वरूपतः परित्यागं, संन्यासं=संन्यासशब्दार्थं, विदुः=जानन्ति, प्रतियन्ति । विचक्षणाः=विशिष्टदृष्टयो दूरदर्शिनः पण्डिताः,सर्वकर्मफलत्यागं=सर्वेषां नित्यनैमित्तिकानामनुष्ठीयमानानां कर्मणामात्मसम्बन्धितया प्राप्तस्य फलस्य परित्यागं,त्यागं=त्यागशब्दार्थं प्राहुः=प्रब्रुवन्ति, कथयन्ति । काम्यानां कर्मणां स्वरूपतः परित्यागोऽननुष्ठानं संन्यासः, नित्यानां नैमित्तिकानां च सर्वेषां कर्मणां फलस्य परित्यागस्त्यागो, न स्वरूपेण तेषां परित्यागस्त्याग इत्यर्थः ॥२॥

अथास्मिन् कर्मत्यागे मतान्तरमुपन्यस्यति—

"त्याज्यं दोषवदित्येके, कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म, न त्याज्यमिति चापरे" ॥३॥

अर्थः—एके=केचिदेके,मनीषिणः=मनीषा सूक्ष्मा बुद्धिरस्त्येषां,ते सूक्ष्मधियो विवेकिनः,कर्म=नित्यं नैमित्तिकं काम्यं च यज्ञादि सर्वं कर्म, दोषवद्=हिंसादिदोषवद्, हिंसादिदोषदुष्टमिति=अस्माद् हेतोस्त्याज्यं=स्वरूपतः परित्यक्तव्यं श्रेयोऽर्थिभिः, प्राहुः=प्रवदन्ति । च=तथाऽपरे=न विद्यन्ते परे प्रकृष्टाः येभ्यस्ते सर्वेभ्यः प्रकृष्टाः उत्कृष्टाः सर्वोत्तमाः प्राज्ञाः, यज्ञदानतपःकर्म=यज्ञकर्म,दानकर्म, तपःकर्म,त्रयं न त्याज्यं=स्वरूपतो न त्यक्तव्यमिति प्राहुः=कथयन्तीत्यर्थः ॥३॥

नन्वस्तां मतान्तरं, भवतः को निश्चयः ?, तत्राह द्वाभ्याम्—

"निश्चयं शृणु मे तत्र, त्यागे भरतसत्तम ! ।
त्यागो हि पुरुषव्याघ्र !, त्रिविधः सम्प्रकीर्तितः" ॥४॥

अर्थः—भरतसत्तम=हे भरतेषु साधुतम ! श्रेष्ठतम ! तत्र=तस्मिन् संन्यासत्यागशब्दयोरर्थे, त्यागे=कर्मत्यागे, मे=मम निश्चयं=निर्णयम्, अध्यवसायं, शृणु=निशामय। पुरुषव्याघ्र=हे पुरुषेषु व्याघ्र ! हि=यस्मात् त्यागः=कर्मणां परित्यागस्त्रिविधः = सात्त्विकादिप्रकारैस्त्रिप्रकारः, सम्प्रकीर्तितः=मुनिभिः सम्प्राकीर्ति, सम्प्रागायि। तत्र कोऽसौ त्यागः संन्यासत्यागशब्दयोरर्थ इति मम वचनात् निश्चिनु। न च मदन्योऽलपज्ञः कश्चिदेतमर्थं निश्चाययितुं समर्थ इत्यर्थः ॥४॥

"यज्ञदानतपःकर्म, न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव, पावनानि मनीषिणाम्" ॥५॥

अर्थः—यज्ञदानतपःकर्म=यज्ञकर्म, दानकर्म, तपःकर्म, इत्येतत् कर्मत्रितयं, न त्याज्यं=न त्यक्तव्यं, तत्=अदः कर्मत्रयम्, एव=निश्चयेन कार्यं=यावज्जीवं कर्तव्यम्। चो हेतौ, यस्माद् एव=निश्चयेन यज्ञः=यज्ञकर्म, दानं=दानकर्म, तपः=तपःकर्म, त्रीण्येतानि कर्माणि, मनीषिणां=विवेकबुद्धीनां पुंसां, पावनानि=विशुद्धिकराणि पावित्र्यसाधनानि, सर्वदुरितविनाशकानीत्यर्थः ॥ ५ ॥

अथ कर्तव्यानां यज्ञदानतपःकर्मणामनुष्ठानप्रकारमाह—

"एतान्यपि तु कर्माणि, सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ !, निश्चितं मतमुत्तमम्" ॥६॥

अर्थः—चार्थस्तुः, किञ्च, पार्थ=हे पृथापुत्र !, एतान्यपि=इमान्यपि कर्तव्यत्वेनोक्तानि, कर्माणि=यज्ञदानतपःकर्माणि, सङ्गं=सक्तिं, करोमीति कर्तृत्वाभिमानं, च=तथा, फलानि=दृष्टादृष्टफलानि, दृष्टादृष्टफलाभिसन्धिं, त्यक्त्वा=हित्वा, परित्यज्य, कर्तव्यानि=निर्वर्तयितव्यान्यनुष्ठातव्यानि, न तु सङ्गं फलानि चापरित्यज्येत्यपेरर्थः, इति=एतत्, मे=मम, मदीयं निश्चितं=निर्धारितम्, अध्यवसितम्, उत्तमम्=उच्चतमं, सर्वोत्कृष्टं, मतम्=अभिप्रेतं सिद्धान्तं, यतः सङ्गफलपरित्यागः एव वस्तुतः संन्यासत्यागशब्दयोरर्थो न स्वरूपतः कर्मत्याग इत्यर्थः ॥६॥

अथात्ममतं निश्चयायितुं मुनिभिः सम्प्रकीर्तितं संन्यासत्यागशब्दयो-र्थस्य त्यागस्य त्रैविध्यं तावत् प्रतिपादयति—

"नियतस्य तु संन्यासः, कर्मणो नोपपद्यते ।
मोहात् तस्य परित्यागस्तामसः परिकीर्तितः" ॥७॥

अर्थः—तुनाऽनियतज्योतिष्टोमादिकर्म व्यवच्छिद्यते, नियतस्य= प्रकृत्या शास्त्रेण च नियमितस्य नित्यस्यावश्यानुष्ठेयस्य, कर्मणः = स्ववर्णोचितस्य कर्मणः, संन्यासः=परित्यागो, नोपपद्यते=न युज्यते । मोहात्=विपर्ययज्ञानात्, कर्तव्याकर्तव्ययोर्यथार्थज्ञानाभावादविवेकात्, तस्य=नियतस्यावश्यकर्तव्यस्य कर्मणः, परित्यागः=संन्यासः, तामसः= तमोगुणेन मोहेन निर्वर्त्यत्वात् तामसः, परिकीर्तितः वेदविद्भिः सद्भिः प्रकथितः, यतो नियतं, त्यज्यते चेति विप्रतिषिद्धमित्यर्थः ॥ १ ॥

"दुःखमित्येव यत् कर्म, कायक्लेशभयात् त्यजेत् ।
स कृत्वा राजसं त्यागं, नैव त्यागफलं लभेत्" ॥८॥

अर्थः—यत्=यकत्, कर्म=स्ववर्णोचितं नियतं कर्म, दुःखं=दुःखसाध्यं, बह्वायासनिर्वर्त्यम्, इत्येव=एतदेवालोच्य, नान्यत्किञ्चिदित्यवधारणार्थः, कायक्लेशभयात=कायः शरीरं कर्मणोऽस्यानुष्ठानेन क्लिश्यते, कायं शरीरं वा कर्मणोऽस्यानुष्ठानं क्लिश्नाति, दुःखाकरोतीति कायक्लेश-भयात्, शरीरदुःखत्रासात्, त्यजेत्=त्यजति, स एव त्यागो राजसः, राजसेन दुःखेन निर्वर्त्यत्वात् । तमेतं राजसं त्यागं=संन्यासं, कृत्वा= विधाय, सः=असौ त्यागी, त्यागफलम्=अस्य त्यागस्य संन्यासस्य दृष्टमदृष्टं वा किञ्चित्फलम्, एव=निश्चयेन, न लभेत्=न लभते, न विन्दते, अलसत्वात् । स्वधर्मानुष्ठानक्लेशस्य सहिष्णुरेव हि सर्वं फलमवाप्नोति न तदसहिष्णुरित्यर्थः ॥८॥

अथ सात्त्विकं त्यागं वर्णयति—

"कार्यमित्येव यत् कर्म, नियतं क्रियतेऽर्जुन ! ।
सङ्गं त्यक्त्वा फलं चैव, स त्यागः सात्त्विको मतः" ॥९॥

अर्थः—अर्जुन=हे अर्जुन ! यत्=यकत्, नियतं=नित्यमवश्यकर्तव्यं,

कर्म=स्ववर्णोचितं कर्म, कार्यं=कर्तव्यं मनुष्यत्वान्ममेदं यावज्जीवम्, इत्येव=एतदेव निश्चित्य, नान्यत् किञ्चिदित्यवधारणार्थः, सङ्गं= ममेदं कर्मेति कर्तृत्वाभिनिवेशलक्षणं सम्बन्धं सक्तिं, च=तथा, एव= निश्चयेन फलं=दृष्टमदृष्टं वा फलं,त्यक्त्वा=हित्वा, क्रियते=अनुष्ठीयते, निर्वर्त्यते, सः=असौ, त्यागः=क्रियमाणस्य कर्मणः सङ्गस्य फलस्य च त्यागः,सात्त्विकः=कर्तव्यनिश्चयात्मकेन सात्त्विकेन ज्ञानेन निर्वर्त्यत्वात् सात्त्विको मतः=अभिमतोऽभिप्रेतः इत्यर्थः ।

नियतस्य हि कर्मणो यः स्वरूपतस्त्यागः, सोऽभ्युदयनिश्रेयस- फलाभावेन लोकशास्त्रनिन्दितत्वान्न वस्तुतस्त्यागः, अतएव ताम- सत्वेन राजसत्वेन चासौ भगवताऽपि निन्द्यते । यस्तु कर्मणो निय- तस्य फलसङ्गयोस्त्यागः, स एव वस्तुतः कर्मत्यागः । त्यक्तयोः फल- सङ्गयोः सतोर्विद्यमानस्यापि कर्मणोऽकर्मत्वात् । फलसङ्गतुषावनद्धाः हि कर्मतुण्डलाः प्ररोहन्ति, न फलसङ्गतुषहीना इति फलसङ्गयोस्त्याग एवापेक्ष्यते न कर्मणां स्वरूपतस्त्यागः,तस्य फलसङ्गत्यागेन स्वयं निष्प- न्नत्वात्।य एष कर्मणां फलसङ्गयोस्त्यागः, स एवात्रामुत्र सुखहेतुत्वात् तेषां सात्त्विकस्त्यागः,स एव संन्यासत्यागशब्दयोरर्थः,न कर्मणां स्वरूप- तस्त्यागः।अतो यः फलं सङ्गं च त्यक्त्वा केवलकर्तव्यबुद्ध्याऽऽत्मजाति- देशोन्नतिसाधनं वेदोक्तं कर्मजातं सततमनुतिष्ठति स संन्यासी, स त्यागी, न कर्मत्यागीति भगवदाशयः ॥९॥

अथ सात्त्विकत्यागवतस्त्यागिनो लक्षणमाह-राजसतामसत्यागिभ्यां व्यावृत्त्यर्थम्—

**"न द्वेष्ट्यकुशलं कर्म, कुशले नानुषज्जते ।**
**त्यागी सत्त्वसमाविष्टो, मेधावी छिन्नसंशयः" ॥१०॥**

अर्थः—त्यागी=सात्त्विकत्यागवान्, सत्त्वसमाविष्टः=सत्त्वेन सत्त्वगुणकार्येण ज्ञानेनात्मविषयेण सम्यगाविष्टः पूर्णः, आत्मनिष्ठः, मेधावी=धारणशक्तियुक्ता बुद्धिर्मेधाऽस्त्यस्य,स स्थितमतिः,छिन्नसंशयः= छिन्नो द्वैधीभावं प्राप्तः संशयः स्ववर्णोचितं वेदविहितं कर्म कर्तव्यं, किं वा संन्यसितव्यमिति सन्देहो यस्य, स कर्तव्यकर्मगोचरसन्देहहीनः, अकुशलं = कुशलं सुखं, सुखसाध्यं, कायक्लेशहेतुनाऽऽयासेन विना

निर्वर्त्यं यत्,तत् कुशलं,तद्भिन्नमकुशलं दुःखं दुःखसाध्यं,कायक्लेशावहेनायासेन निर्वर्त्यं,कर्म=स्ववर्णोचितं कर्म,न द्वेष्टि=न जिघांसति,नाभिद्रुह्यति, नाप्रियं मन्यते, कुशले सुखे सुखसाध्येऽनायासेन निर्वर्तयितव्ये स्ववर्णोचिते कर्मणि, नानुषज्जते=नानुषज्जति, नानुरज्यति, न प्रीयते, स्ववर्णोचितं कर्म कुशलं स्यादकुशलं वा भवेत्, सुखेन सिध्येत्, दुःखेन वा निष्पद्येत,सर्वं तद् विना रागेण,विना द्वेषेण, केवलया कर्तव्यबुद्ध्या श्रद्धाभक्तिपुरस्सरं यथाविधि निर्वर्तयतीत्यर्थः ॥१०॥

अथ कर्मफलत्याग एव कर्मत्यागो न स्वरूपतः कर्मणां त्याग इति द्रढयन्नाह—

"नहि देहभृता शक्यं, त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी, स त्यागीत्यभिधीयते" ॥११॥

अर्थः—हि=यस्मात्, देहभृता=देहं शरीरं धारयता देहिना मनुष्येण, अशेषतः=अशेषेण निःशेषेण, कर्माणि=सर्वाणि कर्माणि, त्यक्तुं=संन्यासितुं न शक्यं=न शक्यते, न क्षम्यते, न पार्यते, देहयात्रानिर्वाहहेतूनां कर्मणामवर्जनीयत्वात् । अतो यस्तु=अवधारणे तुः, य एव मनुष्यः, कर्मफलत्यागी = कर्मणामवश्यकर्तव्यत्वेन प्राप्तानां नियतकर्मणां फलस्य त्यागी परित्यागी, संन्यासी,सः=असावेव,त्यागी= संन्यासी, इति=एवम्,अभिधीयते=समाख्यायते, न कर्मणां स्वरूपतस्त्यागीत्यवधारणार्थकस्य तोरर्थः,मूढानां वेदादिशास्त्रानभिज्ञानां दृष्टौ कर्मणां स्वरूपतस्त्यागी संन्यासी सन्नपि वस्तुतो न स संन्यासीत्यर्थः॥११॥

नन्वनुष्ठीयमानानां कर्मणां फलस्यावश्यम्भावात् स्वरूपतस्त्याग एव तेषां त्यागो न फलतस्त्यागस्त्यागः ? तत्राह—

"अनिष्टमिष्टं मिश्रं च, त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य, न तु संन्यासिनां क्वचित्" ॥१२॥

अर्थः—अनिष्टम्=अप्रियं दुःखम्, इष्टं=प्रियं सुखं, च=तथा, मिश्रम्=इष्टानिष्टमिश्रं,प्रियाप्रियाभ्यां मिलितं,सम्भिन्नं,सुखदुःखोभयम्, एवं त्रिविधं=त्रिप्रकारकं, कर्मणः=अनुष्ठितस्य पुण्य-पाप-पुण्यपापमिश्रतस्य कर्मणः,फलं=निष्पाद्यं भोक्तव्यं फलमभ्युपगम्यते,तद् अत्या-

गिनां=नास्ति फलत्यागो येषां, तेषां फलत्यागरहितानां, फलमपरित्यज्य कर्मानुष्ठायिनां, फलमनुसन्धाय कर्मकर्तृणां, प्रेत्य=मृत्वा, इह लोके फलाभावे परस्मिन् लोके, भवति=जायते, संन्यासिनां=कर्मफलत्यागः सन्न्यासः, सोऽस्ति येषां फलसंन्यासिनां कर्मफलत्यागिनां, क्वचित्=इह वाऽमुत्र वा क्वापि,न तु=नैव फलं,भवति=जायत इत्यर्थः॥१२॥

अथ कर्मणां फलाजनने फलत्यागवत् कर्तृत्वाभिमानाख्यसङ्गपरित्यागोऽप्यावश्यक इति दिदर्शयिषुः कर्ममात्रस्य कारणपञ्चकं तावत् प्रतीज्ञापूर्वकमाह—

"पञ्चैतानि महाबाहो!, कारणानि निबोध मे।
सांख्ये कृतान्ते प्रोक्तानि, सिद्धये सर्वकर्मणाम्" ॥१३॥

अर्थः—महाबाहो=हे महाभुज! एतानि=इमानि वक्ष्यमाणानि पञ्च=पञ्चसंख्यानि, कारणानि=साधनानि, मे=मम मुखात्, निबोध=नितरां बुध्यस्व, जानीहि। यानि पञ्च कारणानि, सर्वकर्मणां=सर्वेषां लौकिकानां वैदिकानां कायिकवाचिकमानसानां कर्मणां, सिद्धये=निष्पत्तये, सांख्ये=सांख्यनामके कृतान्ते=शास्त्रे, कृतोऽन्तो निर्णयो यस्मिन्निति तद्व्युत्पत्तेः, प्रोक्तानि=कथितानि कापिलैरित्यर्थः॥१३॥

अथ तानि पञ्च कारणानि परिगणयति —

"अधिष्ठानं तथा कर्ता, करणं च पृथग्विधम्।
विविधाश्च पृथक् चेष्टाः, दैवं चैवात्र पञ्चमम्" ॥१४॥

अर्थः—अधिष्ठानं=शरीरं, तथा कर्ता=जीवात्मा, च=तथा, पृथग्विधं=भिन्नप्रकारं बाह्याभ्यन्तरभेदेन द्विप्रकारं,करणं=हस्तपादचक्षुःश्रोत्रमनःप्रभृतिकरणं, च=तथा विविधाः=नाना प्रकाराः, पृथक्=परस्परभिन्नाश्चेष्टाः=हिताहितप्राप्तिपरिहारानुकूलाः बाह्याभ्यन्तरकरणानां व्यापारविशेषाः, च=तथा, एव=निश्चयेनात्र=एषु चतुर्षु कर्मकारणेषु पञ्चमं=पञ्चानां पूरणं, दैवं=पुण्यपापवासनादिरूपमदृष्टं भाग्यनामधेयं वेदितव्यमित्यर्थः॥ १४॥

अथ पञ्चानामेषां सर्वकर्मकारणत्वमाह—

"शरीरवाङ्मनोभिर्यत् कर्म प्रारभते नरः।
न्याय्यं वा विपरीतं वा, पञ्चैते तस्य हेतवः" ॥१५॥

अर्थः—नरः=मनुष्यः, शरीरवाङ्मनोभिः=शरीरेण वाचा मनसा, न्याय्यं=न्यायादनपेतं,न्याययुक्तं, शास्त्रविहितं,लोकसम्मतं,वा=अथवा, विपरीतम् =अन्याय्यम, अयुक्तं, शास्त्रप्रतिषिद्धं लोकाननुमतं, यत् कर्म=यत्किञ्चित् कर्म, प्रारभते = प्रक्रमते, निर्वर्तयते, तस्य=अमुष्य प्रारभ्यमाणस्य कर्मणः,एते=इमे प्रागुक्ताः पञ्च,हेतवः कारणानीत्यर्थः॥१५

अथ हेतुपञ्चकनिरूपणस्य प्रयोजनमाह—

**"तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।**
**पश्यत्यकृतबुद्धित्वात्, न स पश्यति दुर्मतिः"॥१६॥**

अर्थः तत्र=तस्मिन् न्याय्ये वा, विपरीते वा,सर्वस्मिन् कर्मणि, एवं सति=अमुना प्रकारेण, यथोक्तरीत्या, पञ्चभिः कारणैर्निर्वर्त्ये सति, अधिष्ठानादीनां पञ्चानां कारणत्वे सति, यस्तु = य एव मनुष्यो, न सर्व इति तोरर्थः, अकृतबुद्धित्वात् = असंस्कृतबुद्धित्वात्, शास्त्राचार्य्योपदेशसंस्कारहीनान्तःकरणत्वात्, केवलम् =एकाकिनमात्मानं= जीवात्मानं स्वं, कर्तारं=कर्मकर्तारं, पश्यति=अहमेव कर्मकर्तेति जानाति, सः=असौ दुर्मतिः=दुष्टबुद्धिर्मलिनान्तःकरणो, न पश्यति= पश्यन्नपि न पश्यति, जानन्नपि न जानाति । नहि पञ्चानां कारणत्वे समाने, केवलस्यात्मनः कारणत्वमीक्षमाणः सम्यगीक्षते, अहमेव कर्तेति जानानो वा सम्यग् जानीते । कर्तृत्वाभावेऽप्यात्मनः केवलस्य कर्तृत्वं यः पश्यति, स न सम्यक् पश्यतीत्यर्थः ॥१६॥

अथ सम्यक् पश्यतः कर्तृत्वाभिमानाख्यसङ्गाभावात् कर्मकर्तृत्वेऽपि कर्माकर्तृत्वमाह—

**"यस्य नाहंकृतो भावो, बुद्धिर्यस्य न लिप्यते ।**
**हत्वाऽपि स इमान् लोकान्,न हन्ति न निबध्यते"॥१७**

अर्थः—यस्य=स्ववर्णोचितकर्मसु वर्तमानस्य यस्य मनुष्यस्य, अहंकृतः=अहमित्यहङ्कारेण कृतो निष्पादितः,अहं करोमि,मया क्रियते, इत्येवंरूपेणाहमा निर्वर्तितो, भावः=कर्तृत्वाभिनिवेशात्मकः प्रत्ययो मनोवृत्तिविशेषः, कर्तृत्वाभिमानाख्यः कर्मसु सङ्गः सक्तिर्न=न विद्यते, अधिष्ठानादिव्यतिरेकेणात्मनः केवलस्य कर्मकर्तृत्वाभावावधारणात्,

तथा, यस्य=स्ववर्णोचितकर्मसु वर्तमानस्य यस्य मनुष्यस्य, बुद्धिः= अन्तःकरणं, न लिप्यते=अहमिदं दुष्टु वा सुष्ठु वा कर्माकार्षम्, अस्य फलं नरकं वा स्वर्गं वा भोक्ष्ये, इत्येवंप्रकारकेण कर्मफलानुसन्धान-लक्षणेन हर्षविषादकरेणानुशयनाम्ना लेपेन न युज्यते, कर्तव्यबुद्ध्या कर्माणि कुरुते, नैहिकामुष्मिकं तत्फलमनुसन्धत्ते,सः=असौ मनुष्यः, इमान्=एतान् प्रत्यक्षेणानुभूयमानान्,लोकान्=सर्वान् जनान् मनुष्यान्, हत्वाऽपि=हिंसित्वाऽपि, मारयित्वाऽपि, न हन्ति=न हिनस्ति, न मारयति,किमुत भीष्मद्रोणप्रभृतीन्, इत्यपिना द्योत्यते,न निबध्यते=न हननक्रियाफलेन दुःखेन सम्बध्यते। कर्तृत्वाभिमाननिमित्तं हि हनन-क्रियाकर्तृत्वं, फलाभिसन्धिनिमित्तमिव च फलानुसन्धाननिमित्तं हननक्रियाफलभागित्वम्। यस्य फलाभिसन्धिवत् तदुभयं नास्ति, स वेदविहिते स्ववर्णोचिते युद्धे कर्मणि,सर्वान् लोकान् हत्वाऽपि,न कञ्चिद् हन्ति, नापि तद्धिंसाफलेनात्र वाऽमुत्र वा क्वचित् कदाचिन्निबध्यते। यः पुरुषः फलं न कामयते, विनैव फलकामनां केवलया कर्तव्य-बुद्ध्या वेदविहितानि स्ववर्णोचितानि कर्माणि कुरुते, निवर्तयते, न तत्फलमनुसन्धत्ते, न वाऽऽत्मानं कर्तारमभिमन्यते, स संन्यासी, स त्यागी, स कर्मयोगी, तस्य यावत् कर्म हिंसात्मकं वाऽहिंसात्मकं वा, न तत् पापं,न तत् पुण्यं,न तत् पापपुण्यमिश्रं,किन्तु त्रिविधेभ्यः कर्मभ्यो विलक्षणमपापापुण्यम्। यत्रेदं स्मर्यते "कर्माशुक्लाकृष्णं योगिनां त्रिविधमितरेषाम्" (यो० ४। ७) इति। यत् कर्म न पापं, न पुण्यं, न पुण्यपापमिश्रं,तत् स्वरूपेण कर्म भवदपि न वस्तुतः कर्म। मनुष्यश्च कर्मणः फलेन संयुज्यते नाकर्मणः फलेन। अतो यस्य मनुष्यस्य कर्माणि कुर्वतोऽपि नास्ति कर्तृत्वाभिमानः, तदभावान्नास्ति तन्निबन्धनं फलानुसन्धानं, नास्ति च कर्महेतुः फलाभिलाषः, स यत् कर्म कुर्यात्, न तत्फलेन संसृज्यते इत्यर्थः॥ १७॥

अथाधिष्ठानादिभिः पञ्चभिर्हेतुभिर्न्याय्यानि वा विपरीतानि वा यानि कर्माण्यारभ्यन्ते,तेषां सर्वेषां प्रवर्तकमाश्रयं च सावान्तरभेदं प्रणिगदति सात्त्विकादिभेदत्रयकथनाय—

"ज्ञानं ज्ञेयं परिज्ञाता, त्रिविधा कर्मचोदना।
करणं कर्म कर्तेति, त्रिविधः कर्मसंग्रहः" ॥१८॥

अर्थः—ज्ञानं = इष्टानिष्टादिरूपं द्रव्यगुणकर्मादियावद्वस्तुविषयं ज्ञानमात्रम्, ज्ञायतेऽवबुध्यते वस्तुमात्रमनेनेति तद्व्युत्पत्तेः, ज्ञेयं=ज्ञातव्यं, ज्ञानविषयभूतं द्रव्यगुणकर्मादिपदार्थमात्रम्, परिज्ञाता= ज्ञानाश्रयो भोक्ता जीवात्मा, इतित्रिविधा=त्रिप्रकारा, कर्मचोदना= मनोवाक्कायारब्धव्यानां लौकिकवैदिककर्मणां क्रियाभेदानां चोदना प्रवर्तना,चोद्यते प्रवर्त्यतेऽनयेति तद्व्युत्पत्तेः प्रवृत्तिहेतुः प्रवर्तिकेत्येतत्, ज्ञानज्ञेयपरिज्ञातॄणां सन्निपाते हि हानोपादानोपेक्षाप्रयोजनो लौकिकवैदिकसर्वकर्मारम्भो जायते, अतो ज्ञानं ज्ञेयं परिज्ञाता, इत्येतत् त्रितयं सर्वेषां लौकिकवैदिककर्मणां क्रियाभेदानां प्रवर्तकम्,करणं = साधकतमं, क्रियासिद्धौ प्रकृष्टोपकारकं बाह्याभ्यन्तरभेदभिन्नं हस्तपादचक्षुःश्रोत्रादिलक्षणम्, कर्म=ईप्सिततमं, कर्तुः क्रियया ऽऽप्तुमिष्टतमं, कर्तुराप्तिक्रियाया विषयभूतं यद्वस्तु द्वितीयान्तं,तत् कर्म, कर्ता=करणानां प्रयोक्ता भवन् क्रियायाः कर्मकलापस्य निर्वर्तको जीवात्मा,इति=एष, त्रिविधः=त्रिप्रकारः, कर्मसङ्ग्रहः =कर्मणां लौकिवैदिकक्रियाभेदानां सङ्ग्रह आश्रयः, कर्माणि संगृह्यन्ते संह्रियन्तेऽस्मिन्निति तद्व्युत्पत्तेः, अधिष्ठानादिभिः पञ्चभिः कारणैरारब्धं मनोवाक्कायाश्रयभेदेन त्रिविधं राशीभूतं कर्म,एषु करणादिषु त्रिषु संगृह्यते संह्रियते,साक्षात् समवेयते, न सम्प्रदानादिषु त्रिषु । तेषां परम्परया क्रियानिर्वर्तकत्वेऽपि साक्षात् क्रियाश्रयत्वाभावात् । अतः करणादित्रितयमेव कर्माश्रयः इत्यर्थः॥१८॥

अथोक्तानां कर्मप्रवृत्तिहेतूनां कर्माश्रयभूतानां च ज्ञानादीनां षण्णां मध्येऽनावश्यकत्वेन ज्ञेयकरणे परित्यज्य, परिज्ञातारं च कर्तरि समावेश्यावशिष्टानां ज्ञानकर्मकर्तॄणां त्रयाणां सात्त्विकादिभेदत्रयं वक्तुमर्जुनं तावदभिमुखी करोति—

**"ज्ञानं कर्म च कर्ता च, त्रिधैव गुणभेदतः ।**
**प्रोच्यते गुणसंख्याने, यथावच्छृणु तान्यपि" ॥१९॥**

अर्थः—ज्ञानं=सर्ववस्तुविषयं ज्ञानं, ज्ञानमात्रं, च=तथा कर्म= क्रिया, लौकिकवैदिककर्मजातं,च=तथा, कर्ता=क्रियानिर्वर्तकः,प्रत्येकं गुणभेदतः=सत्त्वादिगुणभेदतः,त्रिधैव=विधान्तरव्यवच्छेदोऽत्रधारणार्थः, त्रेधैव, गुणसंख्याने = गुणप्रतिपादके सांख्यशास्त्रे, गुणाः सत्त्वादयः सम्यक् स्वरूपतः कार्यतश्च ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति तद्व्युत्पत्तेः,

प्रोच्यते=कथ्यते, तानि=अमूनि ज्ञानादीनि, अपि=ततोऽन्यान्यपि तत्समानजातीयानि, गुणभेदतो भिन्नानि, यथावत् = याथातथ्येन, यथाशास्त्रं, शृणु=आकर्णयेत्यर्थः ॥१९॥

अथार्जुनेऽभिमुखीभूते पूर्वं तावद् ज्ञानत्रैविध्यमाह त्रिभिः—

"सर्वभूतेषु येनैकं, भावमव्ययमीक्षते।
अविभक्तं विभक्तेषु,तज्ज्ञानं विद्धि सात्त्विकम्" ॥२०॥

अर्थः—येन=येन ज्ञानेन, सर्वभूतेषु=सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु प्राणिषु, विभक्तेषु=नामरूपजातिगुणकर्मभिः परस्परं व्यावृत्तेषु भिन्नेषु, अविभक्तम्=अभिन्नं,मणिगणेषु सूत्रमिवानुस्यूतम्, एकम्=एकरूपं, तदीयधर्मकर्मभिरसंस्पृष्टत्वादेकरसम्, अव्ययं=व्ययो विनाशस्तद्रहितं नित्यं, भावम्=आत्मानं क्षेत्रज्ञमीक्षते=पश्यति, तज्ज्ञानं=देहभेदेषु सत्स्वपि भेदरहितैकात्मवस्तुविषयं ज्ञानं,सात्त्विकं=सत्त्वगुणनिर्वर्त्यं, सम्यक् ज्ञानं, विद्धि=जानीहीत्यर्थः ॥२०॥

अथ राजसं ज्ञानमाह—

"पृथक्त्वेन तु यज्ज्ञानं, नानाभावान् पृथग्विधान्।
वेत्ति सर्वेषु भूतेषु, तज्ज्ञानं विद्धि राजसम्" ॥२१॥

अर्थः—तुना प्रागुक्तात्सात्त्विकज्ञानादस्य वैलक्षण्यं द्योत्यते। यज्ज्ञानं,सर्वेषु=समस्तेषु,भूतेषु=ब्रह्मादिस्थावरान्तेषु प्राणिषु,पृथक्त्वेन=भेदेन, प्रतिशरीरं भिन्नत्वेन, पृथगविधान्=भिन्नप्रकारान् सुखित्वदुःखित्वादिभिन्नधर्मकान्, सुखदुःखादिधर्मभेदेन परस्परविलक्षणान्, नानाभावान्=नानात्मनः, शरीरानेकत्वादनेकान् क्षेत्रज्ञान् जीवात्मनो, वेत्ति=जानाति,करणे ज्ञाने कर्तृत्वोपचारः,यथैधांसि पचन्ति तथा,येन ज्ञानेन पश्यति,तज्ज्ञानं, राजसं=रजोनिर्वर्त्यं, विद्धि=जानीहीत्यर्थः ॥२१॥

अथ तामसं ज्ञानमाह—

"यत्तु कृत्स्नवदेकस्मिन्, कार्ये सक्तमहेतुकम्।
अतत्त्वार्थवदल्पं च, तत् तामसमुदाहृतम्" ॥२२॥

अर्थः—राजसज्ञानव्यावृत्त्यर्थस्तुः,यत्=यज्ज्ञानम्, एकस्मिन्=

कस्मिँश्चिदेकस्मिन्,कार्ये=प्रकृतिकार्ये भौतिके देहे,प्रतिमादौ वा,कृत्स्नवत्=समस्तवत्, परिपूर्णवत्, सक्तम्=एतावानेवात्मा देही क्षेत्रज्ञः, ईश्वरो वा, नातःपरमस्ति, इत्यभिनिवेशेन युक्तं, सँलग्नं, निबद्धम्, अहेतुकं=हेतुवर्जितं, हेतुरुपपत्तिर्युक्तिस्तच्छून्यं,निर्युक्तिकम्,अतत्त्वार्थवत्=यथाभूतोऽबाधितोऽर्थस्तत्त्वार्थः, स विषयत्वेनास्ति यस्य ज्ञानस्य, तत् तत्त्वार्थवत्, न तत्त्वार्थवदतत्त्वार्थवत्, अयथाभूतार्थं, बाधितार्थविषयं, मिथ्याभूतार्थगोचरं,च=तथाऽल्पम्=अल्पविषयत्वादल्पं,निकृष्टं, तुच्छं,तज्ज्ञानं तामसं=तमोनिर्वर्त्यमुदाहृतम्=उच्चारितं, कथितमित्यर्थः॥

अथ कर्मणः सात्त्विकादिभेदेन त्रैविध्यमाह—

**"नियतं सङ्गरहितम्, अरागद्वेषतः कृतम् ।**
**अफलप्रेप्सुना कर्म,यत् तत् सात्त्विकमुच्यते"॥२३॥**

अर्थः—यत् कर्म,नियतं = प्रकृत्या शास्त्रेण च नियमितं, नित्यमनुष्ठेयतया प्रापितं, चोदितं, स्ववर्णोचितं, सङ्गरहितं = सङ्गः सक्तिः, कर्तृत्वाभिनिवेशस्तद्वर्जितम्,अफलप्रेप्सुना=फलं प्रेप्सतीति फलप्रेप्सुः, फलाभिलाषुकः, न फलप्रेप्सुरफलप्रेप्सुस्तेन फलाभिलाषरहितेन, अरागद्वेषतः=सुखसाध्ये कर्मणि रागः, दुःखसाध्ये तस्मिन् द्वेषः, न रागतो न द्वेषतः, किन्तु कार्यमेतदस्माकमिति बुद्धितः कृतं=निर्वर्तितं, तत्=तत्कर्म, सात्त्विकमुच्यते=कथ्यते इत्यर्थः ॥ २३ ॥

अथ राजसं कर्माह—

**"यत्तु कामेप्सुना कर्म, साहङ्कारेण वा पुनः ।**
**क्रियते बहुलायासं, तद् राजसमुदाहृतम्" ॥२४॥**

अर्थः—तुना सात्त्विककर्मणः सकाशादस्य वैलक्षण्यं द्योत्यते । चार्थे वाकारः। यत्=यकत्, कर्म=लौकिकं वैदिकं वा कर्म, कामेप्सुना= कामः फलं, काम्यते इति तद्व्युत्पत्तेः, तं कामं कर्मफलं दृष्टमदृष्टं वाऽऽप्तुमिच्छता, साहङ्कारेण वा = ममेदं कर्म, कर्ताऽहमस्य कर्मणः, इति कर्तृत्वाभिमानोऽहङ्कारः,तेन सहितेन युक्तेन च कर्त्रा,क्रियते=निर्वर्त्यते, पुनः=भूयः,बहुलायासं=नितान्तश्रमसाध्यं, बहुलो महान् आयासः श्रमो

यस्मिन्निति तद्व्युत्पत्तेः, तत्=तत्कर्म,राजसं=रजसा दृष्टादृष्टफलरागेण निर्वर्त्यत्वाद् राजसम्, उदाहृतं=व्याहृतं भाषितमित्यर्थः॥ २४॥

अथ तामसं कर्माह—

"अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम्।
मोहादारभ्यते कर्म, यत् तत्तामसमुच्यते"॥ २५॥

अर्थः—यत् कर्म, अनुबन्धं=पश्चाद्भाविनं परिणामम्,अनुबध्यते पश्चात्सम्बध्यते, इति तद्व्युत्पत्तेः क्षयं=धनक्षयं, हिंसां=प्राणिपीडां, च=तथा पौरुषं=पुरुषकारं, शक्नोमीदं कर्म निर्वर्तयितुमित्येवमात्मनः कर्मनिर्वर्तनसामर्थ्यम्, अनपेक्ष्य= अविगणय्याविचार्य्य, मोहात्= विपर्ययज्ञानादविवेकात् केवलादारभ्यते=क्रियते,तत्=तत्कर्म,तामसं= तमसा मोहेन निर्वर्त्यत्वात् तामसम्, उच्यते=कथ्यते इत्यर्थः॥२५॥

अथ सात्त्विकादिभेदेन कर्तृत्रैविध्यमाह त्रिभिः—

"मुक्तसङ्गोऽनहंवादी, धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः,कर्ता सात्त्विक उच्यते'॥२६

अर्थः—मुक्तसङ्गः=त्यक्तासक्तिः, त्यक्तकर्तृत्वाभिमानाख्यसम्बन्धः,मुक्तस्त्यक्तः सङ्गः सक्तिः कर्तृत्वाभिमानलक्षणः सम्बन्धो येनेति तद्व्युत्पत्तेः, त्यक्तकर्तृत्वाभिनिवेशः, अनहंवादी =फलमस्य कर्मणो भोक्ष्येऽहमिति न वदनशीलः, फलानुसन्धानवर्जितः, न फलं कामयते, न फलमनुसन्धत्ते, धृत्युत्साहसमन्वितः=धृतिर्धैर्यम्, उद्वेगहतौ विघ्ने बहुले प्राप्तेऽप्यनुद्वेगोऽनुपरमः, उत्साहः साधयिष्याम्येवेत्यध्यवसायः, उद्युक्तचेतस्त्वम्, ताभ्यां समन्वितः संयुक्तः, सिद्ध्यसिद्ध्योः=कर्मफलस्य प्राप्त्यप्राप्त्योः निर्विकारः=हर्षशोकविकाराभ्यां निर्गतः, फलप्राप्तौ न हृष्यति,तदप्राप्तौ न शोचति,न ग्लायति, एवम्भूतो यः कर्ता= कर्मनिर्वर्तकः, स सात्त्विक उच्यते=कथ्यते, इत्यर्थः॥२६॥

अथ राजसं कर्तारमाह—

"रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।
हर्षशोकान्वितः कर्ता, राजसः परिकीर्तितः" ॥२६॥

अर्थः—रागी=विषयेषु प्रीती रागः, तद्वान्, इन्द्रियार्थेषु शब्द-स्पर्शादिषु पुत्रदारगृहादिषु च प्रीतिमान्, कर्मफलप्रेप्सुः=कर्मफल-प्राप्तिकामः, कर्मफलार्थी, लुब्धः=आवश्यकेऽपि कर्मणि स्वं द्रव्यं व्यय-यितुमशक्तः, सदा परधनाभिलाषुकः, हिंसात्मकः=परपीडास्वभावः, परान् पीडयित्वा तैः कर्म कुर्वाणः, अशुचिः=बाह्याभ्यन्तरशौचहीनः। हर्षशोकसमन्वितः=कर्मफलस्य सिद्ध्य सिद्ध्योर्हर्षशोकाभ्यां युक्तः, यः कर्ता=कर्मनिर्वर्तकः, स राजसः परिकीर्तितः=वर्णित इत्यर्थः ॥२७॥
अथ तामसं कर्तारमाह—

**"अयुक्तः प्राकृतः स्तब्धः, शठो नैष्कृतिकोऽलसः।**
**विषादी दीर्घसूत्री च, कर्ता तामस उच्यते" ॥२८॥**

अर्थः—अयुक्तः=असमाहितो विक्षिप्तः, अस्थिरचित्तः, प्राकृतः=यथा प्रकृतितो जातस्तथा, बालसमः, नितान्तासंस्कृतान्तः करणः, कार्या-कार्यज्ञानशून्यः, स्तब्धः=अनम्रः, दण्ड इव न कस्मैचिन्नमति, विनय-शून्यः, शठः=वञ्चकः, अन्यथा जानन्नपि परवञ्चनार्थमन्यथा प्रकाशकः, गूढविप्रियकारी, नैष्कृतिकः=मनोवाक्कायैःपरतिरस्कृतिर्निकृतिः, तत्प्रवणः, परावमानी, नीचकर्मकृत्, अलसः=अप्रवृत्तिशीलो मन्दप्रवृत्तिरनुद्यमः, विषादी=नित्यमवसन्नचित्तः, अभीष्टे वस्तुनि प्राप्तेऽपि सन्तोषाभा-वादनुशोचनशीलः, च=तथा, दीर्घसूत्री=कर्तव्यानां कर्मणां सूत्र-वद्दीर्घप्रसारी, दीर्घं सूत्रयितुं प्रसारयितुं शीलमस्येति तद्व्युत्पत्तेः, चिरकारी, मन्थरप्रवृत्तिः, एकाहःसाध्यं कार्यं मासेनापि न करोति, यः कर्ता, स तामस उच्यते=कथ्यते, इत्यर्थः ॥ २८ ॥
अथ प्रसङ्गात् कर्तुरिव तत्करणस्य बुद्धेस्तद्वृत्तेर्धृतेश्च गुणभेदात् त्रैविध्यं वक्तुं प्रतिजानाति—

**"बुद्धेर्भेदं धृतेश्चैव, गुणतस्त्रिविधं शृणु।**
**प्रोच्यमानमशेषेण, पृथक्त्वेन धनञ्जय !" ॥ २९ ॥**

अर्थः—धनञ्जय=हे धनानां जेतः!, बुद्धेः=निश्चयात्मकवृत्ति-मतोऽन्तःकरणस्य, च=तथा, एव=निश्चयेन धृतेः=तद्वृत्तेर्धृते-र्धैर्यस्य, गुणतः=सत्त्वादिगुणतः, सत्त्वादिगुणकृतं, त्रिविधं=त्रिप्र-

कारं भेदं=विभागम्, अशेषेण=निःशेषेण, निरवशेषेतः, पृथक्त्वेन=भेदेन प्रत्येकं,प्रोच्यमानं=मयोच्यमानं शृणु=आकर्णयेत्यर्थः ॥२९॥

अथ सत्त्वादिगुणभेदतो बुद्धेस्त्रिविधं भेदमाह त्रिभिः—

"प्रवृत्तिं च निवृत्तिं च, कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति,बुद्धिः सा पार्थ सात्त्विकी" ॥३०॥

अर्थः—प्रवृत्तिं=धर्मे शास्त्रविहिते कर्मणि प्रवर्तनं, च=तथा, निवृत्तिम्=अधर्मात् शास्त्रप्रतिषिद्धात् कर्मणो निवर्तनं, च=तथा कार्याकार्ये=कार्यं चाकार्यं च, ते, यस्मिन् काले,यस्मिन् देशे यत् कार्यं कर्तव्यं, यदकार्यं न कर्तव्यं, तद् द्वयं, भयाभये=अकार्यकरणनिमित्तं भयं त्रासं, कार्यकरणनिमित्तमभयं त्रासाभावं, बन्धं=बन्धहेतुं, च=तथा, मोक्षं=मोक्षहेतुं, या बुद्धिः=अन्तःकरणं, वेत्ति=जानाति,करणे कर्तृत्वोपचारः, यया बुद्ध्या पुरुषो जानाति, पार्थ=हे पृथापुत्र ! सा-बुद्धिः सात्त्विकी वेदितव्येत्यर्थः ॥ ३० ॥

अथ राजसीं बुद्धिमाह—

"यया धर्ममधर्मं च, कार्यं चाकार्यमेव च ।
अयथावत् प्रजानाति, बुद्धिः सा पार्थ! राजसी" ॥३१

अर्थः—पार्थ=हे पृथापुत्र ! यया=ययका बुद्ध्या, धर्मं=शास्त्रविहितं, च=तथा,अधर्मं=शास्त्रप्रतिषिद्धं,कार्यं=देशकालादेरानुकूल्ये कर्तव्यं, च=तथा, एव=निश्चयेनाकार्यं=देशकालादेः प्रातिकूल्ये न कर्तव्यं, च=तदुभयम, अयथावत्=न यथावत्, न याथातथ्येन,न सर्वतो निर्णयेन, सन्देहास्पदत्वेनेत्येतत्, प्रजानाति= विजानाति, सा=असौ, राजसी बुद्धिरित्यर्थः ॥ ३१ ॥

अथ तामसीं बुद्धिमाह—

"अधर्मं धर्ममिति या, मन्यते तमसाऽऽवृता ।
सर्वार्थान् विपरीतांश्च, बुद्धि सा पार्थ ! तामसी" ॥३२

अर्थः—पार्थ=हे पृथापुत्र ! या=या बुद्धिः, तमसा=अज्ञानेनाविवेकेनावृता=वेष्टिता, व्याप्ता, अधर्मं=शास्त्रप्रतिषिद्धं,धर्ममिति=

शास्त्रविहितमिति मन्यते=जानाति, च=तथा, सर्वार्थान्=सर्वान् समस्तान् अर्थान् कार्याकार्यादीन् ज्ञेयपदार्थान्, विपरीतान्=कार्यमकार्यम्, अकार्यं कार्यं, भयमभयम्, अभयं भयमित्येवं प्रकारेण विपर्यस्तान् मन्यते=जानाति, सा बुद्धिस्तामसी वेदितव्येत्यर्थः ॥ ३२ ॥

अथ सत्त्वादिगुणभेदतो बुद्धेरन्तःकरणस्य त्रैविध्यमुक्त्वा तद्वृत्तेर्धृतेस्त्रैविध्यमाह त्रिभिः—

**"धृत्या यया धारयते, मनःप्राणेन्द्रियक्रियाः ।**

**योगेनाव्यभिचारिण्या, धृतिः सा पार्थ! सात्त्विकी"३३**

अर्थः—पार्थ=हे पृथापुत्र ! यया, अव्यभिचारिण्या=न व्यभिचारिण्या, नानैकान्तिक्या, न परिवर्तनशीलया, एकरूपया, ऐकान्तिक्या, धृत्या=धैर्याख्यया बुद्धिवृत्त्या, योगेन=समत्वबुद्धिलक्षणेन निष्कामकर्मयोगेन, मनःप्राणेन्द्रियक्रियाः=मनसोऽन्तःकरणस्य चेतसः, प्राणस्य प्राणापानरूपस्येन्द्रियाणां ज्ञानकर्मेन्द्रियाणां चक्षुःश्रोत्रहस्तपादादीनां क्रियाः व्यापारान् हर्षशोकदीर्घश्वासोच्छ्वासरोदनाश्रुविमोचनादिरूपानुच्छास्त्रवृतिभेदान्, धारयते=धारयति, नियच्छति निरुणद्धि, यथाशास्त्रं व्यवस्थापयति, सा धृतिः सात्त्विकी मन्तव्येत्यर्थः ॥३३॥

अथ राजसीं धृतिमाह—

**"यया तु धर्मकामार्थान्, धृत्या धारयतेऽर्जुन ! ।**

**प्रसङ्गेन फलाकांक्षी, धृतिः सा पार्थ! राजसी" ॥३४॥**

अर्थः—तुना सात्त्विकी धृतिर्व्यवच्छिद्यते । अर्जुन=हे अर्जुन!, यया धृत्या, प्रसङ्गेन=प्रकृष्टेन कर्तृत्वाभिमानाख्येन सङ्गेन सम्बन्धेन सक्त्या, गाढेन कर्तृत्वाभिनिवेशेन, मदीयतास्नेहेन, फलाकांक्षी=फलार्थी, दृष्टादृष्टफलकामो भवन्, धर्मकामार्थान्=धर्मो वेदविहितं कर्म, कामः स्त्रीपुत्रादिः, अर्थः=धनधान्यादिः, धर्मश्च कामश्चार्थश्च, तान्, धारयते=धारयति, सदा मनसि व्यवस्थापयति, स्तभ्नाति, सा धृतिः, पार्थ=हे पृथापुत्र ! राजसी=रजोनिर्वर्त्यत्वाद् राजसी मन्तव्येत्यर्थः ॥३४॥

अथ तामसीं धृतिमाह—

"यया स्वप्नं भयं शोकं, विषादं मदमेव च ।
न विमुञ्चति दुर्मेधाः, धृतिः सा पार्थ! तामसी ॥३५॥

अर्थः—धारयते, इत्यनुषज्यते, पार्थ=हे पृथापुत्र ! दुर्मेधाः= दुष्टबुद्धिस्तमोदोषदूषितान्तःकरणः पुरुषो यया धृत्या, स्वप्नं=निद्रां, भयं= त्रासं, शोकं=सन्तापं, विषादं=खेदं, धारयते=धारयति, मनसि धरति, न विमुञ्चति=न कदाचित् परित्यजति, सा तामसी धृतिरित्यर्थः ॥३५॥

अथ कर्तॄणां करणानां कर्मणां च गुणभेदतस्त्रैविध्यमभिधाय कर्मफलस्य सुखस्य त्रैविध्यमभिधित्सुराह—

"सुखं त्विदानीं त्रिविधं, शृणु मे भरतर्षभ ! ।
अभ्यासाद्रमते यत्र, दुःखान्तं च निगच्छति" ॥३६॥

अर्थः—तुना विषयान्तरं व्यवच्छिद्यते! भरतर्षभ=हे भरतश्रेष्ठ !, इदानीं=सम्प्रति, सुखं=शर्म, त्रिविधं=गुणभेदतस्त्रिप्रकारं, मे=मम वचनात्, शृणु=निशामय, अवधारय । यत्र=यस्मिन् सुखे, अभ्यासात्=चिरकालावर्तनात् पौनःपुन्येन सेवनात् पुरुषो, रमते=बालः इव हृष्टश्चेक्रीड्यते, देवाधिपतिरिन्द्र इव स्वर्गोद्याने नन्दने मोदमानोरंरम्यते, च=तथा, दुःखान्तं=दुःखावसानं दुःखोपशमं, निगच्छति= निश्चयेन गच्छति, प्राप्नोतीत्यर्थः ॥ ३६ ॥

अथ त्रिविधसुखेषु सात्त्विकं सुखमाह—

"यत् तदग्रे विषमिव, परिणामेऽमृतोपमम् ।
तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्" ॥३७

अर्थः—यत्=यकत्, तद्=अदः प्रसिद्धं सर्वप्राणिप्रेमास्पदं सुखम्, अग्रे=आरम्भे, प्रथमं, विषमिव=तद्धेतुबुद्धिनैर्मल्यार्थमनुष्ठेयस्य निष्कामकर्मयोगस्यायासमात्रत्वाद् विषतुल्यं, द्वेषविषावहं, परिणामे=अन्तेऽवसाने पश्चादमृतोपमम्=अमृततुल्यं, प्रीत्यतिशयास्पदम्, आत्मबुद्धिप्रसादजम्=आत्मनः स्वस्य बुद्धिरन्तःकरणं, तत्प्रसादो नैर्मल्यं रजस्तमो-

मलराहित्यं, तस्माज्जातमुत्पन्नं, यत् सुखं, तत् सुखं सात्त्विकं प्रोक्तं=कथितं विद्वद्भिरित्यर्थः ॥३७॥

अथ राजसं सुखमाह—

"विषयेन्द्रियसंयोगाद्, यत् तदग्रेऽमृतोपमम् ।
परिणामे विषमिव, तत् सुखं राजसं स्मृतम्" ॥३८॥

अर्थः—यत् तद्=अदः प्रसिद्धं सुखम्, अग्रे=आरम्भे पूर्वम्, अमृतोपमम्=अमृतसदृशं, परिणामे=अन्तेऽवसाने पश्चाद्, विषमिव=बलवीर्यरूपप्रज्ञामेधाधनोत्साहनाशहेतुत्वाद् विषतुल्यं, विषयेन्द्रियसंयोगात्=विषयाणामिन्द्रियाणां च संयोगात्सम्बन्धाज्जायमानं, वैषयिकं यत् सुखं, तत्सुखं राजसं स्मृतं=भाषितं मुनिभिरित्यर्थः ॥३८॥

अथ तामसं सुखमाह—

"यदग्रे चानुबन्धे च, सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं, तत् तामसमुदाहृतम्" ॥३९॥

अर्थः—यत् सुखम्, अग्रे=आरम्भे, च=तथाऽनुबन्धे=परिणामे, च=एव निश्चयेनात्मनः=बुद्धेरन्तःकरणस्य मोहनं=मोहकरं, विपर्ययज्ञानोत्पादकं, यथार्थज्ञानशक्तितिरोधायकं, निद्रालस्यप्रमादोत्थं=निद्रा स्वप्नः, आलस्यम् अनुद्यमः, प्रमादोऽनवधानताऽवश्यकर्तव्याकरणं, तेभ्य उत्थम् उत्पन्नं जातं यत्सुखं, तत्=तत्सुखं तामसमुदाहृतं=व्याहृतं, यथा बुद्धिप्रसादजं सुखं सात्त्विकं, विषयेन्द्रियसंयोगजं सुखं राजसं, तथा निद्रालस्यप्रमादजं सुखं तामसमुदाहृतं व्याख्यातमित्यर्थः ॥ ३९ ॥

अथ विस्तरभयं मन्यमानः संक्षेपेण ज्ञानादेरिव प्राणिमात्रस्य गुणत्रयसम्बन्धं व्यतिरेकमुखेनोपदिशति—

"न तदस्ति पृथिव्यां वा, दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं, यदेभिः स्यात् त्रिभिर्गुणैः" ॥४०॥

अर्थः—तत्=अदः, सत्त्वं=जन्तुः, कोऽपि प्राणी, प्राणिजातं, पृथिव्यां=भूमौ, पृथिवीलोके, वा=निश्चयेन, नास्ति=न भवति, न विद्यते,

दिवि=आकाशेऽन्तरिक्षे, पुनः=भूयः, वा=निश्चयेन, देवेषु=दिवः परेषु देवलोकेषु, नास्ति=न भवति, न विद्यते, यत्=यत् सत्त्वम्, एभिः=एतैः, प्रकृतिजैः=गुणानां साम्यावस्थारूपायाः प्रकृतेर्जातैः, प्रधानगुणभावेनाविर्भूतैस्त्रिभिः=त्रिसंख्याकैर्गुणैः=सत्त्वरजस्तमोभिर्गुणैर्मुक्तं=त्यक्तं, हीनं, वर्जितं, स्यात्=भवेदित्यर्थः ॥४०॥

अथ पृथिव्यां विद्यमानेषु सर्वेषु सत्त्वेषु गुणत्रयान्वितेषु शास्त्राधिकारिणां ब्राह्मणक्षत्रियविट्शूद्राणां चतुर्णां सत्त्वानामेतैः प्रकृतिजैर्गुणैः प्रविभक्तानि कर्माणि वक्तुमुपक्रमते यथाकर्म ब्राह्मणादिसंज्ञानियमार्थम्-

**"ब्राह्मणक्षत्रियविशां, शूद्राणां च परन्तप ! ।**
**कर्माणि प्रविभक्तानि, स्वभावप्रभवैर्गुणैः" ॥४१॥**

अर्थः—परन्तप=हे शत्रुतापन! ब्राह्मणक्षत्रियविशां=ब्राह्मणाश्च क्षत्रियाश्च विशश्च, तेषां, च=तथा, शूद्राणां=शूद्रनाम्नां सत्त्वानां मनुष्याणां स्वभावप्रभवैः=स्वभावः प्रकृतिस्त्रिगुणात्मिका वैष्णवी माया, ततः प्रभवैः प्रधानगुणभावेन प्रादुर्भूतैर्गुणैः=सत्त्वरजस्तमोभिर्गुणैः, प्रविभक्तानि= प्रकर्षेणासङ्कीर्णत्वेन विभक्तानि विभागेन व्यवस्थितानि, कर्माणि= कर्मजातानि, मत्तः सकाशादिदानीं त्वं शृणु निशामयेत्यर्थः ।

ब्राह्मणादीनां सत्त्वानां स्वभावप्रभवैर्गुणैःकर्माणि प्रविभक्तानीति कथयता गुणशब्दाः ब्राह्मणादयो न जातिशब्दा इति व्यक्तमवबोध्यते । अनुमन्यते च भगवान् पतञ्जलिर्मुनिरपि महाभाष्यकृद् गुणशब्दा एते, न जातिशब्दा इति । तथा च "नञ्" (अष्टा० २ । २ ६) इति सूत्रभाष्ये "सर्वे एते शब्दाः गुणसमुदायेषु वर्तन्ते ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति" इति तदनुमतिवाक्यम् । इहापि च शमदमादिकं मनुष्यमात्रसाधारणं ब्राह्मणकर्मोपन्यस्यते, नासाधारणं क्षत्रियादितो व्यावृत्तं ब्राह्मणमात्रवृत्तिकम् । अतो यस्मिन् कस्मिँश्चित् मनुष्ये शमदमादयो दृश्यन्ते, स योनितः क्षत्रियो वैश्यः शूद्रोऽपि भवन्, ब्राह्मण एव प्रतिपत्तव्यो न क्षत्रियो न वैश्यो न शूद्रः । यथा च ब्राह्मणस्तथैव क्षत्रियविट्-शूद्राः अपि कर्मणैव प्रतिपत्तव्याः, न योनित इति भगवदाशयः । इहत्यो विस्तरस्तु नीलकण्ठीये "भारतभावदीपे" द्रष्टव्यः, इत्युपरम्यते ॥४१॥

अथ ब्राह्मणस्य स्वभावजं कर्माह—

**"शमो दमस्तपः शौचं, क्षान्तिरार्जवमेव च ।**
**ज्ञानं विज्ञानमास्तिक्यं, ब्रह्मकर्म स्वभावजम्" ॥४२॥**

अर्थः—शमः=अन्तःकरणनिग्रहः, दमः = बाह्यकरणनिग्रहः, तपः=पूर्वोक्तं शारीरादित्रिविधं तपनं, शौचं=बाह्याभ्यन्तरं शुचित्वं, क्षान्तिः=क्षमा, च = तथा, एव = निश्चयेन, आर्जवम्=ऋजुभावः, सरलताऽकौटिल्यं, ज्ञानम्=आत्मज्ञानं, विज्ञानं=प्रकृत्यादिविविधपदार्थज्ञानम्, आस्तिक्यम्=ईश्वरे वेदवाक्येषु चास्तिकभावः, श्रद्धानता, श्रद्धा, तदेतत् स्वभावजं=प्रकृतिजं, प्रकृतिगुणजन्यं, ब्रह्मकर्म= ब्राह्मणस्य कर्म "ब्रह्म वै ब्राह्मणः" (शत० १३।१।५।३) इतिश्रुतेः । यस्यैतत्कर्मजातं, स ब्राह्मण इत्यर्थः ॥ ४२ ॥

अथ क्षत्रियस्य स्वभावजं कर्माह—

**"शौर्यं तेजो धृतिर्दाक्ष्यं, युद्धेचाप्यपलायनम् ।**
**दानमीश्वरभावश्च, क्षत्रकर्म स्वभावजम्" ॥४३॥**

अर्थः—शौर्यं=शूरस्य भावो, विक्रमः, बलवत्तरानपि प्रहर्तुं प्रवृत्तिः, तेजः=प्रागल्भ्यं, परैरधर्षणीयत्वं, धृतिः=धैर्य्यं, महत्यामपि विपद्यवसादशून्यत्वमव्याकुलत्वं,दाक्ष्यं=दक्षस्य पटोर्भावः,पाटवं,सहसा प्रत्युपस्थितेषु कार्येष्वव्यामोहेन प्रवृत्तिः, विना व्यामोहं सर्वक्रियासाधनचातुर्य्यं, च=तथा, युद्धे=सङ्ग्रामे, अपि = निश्चयेन, अपलायनम्=अपराङ्मुखत्वं, भीत्या युद्धादनिवर्तनम्, दानं=दातृत्वम्, औदार्यं, देयेषु पदार्थेषु मुक्तहस्तता, च=तथा, ईश्वरभावः=ऐश्वर्यम्, ईशितृत्वं, नियन्तृत्वं, नियन्तव्येषु नियमनशक्तेः प्रकटीकरणम्, एतत् क्षत्रकर्म = क्षत्रं क्षत्रियः, तस्य कर्म, स्वभावजं=प्रकृतिजमित्यर्थः ॥४३॥

अथ वैश्यशूद्रयोः स्वभावजं कर्माह—

**"कृषिगौरक्ष्यवाणिज्यं, वैश्यकर्म स्वभावजम् ।**
**परिचर्यात्मकं कर्म, शूद्रस्यापि स्वभावजम्" ॥४४॥**

अर्थः—कृषिगौरक्ष्यवाणिज्यं=कृषिः पृथिव्याः कर्षणम्, अन्नोत्पादनार्थं लांगलादिभिर्भूमेर्विलेखनं, गौरक्ष्यं=गौरितिग्रहणेन गावोऽश्वाः, अजाः, अवयो महिषाः खरा उष्ट्रा इति सप्त ग्राम्याः पशवो गृह्यन्ते, तान् गवादीन् सप्त पशून् रक्षतीति गोरक्षः, तस्य भावो गौरक्ष्यं, पाशुपाल्यं, पशुपालनं, वाणिज्यं=कुसीदक्रयविक्रयादिलक्षणं वाणिजो वृत्तं, तदेतत् स्वभावजं=प्रकृतिजं वैश्यकर्म=वैश्यस्य कर्म। चार्थेऽपिः, च=तथा, शूद्रस्य=शु इति क्षिप्रनाम, आशु इति तत्पर्यायः, स्वकर्तव्यकर्माणि शुद्रवस्य, आशुद्रवस्य मनुपुत्रस्य सत्त्वस्य, परिचर्यात्मकं=परिचर्या शुश्रूषा सेवा, तदात्मकं, कर्म=धर्मं, शरीरेण शिल्पादिना च नानाविधेन सर्वलोकसेवात्मकं कर्म, स्वभावजं=प्रकृतिजमित्यर्थः॥ ४४॥

अथ ब्राह्मणक्षत्रियविट्शूद्राणां प्रत्येकं स्वभावजं कर्माभिधाय, तत्राभिरतस्यैकैकस्य ब्रह्मप्राप्तिरूपां मुक्तिं, तत्प्राप्तिप्रकारं चाह—

**"स्वे स्वे कर्मण्यभिरतः, संसिद्धिं लभते नरः।**
**स्वकर्मनिरतः सिद्धिं, यथा विन्दति तच्छृणु" ॥४५॥**

अर्थः—स्वे स्वे=स्वीयेस्वीये, कर्मणि=शमदमादिपरिचर्यान्ते, यथोदिते कर्मणि, अभिरतः=निरतः, श्रद्धयाऽनुष्ठानतत्परः, नरः=ब्राह्मणक्षत्रियादिनामभाक् मनुष्यः, संसिद्धिं=सम्यक् पुनरावृत्तिरहितां सिद्धिं, ब्रह्मप्राप्तिरूपां मुक्तिं, लभते=विन्दते। यथा=येन प्रकारेण, स्वकर्मनिरतः=स्वीयेस्वीये कर्मण्यभिरतो नरः, सिद्धिं=संसिद्धिं, ब्रह्मप्राप्तिरूपां मुक्तिं, विन्दति=लभते, तत्=सामान्ये नपुंसकं, तं प्रकारं, शृणु=मत्तः श्रोतुमवधत्स्वेत्यर्थः ॥४५॥

अथ प्रतिज्ञातं प्रकारं श्रावयति—

**"यतः प्रवृत्तिर्भूतानां, येन सर्वमिदं ततम्।**
**स्वकर्मणा तमभ्यर्च्य, सिद्धिं विन्दति मानवः" ॥४६॥**

अर्थः—यतः=यस्मादीश्वरात् सर्वभूतान्तरात्मनः क्षेत्रज्ञात् परब्रह्मणः परमात्मनः सकाशात्, भूतानां=ब्रह्मादिस्तम्बान्तानां सर्वेषां प्राणिनां, प्रवृत्तिः=स्वे स्वे कर्मणि प्रवर्तनं, कायवाङ्मनोनिर्वर्त्या चेष्टा भवति, येन=येनेश्वरेण, इदम्=एतत्, सर्वं=जडचेतनात्मकं विश्वं जगत्, ततं=स्वशक्त्या मायया त्रिगुणात्मिकया प्रकृत्या विस्तारितं प्रादुर्भावितमु-

त्पादितम् । तम्=अमुं सर्वजगदुत्पत्तिकारणं सर्वभूतान्तरात्मानमीश्वरं, स्वकर्मणा=स्वभावजेन स्वेन स्वेन कर्मणाऽभ्यर्च्य=सम्पूज्य,कर्मफलतत्कर्तृत्वसमर्पणेन सन्तर्प्य,सिद्धिं=ब्रह्मप्राप्तिरूपां मुक्तिं,विन्दति=लभते, मानवः=मनुपुत्रो ब्राह्मणः क्षत्रियो वैश्यः शूद्र इत्यर्थः ॥४६॥

अथ मनुष्याणां निःशङ्कप्रवृत्त्यर्थं स्वभावजस्य स्वकर्मणोऽनुष्ठानं प्रशंसति—

**"श्रेयान् स्वधर्मो विगुणः, परधर्मात् स्वनुष्ठितात् ।**
**स्वभावनियतं कर्म, कुर्वन्नाप्नोति किल्बिषम्" ॥४७॥**

अर्थः—स्वधर्मः=स्वभावेन प्रकृत्या,शास्त्रेण च नियमितश्चोदितः स्वो धर्मः, स्वकीयः कर्माख्यो धर्मः,विगुणः=अपि-शब्दोऽत्र योजनीयः, आचरणेऽनुष्ठाने सुकरत्वगुणहीनोऽपि, सुखेनानुष्ठातुमशक्योऽपि, स्वनुष्ठितात् = सुखेनानायासेनानुष्ठीयमानात्, अनुष्ठाने सुकरत्वगुणसहितात्,परधर्मात्=परो धर्मः स्वधर्माद् भिन्नो धर्मः,तस्मात् भिक्षाचर्यादिलक्षणात् परकीयधर्मात्, श्रेयान् = प्रशस्यतरः, अतिशयेन शोभनः । अपि च, स्वभावनियतं=स्वभावेन प्रकृत्या नियमितं स्वभावजं कर्म=स्वं स्वं कर्म,स्वीयं स्वीयं धर्मं, कुर्वन्=अनुतिष्ठन् मनुष्यः,किल्बिषं=पापं, नाप्नोति=न प्राप्नोतीत्यर्थः ॥४७॥

किञ्च—

**"सहजं कर्म कौन्तेय !, सदोषमपि न त्यजेत् ।**
**सर्वारम्भाः हि दोषेण, धूमेनाग्निरिवावृताः" ॥४८॥**

अर्थः—कौन्तेय=हे कुन्तीपुत्र ! सहजं=स्वभावजं, कर्म=स्वकं कर्म, सदोषमपि=हिंसादिदोषसहितमपि, न त्यजेत्=हिंसादिदोषभयेन मनुष्यो न जह्यात्,स्वकीयं धर्मं परित्यज्य परकीयं धर्मं नानुतिष्ठासेत्। हि=यस्मात्, सर्वारम्भाः=आरभ्यन्ते इत्यारम्भाः कर्माणि, सर्वारम्भाः सर्वाणि कर्माणि,भिक्षाटनपर्यन्तानि,दोषेण=दैन्यावमानादिनानाविधेन दोषेणावृताः=आच्छादिताः व्याप्ताः विद्यन्ते, तत्र दृष्टान्तः-धूमेन = धूमदोषेण, इव=यथाऽग्निः=वह्निः । यथा धूमेन दोषेणावृतोऽपि वह्निर्न कश्चित्कदाचिद् दोषयुक्तोऽयमिति मत्वा परित्यज्यते, तथा सदोषमपि सहजं कर्म,सदोषं बुद्ध्वाऽपि न परित्यजेदित्यर्थः ॥४८॥

ननु कर्मानुष्ठानेन मनुष्यो निष्कर्मा न सम्पद्यते, नैष्कर्म्याभावे च कथं ब्रह्मप्राप्तिरूपां मुक्तिमवाप्नुयात्, अतः कर्मानुष्ठानात् स्वरूपतः कर्मत्याग एव श्रेयान् ? तत्राह—

**"असक्तबुद्धिः सर्वत्र, जितात्मा विगतस्पृहः ।**
**नैष्कर्म्यसिद्धिं परमां, संन्यासेनाधिगच्छति" ॥४९॥**

अर्थः—सर्वत्र=सर्वस्मिन् कर्मणि, हिंसात्मके चाहिंसात्मके च कर्ममात्रे,असक्तबुद्धिः=कर्तृत्वाभिमानाख्यः सङ्ग सक्तिस्तद्रहिता बुद्धिरन्तःकरणं यस्य,स कर्तृत्वाभिमानशून्यान्तःकरणः, जितात्मा=वशीकृतमनाः, विगतस्पृहः=ऐहिकामुष्मिकफलतृष्णारहितः, विगता वीता स्पृहा फलविषया कांक्षा तृष्णा यस्येति तद्व्युत्पत्तेः,य एवंभूतो मनुष्यः, स सहजं स्वं स्वं कर्मानुतिष्ठन्नपि, संन्यासेन=फलसंन्यासेन, परमां=प्रकृष्टां,कर्मसंन्यासतोऽभिमतायाः नैष्कर्म्यसिद्धेरुत्तमां,नैष्कर्म्यसिद्धिं=कर्मभ्यः सर्वेभ्यो निर्गतो निष्क्रान्तो निष्कर्मा, तस्य भावो नैष्कर्म्यं निष्कर्मत्वमकर्मत्वं, तस्य सिद्धिर्निष्पत्तिस्तामधिगच्छति=प्राप्नोति । यस्तावन्मनुष्यः सहजानि सर्वाणि कर्माण्यनुतिष्ठति, तेषां फलमभिलषति, कर्तारं चात्मानं जानाति,स कर्मानुष्ठानेन निष्कर्मा न सम्पद्यते । यस्य नास्ति फलस्पृहा, नास्ति च कर्तृत्वाभिमानाख्यः सङ्गः,स कर्माण्यनुतिष्ठन्नपि निष्कर्मैव । तत्प्रयोजकयोः फलसङ्गाभावयोः सद्भावात् । सति हि फलाभिलाषे,सति च कर्तृत्वाभिमानाख्ये सङ्गेऽनुष्ठीयमानं कर्म, कर्म भवति, नासति तस्मिन्नुभयस्मिन् । तुषहीनतण्डुलवत् फलाङ्कुराजनकत्वात् । तुषौ फलसङ्गौ । कर्माणि तण्डुलाः । सर्वेषां कर्मणां संन्यासस्य कर्तुमशक्यत्वात् तेन या नैष्कर्म्यसिद्धिरधिगम्यते,सा कर्मफलसंन्यासतो जायमानाया नैष्कर्म्यसिद्धेर्न परमेति न स्वरूपतः कर्मत्यागः कर्मानुष्ठानाच्छ्रेयान्, किन्तु तदपेक्षया कर्मानुष्ठानमेव श्रेयः, परमायाः नैष्कर्म्यसिद्धेरधिगमस्य प्रयोजकत्वादित्यर्थः ॥४९॥

अथ परमां नैष्कर्म्यसिद्धिं प्राप्तस्य ब्राह्मणादेः कर्मयोगिनो मनुष्यस्य ब्रह्मप्राप्तिप्रकारं दिदर्शयिषुराह—

**"सिद्धिं प्राप्तो यथा ब्रह्म, तथाऽऽप्नोति निबोध मे ।**
**समासेनैव कौन्तेय!, निष्ठा ज्ञानस्य या परा" ॥५०॥**

अर्थः—कौन्तेय = हे कुन्तीपुत्र ! सिद्धिं = परमां नैष्कर्म्यसिद्धिं, प्राप्तः = अधिगतो मनुष्यो यथा = येन प्रकारेण, ब्रह्म = परं ब्रह्म परमात्मानम्, आप्नोति = प्राप्नोति, परब्रह्मप्राप्तिरूपां सिद्धिमधिगच्छति, तथा = तं प्रकारं, क्रमं, मे = मम वचनात् समासेनैव = संक्षेपेणैव, नतु विस्तरेणेत्यवधारणार्थः, निबोध = निश्चयेन बुध्यस्व, या = यका ब्रह्मप्राप्तिः, ज्ञानस्य = ब्रह्मज्ञानस्य, परा = परमा, निष्ठा = काष्ठा, पर्यवसानभूमिः, यत्र ज्ञानस्य तस्य सर्वं कृत्यं परिसमाप्यते, इत्यर्थः ॥ ५० ॥

अथ प्रतिज्ञातं ब्रह्मप्राप्तिप्रकारमाह पञ्चभिः—

**"बुद्ध्या विशुद्धया युक्तो, धृत्याऽऽत्मानं नियम्य च ।**
**शब्दादीन् विषयाँस्त्यक्त्वा, रागद्वेषौ व्युदस्य च" ॥५१**

अर्थः—विशुद्धया = रजस्तमोमलरहितया, निर्मलया, बुद्ध्या = पूर्वोक्त्या सात्त्विक्या बुद्ध्या, युक्तः = संयुक्तः समन्वितः, च = तथा धृत्या = पूर्वोक्त्या सात्त्विक्या धृत्या, आत्मानम् = अन्तःकरणं मनो, नियम्य = निरुध्य, वशीकृत्य, शब्दादीन् = शब्द आदिर्येषां, ते शब्दादयस्तान् शब्दस्पर्शरूपरसगन्धान्, विषयान् = श्रोत्रादीन्द्रियार्थान्, त्यक्त्वा = मुक्त्वा, यथाशास्त्रं वर्जयित्वा, तेषु सक्तिं परिहाय, च = तथा, रागद्वेषौ = शब्दादिविषयविषयौ प्रीत्यप्रीत्यौ, व्युदस्य = निरस्य, विषयेष्विष्टानिष्टबुद्धिमकृत्वा, बुद्ध्या विशुद्धया युक्तो ब्रह्मभूयाय कल्पते, इति तृतीयेनान्वयः ॥ ५१ ॥

**"विविक्तसेवी लघ्वाशी, यतवाक्कायमानसः ।**
**ध्यानयोगपरो नित्यं, वैराग्यं समुपाश्रितः" ॥५२॥**

अर्थः—विविक्तसेवी = विविक्तदेशसेवी, विविक्तं शुद्धं स्वभावतो वा संस्कारतो वा निर्मलं, चित्तप्रसादकरं, देशं स्थानं सेवितुं शीलमस्येति तद्व्युत्पत्तेः, लघ्वाशी = लघ्वशनशीलः, लघु मितं हितं मेध्यं सात्त्विकं भोजनमशितुं भोक्तुं शीलमस्येति तद्व्युत्पत्तेः, यतवाक्कायमानसः = संयतवाग्देहचित्तः, वशीकृतशरीरेन्द्रियमनाः, वाक् च कायश्च मानसं च, यतानि संयतानि वशीकृतानि यस्येति तद्व्युत्पत्तेः । नित्यं = सर्वदा, ध्यानयोगपरः = सर्वेषु भूतेष्वन्तरात्मरूपेण वर्तमानस्य

ब्रह्मणश्चिन्तनं स्मरणं ध्यानं,तदेव योगः,स एव परः प्रकृष्टो यस्य,सर्वत्र-ब्रह्मैकदर्शनः,वैराग्यं=विरागभावं दृष्टादृष्टविषयतृष्णाराहित्यं, वैतृष्ण्यं, समुपाश्रितः=सम्यग् दार्ढ्येन नैश्चल्येनोपाश्रितोऽभ्युपगतः,इत्यर्थः ॥५२

"अहङ्कारं बलं दर्पं, कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो, ब्रह्मभूयाय कल्पते" ॥५३॥

अर्थः—अहङ्कारं=सर्वोत्कृष्टताभिमानं, बलं=बलात्कारं हठं, दर्पं=गर्वं,कामं=विषयाभिलाषं,क्रोधं=रोषं, परिग्रहं=परद्रव्याणां परितः सर्वतो ग्रहणं,लोभं,विमुच्य=परित्यज्य,निर्ममः=ममेदमिति बुद्धिरहितः, कर्मसु क्रियमाणेषु मदीयताबुद्धिशून्यः, शान्तः=रागद्वेषादिसर्व-विक्षेपवर्जितः,चित्तविक्षेपहेतोरिष्टानिष्टबुद्धेरभावात् सर्वथा शान्तचित्तः, एवं भूतो मनुष्यः परमां नैष्कर्म्यसिद्धिं प्राप्तो ब्रह्मभूयाय=ब्रह्मभावाय,तं, प्राप्तुं कल्पते=समर्थायते, योग्यः सम्पद्यते,इत्यर्थः ॥५३॥

"ब्रह्मभूतः प्रसन्नात्मा, न शोचति न कांक्षति ।
समः सर्वेषु भूतेषु, मद्भक्तिं लभते पराम्" ॥ ५४॥

अर्थः—ब्रह्मभूतः=ब्रह्मभावं प्राप्तो,ब्रह्मत्वमुपसम्पन्नः, प्रसन्नात्मा= प्रमुदितमनाः, सन्तुष्टचित्तः,तृप्तान्तःकरणः, जातालंप्रत्ययः,न शोचति = न नष्टमनुशोचति, न कांक्षति=नाप्राप्तं किञ्चित् प्रेप्सति,न नष्टमुद्दिश्य कदाचित् सन्तप्यते, नाप्राप्तं किञ्चिदभिलषते । सर्वेषु=समस्तेषु, भूतेषु=ब्रह्मादिस्थावरान्तेषु प्राणिषु, समः=समदर्शनः, अन्तरात्म-रूपेण समस्य समानस्य तुल्यत्वेन वर्तमानस्यैकस्य ब्रह्मणो द्रष्टा, परां=प्रकृष्टामुत्तमां तुरीयां परमप्रेमलक्षणां, मद्भक्तिं=सर्वभूतान्त-रात्मनि ब्रह्मणीश्वरे मयि भक्तिं सेवां,लभते=विन्दते । सर्वस्य प्राणि-मात्रस्य मनुष्यस्य परमप्रेमास्पदं तावदात्मा । न चात्मनोऽन्यत्र चेतनेऽचेतने वा क्वचिदस्ति तस्य परमप्रेम । स यदा सर्वभूतान्त-रात्मत्वात् ममात्माऽपि ब्रह्मैवेति बुध्यते, तदा सर्वभूतान्तरात्मनि ब्रह्मणीश्वरे मयि परमप्रेमाणं प्रपद्यते । तदेव ज्ञानपूर्वकत्वात् चतुर्थी मद्विषया परा भक्तिः, यां लभते, सर्वाणि भूतानि मद्भावनया भजते, मनसा वाचा शरीरेण सेवते, इत्यर्थः ॥५४॥

"भक्त्या मामभिजानाति, यावान् यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा, विशते तदनन्तरम्" ॥५५॥

अर्थः—भक्त्या=लब्धया तया परया भक्त्या, यावान्=स्वकीयया मायानाम्न्या त्रिगुणात्मिकया प्रकृत्या विश्वरूपेण विस्तारं गतो यत्परिमाणोऽहमस्मि, यादृशोऽहं भवामि, च=तथा, यः=स्वरूपेण योऽस्मि, क्षराक्षराभ्यामतीतः मायायाः प्रकृतेः परोऽजरोऽमरोऽनादिनिधनः सर्वभूतान्तरात्मा सर्वकर्माध्यक्षः, एकोऽद्वितीयोऽखण्डानन्दैकमूर्तिः परं ब्रह्म योऽहं भवामि, तं माम्=ईश्वरं मां, तत्त्वतः=वास्तवरूपतो विभूत्या स्वरूपेण चाभिजानाति=अभितः सर्वतः साकल्येनावगच्छति । ततः=भक्तितस्तस्याः, माम्=ईश्वरं मां, तत्त्वतः=वास्तवरूपतः, ज्ञात्वा=अवगत्य, तदनन्तरं=तत्पश्चाद्, भोगेन प्रारब्धकर्मसमाप्तौ, विशते=विशति, सरिदिव समुद्रं मां प्रविशति, "परीत्य भूतानि परीत्य लोकान्, परीत्य सर्वाः प्रदिशो दिशश्च । उपस्थाय प्रथमजामृतस्य, आत्मनाऽऽत्मानं संविवेश" (यजु०।११) इति याजुषमन्त्राद् मद्रूपो भवति, सम्पद्यते, इत्यर्थः ॥ ५५ ॥

अथेश्वरभक्तेर्ज्ञानप्राप्तिद्वारा ब्रह्मप्राप्तिरूपमोक्षहेतुत्वमाख्यायार्जुनस्य भक्तिपूर्वककर्मयोगे प्रवृत्तिदार्ढ्यार्थं पुनस्तस्यास्तद्धेतुत्वं प्रत्याययति—

"सर्वकर्माण्यपि सदा, कुर्वन् मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति, शाश्वतं पदमव्ययम्" ॥५६॥

अर्थः—भिन्नक्रमोऽपिः, कुर्वन्नित्यस्याग्रे सम्बध्यते । सर्वकर्माणि=सर्वाणि समस्तानि हिंसात्मकानि वाऽहिंसात्मकानि वा, कर्माणि=प्रकृत्या शास्त्रेण च नियमितानि नित्यान्यवश्यकर्तव्यानि स्ववर्णोचितानि कर्माणि, सदा=सर्वदा, यावज्जीवं, कुर्वन्नपि=निर्वर्तयन्नपि, मद्व्यपाश्रयः=अहं सर्वभूतान्तरात्मा परं ब्रह्मेश्वरो व्यपाश्रयः=व्यपाश्रयणीयो भक्तव्यत्वेन समाश्रयणीयो यस्य, स मामेकमीश्वरं भक्तव्यत्वेनोपाश्रितः, मदनन्यभक्तः, मत्प्रसादात्=ज्ञानप्राप्तिलक्षणात् मदनुग्राहात्, शाश्वतं=सनातनम्, आदिरहितम्, अव्ययं=व्ययो विनाशः,

तद्वर्जितं, पदं=पत्तव्यं परं ब्रह्म परमात्मानं मामीश्वरं, पद्यते गम्यते इति तद्व्युत्पत्तेः, अवाप्नोति=प्राप्नोतीत्यर्थः ॥५६॥

ननु मयाऽर्जुनेन सम्प्रति किं विधेयं ? तत्राह—

**"चेतसा सर्वकर्माणि, मयि संन्यस्य मत्परः ।**
**बुद्धियोगमुपाश्रित्य, मच्चित्तः सततं भव" ॥५७॥**

अर्थः—चेतसा=अध्यात्मचेतसा, आन्तरेण मनसा, निष्कपटभावेन, सर्वकर्माणि=समस्तानि हिंसाहिंसात्मकानि स्ववर्णोचितानि क्रियमाणानि कर्माणि, मयि=सर्वभूतान्तरात्मनीश्वरे मयि, संन्यस्य=संस्थाप्य, मह्यं समर्प्य, मत्परः=अहमीश्वरः परः प्रकृष्टः प्राप्तव्यो भक्तव्यो यस्य, स निष्कामभावेन मत्परायणो मदनन्यभक्तः । बुद्धियोगं=सिद्ध्यसिद्ध्योर्या समत्वबुद्धिः, तल्लक्षणो योगः, बुद्धियोगस्तम्, उपाश्रित्य = समाश्रित्य, स्ववर्णोचितं कर्मजातं कुर्वाणः, सततं = नित्यं, मच्चित्तः=मदेकचित्तः, " ब्रह्मार्पणं ब्रह्म हविः " इति न्यायेनेश्वर एव सर्वमित्येवं मदाकारचेतस्को भव=एधीत्यर्थः ॥ ५७ ॥

अथोक्तस्य करणे गुणमकरणे च दोषमाह—

**"मच्चित्तः सर्वदुर्गाणि, मत्प्रसादात् तरिष्यसि ।**
**अथ चेत् त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि" ॥५८॥**

अर्थः—मच्चितः = बुद्धियोगमुपाश्रित्य स्ववर्णोचितं कर्मजातं कुर्वाणोऽपि सर्वदा मच्चित्तः, सर्वदुर्गाणि=सर्वाणि समस्तानि दुर्गमाणि दुःखेनातिगन्तव्यानि दुस्तराणि नरकादिदुःखहेतुभूतानि हिंसाकृतानि पापानि, मत्प्रसादात्=मदनुग्रहात्, तरिष्यसि=पारयिष्यसि अतिक्रमिष्यसि, । अथ=इदानीं, चेत्=यदि, त्वम्= अर्जुनस्त्वम्, अहङ्कारात्=पाण्डित्याभिमानात्, अहं स्वयं कार्याकार्यविवेकज्ञः किमर्थमिह परोक्तं शृणुयामिति गर्वात्, न श्रोष्यसि=मदुक्तं नाकर्णयिष्यसि, तदा विनङ्क्ष्यसि=विनाशः श्रीहीनता, तां प्राप्स्यसि, श्रीहीनो दरिद्रो भिक्षुर्भविष्यसीत्यर्थः ॥ ५८ ॥

किञ्च—

"यदहङ्कारमाश्रित्य, न योत्स्ये इति मन्यसे ।
मिथ्यैष व्यवसायस्ते, प्रकृतिस्त्वां नियोक्ष्यति" ॥५९॥

अर्थः—अहङ्कारं=पाण्डित्याभिमानमाश्रित्य=आलम्ब्य, न योत्स्ये=न सम्प्रहरिष्ये,न युद्धं करिष्ये,इति=एतद्,यद्=यकद्,मन्यसे=प्रतिजानाषे, निश्चिनुषे,व्यवसेषीयसे, एष=अयं, ते=तव, व्यवसायः=निश्चयो, मिथ्या=मृषा, वितथ एव, यत्कारणं, प्रकृतिः=स्वभावस्त्वां नियोक्ष्यति=बलात् प्रवर्तयिष्यति, युद्धं कारयिष्यतीत्यर्थः ॥५९॥

अथोक्तं प्रकृतिनियोगं विशदयति—

"स्वभावजेन कौन्तेय !, निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्, करिष्यस्यवशोऽपि तत्" ॥६०॥

अर्थः—कौन्तेय=हे कुन्तीपुत्र ! स्वेन=स्वकीयेन, स्वभावजेन=प्रकृतिजेन,कर्मणा=शौर्यादिकर्मणा, निबद्धः=नितरां बद्धः,नियन्त्रितः, यत्=युद्धाख्यं यत् कर्म, मोहात्=मिथ्याप्रत्ययाद् अविवेकात्,कर्तुं=विधातुं नेच्छसि=न कांक्षसि, तत्=युद्धाख्यं तत् कर्म, अवशोऽपि=नेच्छन्नपि, करिष्यसि=विधास्यसि, निर्वर्तयिष्यसीत्यर्थः ॥६०॥

अथैवम्भूतस्य प्रकृतितन्त्रस्यार्जुनस्य कर्तव्यमाह द्वाभ्याम्—

"ईश्वरः सर्वभूतानां, हृद्देशेऽर्जुन ! तिष्ठति ।
भ्रामयन् सर्वभूतानि, यन्त्रारूढानि मायया" ॥६१॥

अर्थः—अर्जुन=हे अर्जुन ! ईश्वरः=प्रकृतितत्कार्याणां सर्वेषां स्वामी नियन्ता परमात्मा, यन्त्रारूढानि=यन्त्राणि शरीराणि, तान्यारूढानि, तेष्वात्मीयत्वाभिमानेनाधिष्ठितानि, सर्वभूतानि=सर्वाणि सकलानि ब्रह्मादिस्तम्बान्तानि भूतानि प्राणिनः,मायया=मायानाम्न्या स्वीयया सत्त्वादिगुणमय्या प्रकृत्या,भ्रामयन्=सूत्रादियन्त्रारूढाः दारुनिर्मिताः पुत्तलिकाः सूत्रधार इव, तत्तत्कर्मसु प्रवर्तयन्, सर्वभूतानां=सर्वेषां प्राणिनां ब्रह्मादिस्तम्बान्तानां, हृद्देशे=हृदयप्रदेशेऽन्तःकरणे, तिष्ठति=अन्तर्यामिरूपेण निवसतीत्यर्थः ॥६१॥

"तमेव शरणं गच्छ, सर्वभावेन भारत! ।
तत्प्रसादात् परां शांतिं, स्थानं प्राप्स्यसि शाश्वतम्" ॥६२॥

अर्थः—भारत=हे भरतसन्तान !, तमेव=अमुमेव, सर्वप्राणिनां हृदयदेशेऽन्तर्यामिरूपेण स्थितं सर्वेषां नियन्तारं प्रशासितारं स्वामिनमीश्वरं, नान्यं कञ्चिदित्यवधारणार्थः, शरणम्=आश्रयं, सर्वभावेन=सर्वात्मना मनसा वाचा कर्मणा, गच्छ=श्रयस्व, सर्वदुःखनिवृत्त्यर्थं श्रय। तत्प्रसादात्=तदीश्वरस्यानुग्रहात्, परां=प्रकृष्टां, शान्तिं=लोके, दुःखनिवृत्तिं, परलोके च शाश्वतं=शश्वद्ध्रुवं नित्यं, स्थानं=विश्रामस्थानं, यत्र गताः न पुनरावर्तन्ते, तद् विष्णोः परमं पदं नाम स्वरूपं, परं ब्रह्म, प्राप्स्यसि=गमिष्यसीत्यर्थः ॥६२॥

अथ गीताशास्त्रमुपसंहरन्नाह—

"इति ते ज्ञानमाख्यातं, गुह्याद्गुह्यतरं मया।
विमृश्यैतदशेषेण, यथेच्छसि तथा कुरु" ॥ ६३ ॥

अर्थः—इति=अनेन प्रकारेण, ते=तुभ्यमर्जुनाय, मया=कृष्णेन मयका, गुह्यात्=रहस्याद्, गुह्यतरम्=अतिशयेन रहस्यं, ज्ञानं=कर्मयोगविषयं ज्ञानशास्त्रं, ज्ञायतेऽनेनेति तद्व्युत्पत्तेः, आख्यातं=मन्त्रब्राह्मणारण्यकाख्याच्छास्त्रादाकृष्य कथितम्, उपदिष्टम्। एतद्=इदं मयाऽऽख्यातं ज्ञानं, कर्मयोगज्ञानशास्त्रम्, अशेषेण=निःशेषेण साकल्येन, विमृश्य=विचार्य, पर्यालोच्य, यथेच्छसि=यथा त्वं कांक्षसि, तथा कुरु=विधेहि, युध्यस्व गृहं गृहं वा भिक्षस्वेत्यर्थः ॥ ६३ ॥

अथाख्यातस्य ज्ञानस्याशेषेण सहसा विमर्ष्टुमशक्यत्वात् स्वयं तत्सारं सङ्गृह्य वक्तुमुपक्रमते—

"सर्वगुह्यतमं भूयः, शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति, ततो वक्ष्यामि ते हितम्" ॥६४॥

अर्थः—सर्वगुह्यतमं=सर्वेभ्यो गुह्येभ्योऽतिशयेन गुह्यम्, अत्यन्तं रहस्यं, रहस्यतमविषयत्वादतिशयितं गोप्यं, मे=मम, परमं=प्रकृष्टं वचः=वाक्यं, भूयः=असकृदुक्तमपि पुनः, शृणु=सावधानो भूत्वा

निशामय । मे=मम, दृढं=गाढमेकान्तमिष्टः=प्रियोऽसि=भवसि, इति=यतः,यस्मात् , ततः=तस्मात् ,ते=तव, हितं=हितकरं वचो,वक्ष्यामि=कथयिष्यामि, उपदेक्ष्यामीत्यर्थः ॥ ६४ ॥

अथ वक्ष्यामीति यत् प्रतिज्ञातं,तमेव गुह्यतमं कर्मयोगं सफलमुपदिशति-

**"मन्मना भव मद्भक्तो, मद्याजी मां नमस्कुरु ।**
**मामेवैष्यसि सत्यं ते, प्रतिजाने प्रियोऽसि मे" ॥६५**

अर्थः-मन्मनाः=सर्वेषु भूतेष्वन्तरात्मरूपेण वर्तमाने परे ब्रह्मणीश्वरे मयि मनश्चित्तमन्तःकरणं यस्य, स मच्चित्तः, सर्वत्र मद्गोचरचेतस्कः, भव=एधि, मद्भक्तः=सर्वात्मकस्येश्वरस्य मम भक्तः, परमानुरागेण विश्वरूपस्य मम सेवको भव, मद्याजी=मदाज्ञापितैर्वेदविहितैः स्ववर्णोचितैः कर्मभिः सर्वभूतहृदयशायिनमन्तर्यामिणमीश्वरं मां यष्टुं पूजयितुं शीलमस्य स स्ववर्णोचितकर्मानुष्ठानेन नित्यं मत्पूजनपरो भव, मां=ब्रह्मादिस्थावरान्तानां सर्वेषां भूतानां प्रशासितारं नियन्तारं स्वामिनमीश्वरं मां, नमस्कुरु=प्रातः सायं नमस्कारं कुरुष्व, उपास्स्व, प्रार्थयस्व, नान्यं कञ्चिद् दारुपाषाणाग्निप्रभृतिकम् । एवं वर्तमानो, मामेव=मां परं ब्रह्मेश्वरमेव, न नरकं,न स्वर्गं,न वा कञ्चिदन्यमित्यवधारणार्थः, ऐष्यसि=आगमिष्यसि, समुद्रं सरिदिव,सत्यं=यथार्थं यथा भवति तथा, ते=तुभ्यं, तवार्थं, प्रतिजाने=संगिरे,प्रतिज्ञां कुर्वे, यतस्त्वं मे=मम, प्रियः=इष्टः परमप्रेमविषयोऽसि=भवसीत्यर्थः ॥६५॥

अथोक्तमेवार्थं द्रढयन्नाह—

**"सर्वधर्मान् परित्यज्य, मामेकं शरणं व्रज ।**
**अहं त्वा सर्वपापेभ्यो, मोक्षयिष्यामि मा शुचः" ॥६६॥**

अर्थः—सर्वधर्मान्=सर्वान् समस्तान् धर्मान् प्रकृत्या शास्त्रेण च वर्णाश्रमधर्मत्वेन नियमितान् चोदितान् नित्यनैमित्तिकभेदभिन्नान् कर्मविशेषान्,परित्यज्य=परिमुच्य,शरणत्वेनानादृत्य, "एभिरेव कर्मभिर्धर्मभिः सर्वैर्मम श्रेयो वाऽश्रेयो वा भविष्यति" इत्येवं सर्वधर्मविषयां शरणताबुद्धिं परिहाय,माम्=ईश्वरं मामेकम्=अद्वितीयं,शरणम्=आश्रयं, व्रज=गच्छ, आश्रयस्व, मदेकशरणो भव, यदाज्ञापयामि तत् कुरुष्व,

कर्तृत्वाभिनिवेशं फलासङ्गं च हित्वा केवलकर्तव्यबुद्ध्या स्ववर्णोचितानि हिंसात्मकानि वाऽहिंसात्मकानि वा सर्वाणि कर्माणि निर्वर्तय। अहम्=ईश्वरोऽहं,त्वा=त्वां, सर्वपापेभ्यः=बन्धुवधादिनिमित्तेभ्यो दुःखहेतुभ्यो विश्वेभ्यो दुरितेभ्यो मोक्षयिष्यामि=मोचयिष्यामि, विनिर्मुक्तं करिष्यामि, मा शुचः=मा शोकं कृथाः, बन्धुबधादिनिमित्तं पापं स्मारं स्मारं मा भैषीरित्यर्थः ॥ ३६ ॥

समाप्तं गीताशास्त्रम, इदानीं तस्य सम्प्रदायविधिमाह—

**"इदं ते नातपस्काय, नाभक्ताय कदाचन ।**

**न चाशुश्रूषवे वाच्यं, न च मां योऽभ्यसूयति" ॥६७**

अर्थः—इदम् = एतद् गीताशास्त्रं, ते=तव, कर्तरि षष्ठी, कदाचन=कस्यामप्यवस्थायाम्, अतपस्काय=न विद्यते तपो यस्य, तस्मै तपोरहिताय, असंयतेन्द्रियाय, न वाच्यं=न वक्तव्यं, नोपदेष्टव्यम्, नाभक्ताय=न मद्भक्तिहीनाय तपस्विनेऽपि कदाचन वाच्यं=वक्तव्यम् । च=तथाऽशुश्रूषवे=श्रोतुमनिच्छवे श्रद्धाहीनाय, न कदाचन वक्तव्यं, च=तथा, यः=यो मनुष्यः,मां=वासुदेवं कृष्णं माम्,अभ्यसूयति=गुणेषु दोषारोपेण निन्दति,तस्मा अपि कदाचन न वाच्यम्। यस्तपस्वी, भक्तः, शुश्रूषुर्ममानसूयुश्च, तस्मै गीताशास्त्रमेतदुपदेष्टव्यमित्यर्थः ॥६७॥

अथ सम्प्रदानं कुर्वतो व्याख्यातुः फलमाह—

**"य इमं परमं गुह्यं, मद्भक्तेष्वभिधास्यति ।**

**भक्तिं मयि परां कृत्वा, मामेवैष्यत्यसंशयम्" ॥६८॥**

अर्थः—यः=यो मनुष्यः, परमं=प्रकृष्टं,गुह्यं=रहस्यं,गोपनीयम्, इमम्—एतं गीताशास्त्रनामानमावयोः संवादं, मद्भक्तेषु=मयि वासुदेवे कृष्णे भक्तिमत्सु,श्रद्धया जिज्ञासया च समुपागतेषु,अभिधास्यति=अभिव्याहरिष्यति, सार्थं साभिप्रायं व्याख्यास्यति सः, मयि=ईश्वरे मयि परां=प्रकृष्टामुच्चतमां भक्तिं=मद्भक्तेषु गीताशास्त्राभिधानलक्षणां भक्तिं, कृत्वा=विधाय, माम्=ईश्वरं माम्, एव=निश्चयेन, एष्यति=गमिष्यति,कर्मयोगी भूत्वा प्राप्स्यति,असंशयं=नास्त्यत्र संशयः इत्यर्थः ॥

किञ्च—

"न च तस्मान्मनुष्येषु, कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि" ॥६९॥

अर्थः—तस्मात्=अमुष्माद्, मद्भक्तेषु गीताशास्त्रस्य व्याख्यातुः पुरुषात्, अन्यः=अपरः, मनुष्येषु=सर्वेषु मनुष्येषु, कश्चित्=कोऽपि, मे=मम, प्रियकृत्तमः=अतिशयेन प्रियकृत्, प्रियस्येष्टस्य कर्ता, न च=नैवास्ति । न च=नापि, भुवि=भूमौ तस्मात्=अमुष्माद्, मद्भक्तेषु गीताशास्त्रस्य व्याख्यातुः पुरुषादन्यः=भिन्नः कश्चित्,मे=मम, प्रियतरः=अतिशयेन प्रियः, प्रियस्येष्टस्य कर्ता, भविता=भविष्यतीत्यर्थः ॥६९॥

अथ व्याख्यातुः फलमुक्त्वाऽध्येतुः फलमाह—

"अध्येष्यते च य इमं, धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः" ॥७०॥

अर्थः—च=किञ्च, यः=यो मनुष्यः, इमम्=एतं गीताशास्त्रनामानं, धर्म्यं=धर्मादनपेतं, धर्मः कर्मयोगः, तत्प्राप्तिसाधनम्, आवयोः=कृष्णार्जुनयोर्नौ संवादं=संलापम्, अध्येष्यते=सार्थं साभिप्रायं पापठिष्यते, तेन=अमुनाऽध्येत्राऽहं=वासुदेवोऽहं, ज्ञानयज्ञेन=द्रव्यमययज्ञात् श्रेष्ठेन ज्ञानरूपयज्ञेन, इष्टः=पूजितः, स्यां=भवेयमिति=एषा, मे=मम, मतिः=सम्मतिर्निश्चय इत्यर्थः ॥७०॥

अथ श्रोतुः फलमाह—

"श्रद्धावाननसूयश्च, शृणुयादपि यो नरः ।
सोऽपि मुक्तः शुभांल्लोकान्,प्राप्नुयात् पुण्यकर्मणाम्" ॥

अर्थः—यो नरः=मनुष्यः, श्रद्धावान्=श्रद्दधानः, श्रवणेऽतिशयादरबुद्धिः, च=तथा, अनसूयः=न विद्यतेऽसूया गुणेषु दोषारोपिका बुद्धिर्यस्य, सोऽसूयादोषरहितः, शृणुयादपि=प्रवचनाध्ययनाभावेपि केवलं शृणुयात्, एकाग्रचित्तो भूत्वा गीतार्थं गृह्णीयात्, सोऽपि=स नरोऽपि, मुक्तः=पापान्मुक्तः, शुभान्=प्रशस्तान् रमणीयान्, पुण्यकर्मणां=पुण्यकर्मकर्तॄणां कर्मयोगिनां लोकान्=गृहान्,

लोक्यते सर्वभूतान्तरात्मा ब्रह्म येष्विति तद्व्युत्पत्तेः, कुलानि, प्राप्नुयात्=तेषां कुलेषु जन्मावाप्नुयादित्यर्थः ॥ ७१ ॥

अथ श्रोतुरर्जुनस्य गीताशास्त्रार्थग्रहणाग्रहणे ज्ञातुमिच्छुर्भगवान् श्रीकृष्णः पृच्छति—

**"कच्चिदेतच्छ्रुतं पार्थ !, त्वयैकाग्रेण चेतसा।**
**कच्चिदज्ञानसम्मोहः, प्रनष्टस्ते धनञ्जय !" ॥७२॥**

अर्थः—पार्थ=हे पृथापुत्र ! कच्चित्=प्रश्नार्थमव्ययं, किम्, एकाग्रेण=समाहितेन, चेतसा=मनसा, एतद्=इदं मयोक्तं गीताशास्त्रं, श्रुतम्=अर्जुनेन त्वयाऽऽकर्णितम्, अर्थतो गृहीतम्। धनञ्जय=हे धनानां जेतः ! कच्चित्=किं, ते=तव, अज्ञानसंमोहः=अज्ञानसम्भूतः आत्माज्ञानसमुत्थितः संमोहो विपर्ययो भ्रमः स्वधर्मे युद्धेऽधर्मप्रत्ययः, प्रनष्टः=प्रकर्षेण पुनरुत्पत्तिराहित्येन नाशं प्राप्तः, प्रध्वस्तः, इत्यर्थः॥७२॥

अथ पृष्टोऽर्जुनः प्रतिवक्ति—

"अर्जुन उवाच"।

**"नष्टो मोहः स्मृतिर्लब्धा, त्वत्प्रसादान्मयाऽच्युत !।**
**स्थितोऽस्मि गतसन्देहः, करिष्ये वचनं तव" ॥७३॥**

अर्थः—अच्युत=हे सर्वदा-स्वरूपस्थित ! त्वत्प्रसादात्=त्वदनुग्रहात्, त्वदुपदेशजाद्दात्मज्ञानात्, मोहः=आत्माज्ञानसमुत्थितो मोहो विपर्ययः, धर्मेऽधर्मप्रत्ययलक्षणो भ्रमो नष्टः=प्रध्वस्तः, स्मृतिः=आत्मगोचरा स्मृतिर्लब्धा=प्राप्ता। गतसन्देहः=गतो विगतः स्वबन्धुबधादिविषयः संशयो यस्य,स निवृत्तसर्वसंशयः,स्थितोऽस्मि=उत्थितोऽस्मि, तव=ते, वचनं=युद्धादिकर्तव्यताविषयं वाक्यं, करिष्ये=विधास्ये, पालयिष्ये, योत्स्ये, शत्रून् सम्प्रहरिष्ये, इत्यर्थः ॥७३॥

परिसमाप्तः कृष्णार्जुनसंवादात्मकः शास्त्रार्थः, तमनुसंन्दधानः सञ्जयो धृतराष्ट्रमाह कथासम्बधप्रदर्शनार्थम्—

**"इत्यहं वासुदेवस्य पार्थस्य च महात्मनः।**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम्" ॥ ७४ ॥**

अर्थः—इति=एवम्, अमुना प्रकारेण वासुदेवस्य=वसुदेवसूनोः

कृष्णस्य, च=तथा, महात्मनः=अपरिच्छिन्नमनसो, विशालहृदयस्य, पार्थस्य=पृथापुत्रस्यार्जुनस्य, इमम्=एतं, त्वां प्रति प्रागुक्तम्, अद्भुतम्=आश्चर्यं, पूर्वं कुत्रापि न श्रुतमलौकिकं, रोमहर्षणं=रोमाञ्चकरं, रोमाणि हृष्यन्ति पुलकीभवन्त्यनेनेति तद्व्युत्पत्तेः, संवादं=प्रश्नोत्तर-रूपं संल्लापम्, अहं=सञ्जयोऽहम्, अश्रौषं=न्यशशाममित्यर्थः ॥७४॥

ननु संवादमिमं कथमश्रौषीः, किंविषयं चाश्रौषीः? तत्राह—

"व्यासप्रसादाच्छ्रुतवानिमं गुह्यमहं परम्।
योगं योगेश्वरात् कृष्णात्, साक्षात् कथयतः स्वयम्" ॥७५

अर्थः—व्यासप्रसादात्=व्यासस्य कृष्णद्वैपायनस्यानुग्रहाद्, इमम्=एतं, परं=प्रकृष्टं, सर्वोत्कृष्टं, गुह्यं=रहस्यं, योगं=कर्मयोगं, कर्मयोगविषयं संवादं, स्वयम्=आत्मना स्वेन, साक्षात्=प्रत्यक्षं, कथयतः=निगदतः प्रब्रुवतो योगेश्वरात्=योगाः योगिनः कर्मयोगिनः, अर्श आद्यच्, तेषां योगिनां कर्मयोगिनामीश्वरात्, परमकर्मयोगिनः, कृष्णात्=वसुदेवापत्यात् कृष्णाद्, अहं=सञ्जयोऽहं, श्रुतवान्=अश्रौषम्, आचकर्णमित्यर्थः ॥ ७५ ॥

अथ तत्स्मरणजं हर्षं वर्णयति—

"राजन्! संस्मृत्य संस्मृत्य, संवादमिममद्भुतम्।
केशवार्जुनयोः पुण्यं, हृष्यामि च मुहुर्मुहुः" ॥७६॥

अर्थः—च=किञ्च, राजन्=हे राजन्! हे धृतराष्ट्र! इमम्=एतं, पुण्यं=पवित्रं, पावनम्, अद्भुतम्=अलौकिकं, केशवार्जनयोः=वसुदेवपाण्डुपुत्रयोः, संवादं=संल्लापं, संस्मृत्य संस्मृत्य=स्मारं स्मारं, मुहुर्मुहुः=पुनःपुनर्हृष्यामि=तृप्यामि, प्रीणामि, मोमुदीमीत्यर्थः ॥७६॥

अथार्जुनाय दर्शितं विश्वरूपमनुसन्दधानः प्राह—

"तच्च संस्मृत्य संस्मृत्य, रूपमत्यद्भुतं हरेः।
विस्मयो मे महान् राजन्!, हृष्यामि च पुनः पुनः" ॥७७

अर्थः—च=किञ्च, राजन्=हे राजन्! हरेः=श्रीकृष्णस्य, तद्=यदर्जुनाय दर्शितं तद्, अत्यद्भुतं=नितान्तालौकिकं, भृशमाश्चर्य्यं, रूपं=विश्वरूपं, संस्मृत्य संस्मृत्य=स्मृत्वा स्मृत्वा, मे=मम, महान्=अपरि-

मितोऽपरिच्छिन्नो विस्मयः=किमिदमदृष्टपूर्वमिति चित्तचमत्कारो जायते, च=तथा, पुनःपुनः=वारं वारं हृष्यामि=हर्षमनुभवामि,नन्दामीत्यर्थः॥७७॥

अथ जयपराजयविषयमात्मनिश्चयमाह—

"यत्र योगेश्वरः कृष्णो, यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम" ॥७८॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे संन्यासमोक्षयोगो नामाष्टादशोऽध्यायः ॥१७॥

अर्थः—यत्र=यस्मिन् पक्षे, योगेश्वरः=कर्मयोगेश्वो योगमायास्वामी श्रीकृष्णः,यत्र=यस्मिन् पक्षे,धनुर्धरः=गाण्डीवधनुर्धर्त्ता,पार्थः=पृथापुत्रोऽर्जुनः, तत्र=तस्मिन् पक्षे, श्रीः=राज्यलक्ष्मीः, विजयः=शत्रुपराजयनिमित्त उत्कर्षः, भूतिः=विभूतिर्धनधान्यादिसम्पत्तिः, ध्रुवा=निश्चला,नीतिः=नयो,न्यायः,इत्येषा,मम=मे,मतिः=बुद्धिर्निश्चय इत्यर्थः७८

यो दर्शनेषु सर्वेषु वेदान्तादिषु विस्तराम् ।
अकरोद् वैदिकीं वृत्तिं, मूर्तिपूजामथापराम् ॥ १ ॥
सन्ध्यायाः वैदिकं भाष्यमथो स्वाध्यायसंहिताम् ।
आतनोद् वेदसर्वस्वं, श्रीलां च जपसंहिताम् ॥ २ ॥
सोऽयं वेदविदां श्रेष्ठः, पण्डितो वैदिको मुनिः ।
निखिलशास्त्रनिष्णात उदासीनशिरोमणिः ॥ ३ ॥
कृष्णेन श्रीमता गीतां, गीतां व्याख्याय सादरम् ।
जगतां गुरवे तस्मै, प्रादाद् भक्तिपुरस्सरम् ॥ ४ ॥
पठन्तु साधवः सर्वे, पठन्तु गृहमेधिनः ।
पठन्तु व्रतिनः सर्वे, भवन्तु कर्मयोगिनः ॥ ५ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्योदासीनवर्यनिखिलशास्त्रनिष्णातपण्डितस्वामिहरिप्रसादवैदिकमुनिकृते भगवद्गीतोपनिषद्वैदिकभाष्येऽष्टादशोऽध्यायः ॥१८॥

समाप्ता भगवद्गीतोपनिषद् ।

## श्रीमन्निखिलशास्त्रनिष्णात-पण्डित-
## स्वामिहरिप्रसाद-वैदिकमुनिकृत-
## पुस्तकसूचीपत्रम् ।

| | |
|---|---|
| १—वेदान्तसूत्रवैदिकवृत्तिः— | ५।) |
| २—न्यायसूत्रवैदिकवृत्तिः— | २॥=) |
| ३—वैशेषिकसूत्रवैदिकवृत्तिः— | १॥≈) |
| ४—सांख्यसूत्रवैदिकवृत्तिः— | १) |
| ५—योगसूत्रवैदिकवृत्तिः— | ॥।) |
| ६—वैदिकसन्ध्याभाष्यम्— | ॥) |
| ७—इषे त्वा-ऊर्जे त्वा-भाष्यम्— | =) |

---

| | |
|---|---|
| ८—वेदसर्वस्व— | १) |
| ९—सामवेद-भाषानुवादसहित— | ।) |
| १०—हिन्दुजाति का परमधर्म— | ।-) |
| ११—वैदिकसन्ध्या-भाषानुवादसहित— | )॥ |
| १२—योगदर्शन-भाषानुवादसहित— | ।-) |
| १३—स्वाध्यायसंहिता अर्थात् हिन्दुधर्मपुस्तक— | ४।) |
| १४—हिन्दु-नाम— | =) |
| १५—जपसंहिता अर्थात् जपजी-भाष्य— | १।) |
| १६—भगवद्गीतोपनिषद्वैदिकभाष्यम्— | १॥) |

प्राप्तिस्थानम्—

**मैनेजर— महेशौषधालय,**

पोस्ट-बक्स नं० १५,

[illegible], [illegible] पेठ, इन्दौर।